# HITOPODESHA

BY

*VISHNU SHARMA.*

---

EDITED WITH A COMMENTARY BY

*PANDIT JIBANANDA VIDYASAGARA, B. A.*

*Superintendent Free Sanskrit College, Calcutta.*

FOURTH EDITION



CALCUTTA:

PRINTED AT THE SARASWATI PRESS

1885.

To be had from Pandit Jibananda Vidyasagara, B. A.
Superintendent Free Sanskrit College, Calcutta.

## एतानि मुद्रितसंस्कृतपुस्तकानि.

| संख्या | पुस्तकम् | मूल्यम् |
|---|---|---|
| १ | श्रीमुग्धबोधव्याकरणम् | २।० |
| २ | धातुरूपादर्शः | २ |
| ३ | शब्दस्तोममहानिधिः | १० |
| ४ | सिद्धान्तकौमुदी सरलासहिता | ११ |
| ५ | सिद्धान्तबिन्दुसारः (वेदान्त) | ॥ |
| ६ | तुलादानादिपद्धतिः (वङ्गाक्षरैः) | ४ |
| ७ | गयाश्राद्धादिपद्धतिः | १ |
| ८ | शब्दार्थरत्नम् | ॥। |
| ९ | वाक्यमञ्जरी (वङ्गाक्षरैः) | ।० |
| १० | छन्दोमञ्जरी तथा वृत्तरत्नाकर सटीक | ॥/ |
| ११ | वेणीसंहार नाटक सटीक | १ |
| १२ | मुद्राराक्षस नाटक सटीक | १॥ |
| १३ | रत्नावली नाटिका सटीक | ॥। |
| १४ | मालविकाग्निमित्र सटीक | १॥ |
| १५ | धनञ्जय विजय सटीक | ।० |
| १६ | महावीरचरितनाटक | १॥ |
| १७ | साङ्ख्यतत्त्वकौमुदी सटीक | २ |
| १८ | वैयाकरणभूषणसार | ॥। |
| १९ | लीलावती | ॥। |
| २० | बीजगणित | १ |
| २१ | शिशुपालवध सटीक (माघ) | ४ |
| २२ | किरातार्जुनीय सटीक | २॥ |
| २३ | कुमारसम्भव पूर्वखण्ड सटीक | ॥। |
| २४ | कुमारसम्भव उत्तरखण्ड | ॥ |
| २५ | अष्टकम् पाणिनीयम् | ॥। |
| २६ | वाचस्पत्यम् (वृहदभिधान) | १३२ |
| २७ | कादम्बरी सटीक | ४ |
| २८ | राजप्रशस्ति | / |
| २९ | अनुमानचिन्तामणि तथा अनुमानदीधिति | ४ |
| ३० | सर्वदर्शनसंग्रहः | १ |
| ३१ | भामिनीविलास सटीक | १ |
| ३२ | हितोपदेश सटीक | १ |
| ३३ | भाषापरिच्छेदमुक्तावलीसहित | १ |
| ३४ | बहुविवाहवाद | ।० |
| ३५ | दशकुमारचरित सटीक | १॥ |
| ३६ | परिभाषेन्दुशेखर | ॥। |
| ३७ | कविकल्पद्रुम धातुपाठः | ॥ |
| ३८ | चक्रदत्त (वैद्यक) | २॥ |
| ३९ | उणादिसूत्र सटीक | २ |
| ४० | मेदिनीकोष | १ |
| ४१ | पञ्चतन्त्रम् | १ |
| ४२ | विद्वन्मोदतरङ्गिणी (चम्पूकाव्य) | ॥ |
| ४३ | माधवचम्पू | ।/ |
| ४४ | तर्कसंग्रह | ॥ |
| ४५ | प्रसन्नराघव नाटक | १ |
| ४६ | विवेकचूडामणि | ।/ |
| ४७ | काव्यसंग्रह (संपूर्ण) | ५ |
| ४८ | लिङ्गानुशासन सटीक | । |
| ४९ | ऋतुसंहार सटीक | ।/ |
| ५० | विक्रमोर्वशी (सटीक) | १॥ |
| ५१ | वसन्ततिलक भाण | ।/ |
| ५२ | गायत्रीव्याख्या | ॥० |
| ५३ | सांख्यदर्शन (भाष्यसहित) | २ |
| ५४ | भोजप्रबन्ध | ॥। |
| ५५ | नलोदय सटीक | ॥/ |
| ५६ | ईश केन कठ प्रश्न मुण्ड माण्डूक्य (सटीक सभाष्य) | ५ |
| ५७ | छान्दोग्य सटीक सभाष्य | ५ |
| ५८ | तैत्तिरीय ऐतरेय श्वेताश्वतर (उपनिषद्) सभाष्य सटीक | २ |

# हितोपदेशः।

श्रीविष्णुशर्म्मणा सङ्कलितः।

बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया व्याख्यया समुद्भासितः।

चतुर्थसंस्करणम्।

कलिकातानगर्य्याम्

सरस्वतीयन्त्रे मुद्रितः।

इं १८८५।

# हितोपदेशः ।

सिद्धिः साध्ये सतामस्तु प्रसादात्तस्य धूर्जटेः ।
जाह्नवीफेनलेखेव यन्मूर्ध्नि शशिनः कला ॥ १ ॥

श्रुतो हितोपदेशोऽयं पाटवं संस्कृतोक्तिषु ।
वाचां सर्वत्र वैचित्र्यं नीतिविद्यां ददाति च ॥ २ ॥

अजरामरवत् प्राज्ञो विद्यामर्थं च चिन्तयेत् ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥ ३ ॥

---

(१) ग्रन्थारम्भे विघ्नविघाताय मङ्गलमाचरति सिद्धिरिति। यस्य मूर्ध्नि यन्मूर्ध्नि यच्छिरसि यस्य ललाटे इत्यर्थः । शशिनश्चन्द्रस्य कला षोडशभागैकभागः जाह्नवीफेनलेखेव जटान्तर्वर्त्तिन्या गङ्गाया फेनरेखा इव राजते इति शेषः । तस्य धूर्जटेः शिवस्य प्रसादात् अनुग्रहात् सतां साधूनां साध्ये अभिप्रेते कार्य्ये सिद्धिः अभिलषितसिद्धिरस्तु भवतु ।

(२) श्रुत इति । अयं हितोपदेशः ग्रन्थः श्रुतः अधीतः सन् संस्कृतोक्तिषु संस्कृतभाषाकथनेषु पाटवं पटुत्वं सर्वत्र सर्वस्मिन् विषये वाचां वाक्यानां वैचित्र्यं विचित्रतां विविधविषयकवाक्प्रयोगनैपुण्य-मिति यावत् । नीतिविद्यां सामादिराजनीतौ अभिज्ञताञ्च ददाति यच्छति ।

(३) अजरामरवदिति । प्रज्ञा विद्यतेऽस्येति प्राज्ञः पण्डितो जनः अजरः वार्द्धक्यहीनः अमरः मृत्युरहितः स इव विद्यां शास्त्र-ज्ञानम् अर्थं धनञ्च चिन्तयेत् उपार्जयेदित्यर्थः । मृत्युना कालेन केशेषु

सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम् ।
अहार्यत्वादनर्घत्वादक्षयत्वाच्च सर्वदा ॥ ४ ॥
सङ्गमयति विद्यैव नीचगापि नरं सरित् ।
समुद्रमिव दुर्धर्षं नृपं भाग्यमतःपरम् ॥ ५ ॥
विद्या ददाति विनयं, विनयाद् याति पात्रताम् ।
पात्रत्वाद् धनमाप्नोति, धनाद् धर्मं ततः सुखम् ॥ ६ ॥
विद्या शस्त्रस्य शास्त्रस्य, द्वे विद्ये प्रतिपत्तये ।

---

गृहीतः धृत इव आकृष्टकेश इव आसन्नमृत्युकाल इवेत्यर्थः धर्मम् आचरेत् उपार्जयेत् ।

(४) सर्व इति । सर्वदा सर्वस्मिन् काले अहार्य्यत्वात् चौरादिभिरपहर्त्तुमशक्यत्वात् अनर्घत्वात् अमूल्यत्वात् अक्षयत्वात् दानादिना अपरिक्षीयमाणत्वाच्च सर्वाणि द्रव्याणि तेषु सर्ववस्तुषु विद्यैव अनुत्तमं नास्ति उत्तमं यस्मात् तत् सर्वोत्कृष्टं द्रव्यम् आहुः ब्रुवन्ति विद्वांस इति शेषः ।

(५) सङ्गमयतीति । सरित् नदी नीचगा निम्नगापि सती दुर्धर्षं दुर्गमं समुद्रं जलनिधिमिव विद्यैव नीचगापि नीचपुरुषाश्रयापि नरं नृपं राजानम् अतःपरं राजसद्मप्रापणानन्तरं भाग्यं सौभाग्यं सङ्गमयति प्रापयति । नदी यथा तदाश्रयं तृणादिकं सागरं नयति तद्वत् विद्यापि स्वाश्रितं पुरुषं नीचवंशीयमपि प्रथमं राजसकाशं ततः सौभाग्यं प्रापयतीत्यर्थः ।

(६) विद्येति । विद्या शास्त्रज्ञानं विनयं सौजन्यं ददाति । विनयात् पात्रतां गुणशालित्वं याति प्राप्नोति । पात्रत्वात् धनम् आप्नोति धनात् धर्मं ततः तस्मात् धर्मात् सुखम् आप्नोतीत्यनेनान्वयः ।

(७) विद्येति । शस्त्रं च शास्त्रं च विद्या विद्याशब्दप्रतिपाद्य-

आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥ ७ ॥

यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत् ।
कथाच्छलेन बालानां नीतिस्तदिह कथ्यते ॥ ८ ॥

मित्रलाभः, सुहृद्भेदो, विग्रहः, सन्धिरेव च ।
पञ्चतन्त्रात्तथान्यस्माद् ग्रन्थादाकृष्य लिख्यते ॥ ९ ॥

अस्ति भागीरथीतीरे पाटलिपुत्रनामधेयं नगरं, तत्र (क) सर्वस्वामिगुणोपेतः सुदर्शनो नाम नरपतिरासीत् । स भूपतिरेकदा केनापि पठ्यमानं श्लोकद्वयं शुश्राव ।

---

मित्यर्थः । एते द्वे विद्ये प्रतिपत्तये यशोलाभाय भवत इति क्रियायोगे चतुर्थी । आद्या विद्या अत्र श्लोके प्रथमोक्ता विद्या शस्त्रविद्येत्यर्थः । वृद्धत्वे वार्द्धक्ये उपस्थिते सति सामर्थ्यापगमे इति भावः । हास्याय उपहासाय शस्त्रव्यवहारे अपारकत्वात् । द्वितीया शास्त्रविद्या सदा सर्वस्मिन् बाल्ये यौवने प्रौढे वार्द्धकेऽपि च चतुर्षु अवस्थास्वित्यर्थः आद्रियते आदृता भवति ।

(८) यदिति । यत् यस्मात् नवे नूतने भाजने पात्रे मृत्पात्रादौ लग्नः अङ्कितः संस्कारः कारुचित्रादिकं न अन्यथा अन्यप्रकारः विलीन इत्यर्थः भवेत् । तत् तस्मात् इह हितोपदेशग्रन्थे कथाच्छलेन काककूर्मादीनाम् उपन्यासच्छलेन बालानां बालकानां सम्बन्धे नीतिः कथ्यते उपदिश्यते ।

(९) मित्रलाभ इति । पञ्चतन्त्रात् तदाख्यग्रन्थात् तथा अन्यस्मात् महाभारतकामन्दकीयादेः ग्रन्थादाकृष्य आकलय्य मित्रलाभः सुहृद्भेदः विग्रहः सन्धिरेव चेति भागचतुष्टयेन विभज्य लिख्यते ।

(क) सर्वस्वामिगुणोपेतः—सर्वैः स्वामिनः गुणैः शौर्यवीर्यादिभिर्दयादाक्षिण्यादिभिश्च उपेतः युक्तः । सर्वप्रभुशक्तिसम्पन्न इति यावत् ।

अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् ।
सर्वस्य लोचनं शास्त्रं, यस्य नास्त्यन्ध एव सः ॥ १० ॥
यौवनं, धनसम्पत्तिः, प्रभुत्वमविवेकिता ।
एकैकमप्यनर्थाय, किमु यत्र चतुष्टयम् ? ॥ ११ ॥

इत्याकर्ण्यात्मनः पुत्राणामनधिगतशास्त्राणां (ख) नित्यमुन्मार्गगामिनां शास्त्राननुष्ठानेनोद्विग्नमनाः स राजा चिन्तयामास,

कोऽर्थः पुत्रेण जातेन, यो न विद्वान् न धार्मिकः ।
काणेन चक्षुषा किं वा, चक्षुःपीडैव केवलम् ॥ १२ ॥

---

(१०) अनेकेति । अनेकेषु विषयेषु संशयस्तम् उच्छिनत्तीति तथोक्तं बहुविषयकसंशयनिरासकम् । अक्ष्णोः परः परोक्षः स चासौ अर्थश्चेति तस्य अतीन्द्रियस्य विषयस्य दर्शकं प्रत्यक्षविषयीकारकं शास्त्रं सर्वस्य जनस्य लोचनं चक्षुर्भूतम् । यस्य जनस्य नास्ति स एव अन्धः दृष्टिहीनः । एतदभावे हिताहितं विज्ञानबलेन ज्ञातव्यञ्च विषयं न सम्यक् पश्यतीति भावः ।

(११) यौवनमिति । यौवनं यौवनावस्था, धनसम्पत्तिः धनशालिता प्रभुत्वं प्रभुता आधिपत्यमिति यावत् । अविवेकिता विवेकराहित्यम् एतेषां चतुर्णां मध्ये एकैकं प्रत्येकम् अपि अनर्थाय अमङ्गलाय भवतीति शेषः यत्र यस्मिन् पुरुषे चतुष्टयं यौवनादीनां चतुर्णां समवायः तत्र तस्मिन् पुरुषे किमु किं वक्तव्यम् अपि तु महदनर्थायेति भावः ।

(ख) नित्यमुन्मार्गगामिनाम्—सदा कुपथप्रवृत्तानां क्रीडादिव्यसनासक्तानामिति यावत् ।

(१२) कोऽर्थ इति । यः पुत्रः न विद्वान् शास्त्रज्ञानवान्, न धार्मिकः धर्मानुष्ठानकारी तेन पुत्रेण जातेन उत्पन्नेन कः अर्थः किं

अजातमृतमूर्खाणां वरमाद्यौ, न चान्तिमः ।
सकृद्दुःखकरावाद्यावन्तिमस्तु पदे पदे ॥ १३ ॥
किञ्च, वरं गर्भस्रावो, वरमपि च नैवाभिगमनं,
वरं जातः प्रेतो, वरमपि च कन्यावजनिता ।
वरं बन्ध्या भार्य्या, वरमपि च गर्भेषु वसतिः,
न वाऽविद्वान् रूपद्रविणगणयुक्तोऽपि तनयः ॥ १४ ॥
स जातो, येन जातेन याति वंशः समुन्नतिम् ।
परिवर्त्तिनि संसारे मृतः को वा न जायते ? ॥ १५ ॥

---

प्रयोजनम् अपि तु क्लेशायेत्याह काणेन दर्शनशक्तिविहीनेन चक्षुषा किं वा फलमित्यर्थः केवलं चक्षुःपीड़ा एव । काणचक्षुरिव मूर्खः पुत्रः केवलं पित्रोः क्लेशायेत्यर्थः ।

(१३) अजात इति । अजातः अनुत्पन्नः मृतः उत्पद्य कालवशं गतः मूर्खः विद्याहीनस्तेषाम् आद्यौ अजातमृतौ वरं श्रेष्ठौ अन्तिमः मूर्खस्तु न वरमिति शेषः । कुत इत्याह, आद्यौ द्वौ सकृद्दुःखकरौ वारमेकमेव क्लेशावहौ अन्तिमस्तु पदे पदे नियतमेव क्लेशकर इति शेषः ।

(१४) वरमिति । गर्भस्रावः गर्भपातः वरं श्रेयान् । नैवाभिगमनम् ऋतुमत्या भार्य्यया सह सम्भोगाभावोऽपि वरम् । जातप्रेतः उत्पद्य मृतः वरम् । कन्या अवजनिता उत्पादितापि च वरम् । बन्ध्या असम्भावितसन्ताना भार्य्यापि वरम् । गर्भेषु वसतिः गर्भस्यापत्यस्येति शेषः । तथा रूपद्रविणगणयुक्तः रूपराशिसौन्दर्य्यराशियुक्तोऽपि अविद्वान् मूर्खः तनयः न वा वरं न काङ्क्षितव्य इत्यर्थः ।

(१५) स इति । येन पुत्रेण जातेन उत्पन्नेन वंशः अन्वयः समुन्नतिम् उत्कर्षं याति प्राप्नोति यो हि कुलोद्दीपकः स जातः प्रशस्तजन्मा सफलजन्मेति यावत् । परिवर्त्तिनि पुनरावृत्तिधर्मिणि संसारे जगति मृतः सन् को वा जनः न जायते उत्पद्यते ।

अन्यच्च,

गुणिगणगणनारम्भे न पतति कठिनी ससम्भ्रमाद् यस्य ।
तेनाम्बा यदि सुतिनी, वद बन्ध्या कीदृशी भवति ? ॥ १६ ॥

अपिच,

दाने तपसि शौर्य्ये च यस्य न प्रथितं मनः ।
विद्यायामर्थलाभे च, मातुरुच्चार एव सः ॥ १७ ॥

अपरञ्च,

वरमेको गुणी पुत्रो, न च मूर्खशतैरपि ।
एकश्चन्द्रस्तमो हन्ति, न च तारागणैरपि ॥ १८ ॥

---

(१६) गुणिगणेति । गुणिगणस्य गुणवतां जनानां गणनायाः इमे गुणिन इति संख्याकरणस्य आरम्भे प्रक्रमे यस्य पुत्रस्य सम्बन्धे कठिनी (खड़ीति भाषा) तया रेखेत्यर्थः, ससम्भ्रमात् गौरवात् न पतति तेन पुत्रेण यदि अम्बा माता सुतिनी पुत्रवती तदा बन्ध्या अपुत्रा कीदृशी भवति वद कथय सैव बन्ध्येति भावः ।

(१७) दाने सत्पात्रे धनवितरणे तपसि तपस्यायां शौर्य्ये शूरता-प्रकटने च विद्यायां विद्योपार्जने अर्थलाभे धनोपार्जने च यस्य पुत्रस्य मनः न प्रथितं न प्रवणं सोत्सुकमिति यावत् स तादृशः यशोरहितः पुत्रः मातुर्जनन्याः उच्चारः मलमूत्रादिसदृश एव तादृशस्य पुत्रस्य जन्म निरर्थकमित्यर्थः ।

(१८) वरमिति । एकः एकमात्रः गुणी गुणवान् पुत्रस्तनयः वरं श्रेयान् श्लाघनीयत्वात् वाञ्छनीयः, मूर्खशतैः शतेन मूर्खैः पुत्रैः न च वरमिति शेषः तेन न किमपि प्रयोजनमित्यर्थः । तथाहि एकः एकाकी चन्द्रः तमः ध्वान्तं हन्ति नाशयति दूरीकरोतीति यावत्, ताराणां नक्षत्राणां गणाः समूहास्तैरपि न च ध्वान्तनाशो भवेदिति शेषः ।

पुण्यतीर्थे कृतं येन तपः क्वाप्यतिदुष्करम् ।
तस्य पुत्रो भवेद् वश्यः, समृद्धो धार्मिकः सुधीः ॥ १९ ॥

तथा चोक्तम्,

अर्थागमो, नित्यमरोगिता च,
प्रिया च भार्य्या प्रियवादिनी च ।
वश्यश्च पुत्रोऽर्थकरी च विद्या,
षड् जीवलोकेषु सुखानि राजन् ! ॥ २० ॥

को धन्यो बहुभिः पुत्रैः, कुशूलापूरणाढकैः ।
वरमेकः कुलालम्बी, यत्र विश्रूयते पिता ॥ २१ ॥

---

(१९) पुण्येति । येन पुरुषेण क्वापि कुत्रचिदपि पुण्यतीर्थे पुण्यजनके वाराणस्यादौ तीर्थे पुण्यक्षेत्रे अतिदुष्करम् अतिकठोरं तपः यागादिनियमविशेषः कृतम् अनुष्ठितम् आचरितमिति यावत् । तस्य पुत्रः सुतः वश्यः आज्ञावहः समृद्धः धनसम्पन्नः धार्मिकः धर्मपरायणः सुधीः पण्डितश्च भवेत् । पुण्यवतामेव सत्पुत्रलाभो भवेदित्यर्थः ।

(२०) अर्थागम इति । हे राजन् ! जीवलोके जगति षट् सुखानि सन्तीति शेषः । कानि तानीत्याह । अर्थागम इति, नित्यं प्रतिदिनम् अर्थस्य आगमः आयः प्रत्यहं धनलाभः, अरोगिता च नीरोगित्वं स्वास्थ्ययुक्ततेति यावत् भार्य्या स्त्री प्रिया सर्वथा प्रीतिप्रदा प्रियवादिनी च प्रियं मधुरं वदतीति तथोक्ता मधुरभाषिणी, पुत्रः सुतः वश्यः आज्ञावहः विद्या अर्थकरी अर्थागमहेतुभूता ।

(२१) क इति । कुशूलैः आपूरणं येषां ते कुशूलापूरणाः ते च आढकाश्चेति तैः तुषपूर्णपरिमाणपात्रसदृशैः बहुभिः पुत्रैः तुषपूर्णपात्रवत् विद्यादिगुणशून्यत्वादकिञ्चित्करैरिति भावः । को जनः धन्यः श्लाघनीयः न कोऽपीत्यर्थः । किन्तु यत्र यस्मिन् पुत्रे जाते सति पिता

इदानीमेते मम पुत्रा गुणवन्तः क्रियन्ताम्। यतः,

आहारनिद्राभयमैथुनञ्च
सामान्यमेतत् पशुभिर्नराणाम्।
धर्मो हि तेषामधिको विशेषो,
धर्मेण हीनाः पशुभिः समानाः॥ २२॥

यतः,

धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते।
अजागलस्तनस्येव तस्य जन्म निरर्थकम्॥ २३॥

यच्चोच्यते,

आयुः कर्म च वित्तञ्च विद्या निधनमेव च।
पञ्चैतान्यपि सृज्यन्ते गर्भस्थस्यैव देहिनः॥ २४॥

---

विश्रूयते लोकेषु विख्यातो भवति तादृशः। कुलम् आलम्बते उद्धरति यः स कुलालम्बी कुलधुरन्धरः कुलप्रदीप इति यावत् एकः पुत्रः वरं श्रेयान्।

(२२) आहारेति। आहारश्च निद्रा च भयञ्च मैथुनञ्च तेषां समाहारः एतत् आहारादिकं नराणां पशुभिः सह सामान्यं तुल्यं तेषां नराणाम् अधिकः एकः धर्मः विशेषः पशुभ्यो व्यवच्छेदकः तथा सति धर्मेण हीनाः वर्जिताः नराः पशुभिः समानास्तुल्याः। धर्मविवर्जितेषु नरेषु पशुभ्यो नास्ति कश्चिद्विशेष इत्यर्थः।

(२३) धर्मार्थेति। धर्मस्य अर्थस्य कामस्य मोक्षस्य तेषां चतुर्वर्गस्यैकः एकोऽपि यस्य जनस्य न विद्यते नास्ति। अजा छागी तस्याः गलस्तनस्य गलदेशजातस्तनस्येव तस्य धर्मादिपुरुषार्थचतुष्टयविहीनस्य जन्म उत्पत्तिः निरर्थकं विफलम्।

(२४) आयुरिति। आयुर्जीवनकालः कर्म जीवद्दशायां कार्य-

किञ्च,

अवश्यम्भाविनो भावा भवन्ति महतामपि ।
नग्नत्वं नीलकण्ठस्य, महाहिशयनं हरेः ॥ २५ ॥

अन्यच्च,

यदभावि न तद्भावि, भावि चेन्न तदन्यथा ।
इति चिन्ताविषघ्नोऽयमगदः किन्न पीयते ॥ २६ ॥

(ग) एतत् कार्य्याक्षमाणां केषाञ्चिदालस्यवचनम् ।

---

कलापः वित्तं सम्पत् विद्या शास्त्रज्ञानं निधनं मरणञ्च एतान्यपि आयुरादीनि पञ्च गर्भस्थस्य जननात् प्राक् मातृगर्भे स्थितस्यैव देहिनः शरीरिणः सम्बन्धे सृज्यन्ते निर्णीयन्ते स्रष्ट्रेति शेषः । उत्पत्तेः प्रागेव देहिनाम् आयुरादीनि पञ्च निर्दिष्टानीत्यर्थः ।

(२५) अवश्यमिति । महतां अलौकिकशक्तिसम्पन्नानामपि देवानामपीति भावः अवश्यम्भाविनः अवश्यमेव भवितव्याः भावाः विषयाः भवन्ति घटन्ते । नियतिः केन बाध्यते इति भावः । तदेवोदाहरन्नाह नीलः कण्ठे यस्य तस्य हरस्य नग्नत्वं दिगम्बरत्वं, हरेः विष्णोः महान् अहिः सर्पः महाहिरनन्तः तस्मिन् शयनम् अथवा महाहिः शयनं शय्या ( शेतेऽस्मिन्निति अधिकरणे अनट् ) ।

(२६) यदिति । यत् अभावि न भवितव्यं तत् न भावि न भवितव्यमेव । भावि अवश्यम्भाव्यं चेत् तत् अन्यथा विपरीतं न भविष्यतीति शेषः । इति न कोऽपि भवितव्यद्वाराणि पिधातुमिष्टे इत्येवं चिन्तैव विषं तत् हन्तीति चिन्ताविषनाशकः अयं नास्ति गदो यस्मात् स अगदः औषधं किं कथं न पीयते न सेव्यते एवं सति सर्वथा सेवनीय एवेत्यर्थः ।

(ग) कार्य्याक्षमाणाम्—कार्य्यसम्पादने अशक्तानाम् अनुद्योगिनामिति यावत्, अलसानामित्यर्थः ।

यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिध्यति ॥ २७ ॥

तथाच,

पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते ।
तस्मात् पुरुषकारेण यत्नं कुर्य्यादतन्द्रितः ॥ २८ ॥

अन्यच्च, उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या,
यत्ने कृते यदि न सिध्यति, कोऽत्र दोषः ? ॥ २९ ॥

---

(२७) यथेति । हि निश्चितं यथा एकेन चक्रेण रथस्य स्यन्दनस्य गतिः चलनं न भवेत् एवं पुरुषकारेण पुरुषस्य चेष्टया विना दैवं भाग्यं, दैवं भाग्यं स्त्रीनियतिर्विधिरित्यमरः । न सिध्यति न फलति । पौरुषेण विना किमपि कार्य्यं न सम्पद्यते इत्यर्थः ।

(२८) पूर्वजन्मेति । पूर्वश्लोके दैवं न सिध्यतीत्युक्तं किन्तद्दैव-मित्याह पूर्वजन्मेति यत् पूर्वस्मिन् जन्मनि कृतं सम्पादितं कर्म प्राग्-भवीयं कार्य्यं दैवमिति कथ्यते उच्यते बुधैरिति शेषः । तस्मात् कार-णात् तन्द्रा अस्य जाता तन्द्रितः स न भवति अतन्द्रितः अनलसः सन् पुरुषकारेण करणेन पौरुषमवलम्ब्येरत्यर्थः यत्नं कार्य्यसाधनाय उद्-योगं कुर्य्यात् ।

(२९) पुरुषव्यापारमन्तरेण न किमपि सिध्यतीत्याह उद्योगिन-मिति । लक्ष्मीः सम्पदधिष्ठात्री देवी उद्योगिनं कार्य्यसम्पादनार्थं यतमानं पुरुषः सिंह इव पुरुषसिंहम् उपमितं व्याघ्रादिभिरित्यनेन उपमितकर्मधारयः । पुरुषश्रेष्ठम् उपैति प्राप्नोति आश्रयति । दैवेन भाग्येन देयं सम्पादनीयमिति कापुरुषाः पौरुषहीना एव पुरुषाः वदन्ति

यथा मृत्पिण्डतः कर्त्ता कुरुते यद् यदिच्छति ।
एवमात्मकृतं कर्म्म मानवः प्रतिपद्यते ॥ २० ॥

अपरञ्च,

काकतालीयवत् प्राप्तं दृष्ट्वापि निधिमग्रतः ।
न स्वयं दैवमादत्ते, पुरुषार्थमपेक्षते ॥ २१ ॥
उद्यमेन हि सिध्यन्ति कार्य्याणि, न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥ २२ ॥

तथाचोक्तम्,

माता शत्रुः, पिता वैरी, येन बालो न पाठितः ।

---

कथयन्ति । अतः दैवं निहत्य निराकृत्य पश्चात् कृत्वेत्यर्थः आत्मशक्त्या स्वसामर्थ्येन पौरुषं कुरु । यत्ने उद्योगे कृते सति यदि न सिध्यति दैवदुर्विपाकवशात् न सम्पद्यते अत्र विषये कः दोषः का क्षतिः ।

(२०) यथेति । यथा येन प्रकारेण कर्त्ता कुम्भकारः मृत्पिण्डतः यत् यत् शरावादिकम् इच्छति निर्म्मातुमभिलषति तत् तत् कुरुते निर्म्मांति । एवं तथा मानवः आत्मकृतं स्वकृतं कर्म चेष्टितं प्रतिपद्यते लभते स्वानुष्ठितं कार्य्यं विभिन्नरूपेण परिणमतीत्यर्थः ।

(२१) काकेति । काकतालीयवत् काकतालीयन्यायेनेव काकगमनकाले अवितर्कितताल‌पतनवदिवेत्यर्थः प्राप्तम् उपस्थितं निधिं धनम् अग्रतः समीपे दृष्ट्वापि स्वयं न आदत्ते गृह्णाति अपितु दैवं पुरुषार्थम् अभीष्टप्रापकम् अपेक्षते आश्रयति अवलम्बते इति यावत् ।

(२२) उद्यमेति । कार्य्याणि साधयितुमभिप्रेतानि कर्म्माणि उद्यमेन उद्योगेन सिध्यन्ति सफलानि भवन्ति मनोरथैः केवलं सम्पादनवासनाभिः न सिध्यन्तीति शेषः । हि तथाहि सुप्तस्य निद्रितस्य अचेष्टमानस्येति भावः, सिंहस्य मुखे मृगाः पशवः न प्रविशन्ति स्वयमिति भावः ।

(२३) मातेति । येन हेतुना न पाठितः न शिक्षितः बालः हंस-

न शोभते सभामध्ये, हंसमध्ये वको यथा ॥ २३ ॥

रूपयौवनसम्पन्ना विशालकुलसम्भवाः ।
विद्याहीना न शोभन्ते, निर्गन्धा इव किंशुकाः ॥२४॥

अपरञ्च,

पुस्तकेषु च नाधीतं, नाधीतं गुरुसन्निधौ ।
न शोभते सभामध्ये, जारगर्भ इव स्त्रियः ॥ २५ ॥

एतच्चिन्तयित्वा स राजा पण्डितसभां कारितवान् । राजोवाच, "भो भोः पण्डिताः ! श्रूयतां मम वचनम्, अस्ति कश्चिद् एवम्भूतो (घ) विद्वान्, यो मम पुत्राणां नित्यं

---

मध्ये वको यथा वक इव ( अत्र यथाशब्द इवार्थे) सभामध्ये न शोभते न आदृतो भवति माता तस्य बालकस्येति शेषः शत्रुः अहितकारिणी पिता जनकः वैरी शत्रुः भवतीति शेषः ।

(२४) रूपयौवनेति । रूपं शरीरकान्तिः यौवनं तरुणत्वं ताभ्यां सम्पन्नाः युक्ताः रूपवन्तः युवानश्चेत्यर्थः । विशालं महत् कुलं तस्मिन् सम्भवः उत्पत्तिर्येषां ते तथोक्ताः महाकुलसम्भूताः अपीति भावः विद्यया हीनाः विद्याहीनाः निर्गुणाः पुरुषाः निर्गन्धाः सौरभहीनाः किंशुकाः पलाशकुसुमानीव न शोभन्ते न राजन्ते न समादृता भवन्तीत्यर्थः ।

(२५) पुस्तकेषु ग्रन्थेषु न अधीतं पठितम् । गुरुसन्निधौ शिक्षागुरोश्च सकाशेऽपि न अधीतं पठितं यत् शास्त्रं तत् स्त्रियः रमण्याः जारगर्भः उपपतिसम्भोगजनितः बाल इव सभामध्ये लोकसमाजे न शोभते न उत्कर्षेण तिष्ठति ।

(घ) एवम्भूतः—ईदृशः ।

(ङ) उन्मार्गगामिनामनधिगतशास्त्राणाम् (च) इदानीं नीतिशास्त्रोपदेशेन (छ) पुनर्जन्म कारयितुं समर्थः ?

यतः, काचः काञ्चनसंसर्गाद्धत्ते मारकतीर्द्युतीः।

तथा सत्सन्निधानेन मूर्खो याति प्रवीणताम् ॥ २६ ॥

उक्तञ्च,

हीयते हि मतिस्तात ! हीनैः सह समागमात्।

समैश्च समतामेति, विशिष्टैश्च विशिष्टताम् ॥ २७ ॥

अत्रान्तरे विष्णुशर्मनामा पण्डितः (ज) सकलनीति-

---

(ङ) उन्मार्गगामिनाम्—उत् उद्गतः मार्गः पन्थाः तस्मिन् गच्छन्ति ये ते तेषां सदा कुकर्मप्रवृत्तानाम्।

(च) अनधिगतशास्त्राणाम्—अनधिगतम् अपठितं शास्त्रं यैस्तेषां शास्त्रज्ञानविहीनानाम्।

(छ) नीतिशास्त्रोपदेशेन—नीतिशास्त्रशिक्षया।

(२६) काच इति। काचः काञ्चनसंसर्गात् सुवर्णसङ्गेन मारकतीः मरकतो मणिविशेषः तत्सम्बन्धिनीः द्युतीः कान्तीः धत्ते धारयति प्राप्नोतीति यावत्। तथा तद्वत् सतां सन्निधानं संसर्गः तेन साधु-सङ्गेन मूर्खः प्रवीणतां मज्ञत्वं याति लभते।

(२७) हीयते इति। हे तात ! वत्स ! हीनैः स्वापेक्षया अल्प-बुद्धिभिः सह समागमात् संसर्गात् मतिः बुद्धिः हीयते हीना भवति। समैः समानैः तुल्यज्ञानैरिति यावत् सह समागमादिति सर्वत्र सम्बन्धः। मतिः समतां समानत्वम् एति प्राप्नोति न उन्नतिं लभते इत्यर्थः। विशिष्टैः स्वापेक्षया प्रकृष्टबुद्धिशालिभिः विशिष्टताम् उत्-कृष्टताम् एतीति शेषः।

(ज) सकलनीतिशास्त्रज्ञः—सकलानां समस्तानां नीतिशास्त्राणां

शास्त्रतत्त्वज्ञो बृहस्पतिरिवाब्रवीत्, "देव ! महाकुलसम्भूता (झ) एते राजपुत्राः, तस्मात् नीतिं ग्राहयितुं (ञ) शक्यन्ते।
यतः, नाद्रव्ये निहिता काचित् क्रिया फलवती भवेत्।
न व्यापारशतेनापि शुकवत् पाठ्यते बकः॥ ३८॥
अन्यच्च,
अस्मिंस्तु निर्गुणं गोत्रे नापत्यमुपजायते।
आकरे पद्मरागाणां जन्म काचमणेः कुतः? ॥ ३९॥
अतोऽहं षण्मासाभ्यन्तरे तव पुत्रान् नीतिशास्त्राभिज्ञान् (ट) करिष्यामि।" राजा सविनयं पुनरुवाच,

---

राजनीति-धर्मनीतिप्रभृतीनां तत्त्वस्य रहस्यस्य ज्ञः सकलनीतिशास्त्रपारदर्शी।

(झ) महाकुलसम्भूताः—महत् कुलं महाकुलं तस्मिन् सम्भूताः उत्पन्नाः।

(ञ) ग्राहयितुम्—शिक्षयितुम्।

(३८) नाद्रव्य इति। अद्रव्ये अयथाभूते विषये वस्तुनि वा निहिता प्रयुक्ता काचिदपि क्रिया न फलवती सफला भवेत्। तदेव दृष्टान्तेन द्रढयति व्यापारशतेनापि बहुशश्चेष्टयापि बकः शुकवत् शुकेन तुल्यं (तेन तुल्यं क्रिया चेदिति वतिः) न पाठ्यते न अध्याप्यते।

(३९) अस्मिन्निति। अस्मिन् गोत्रे राज्ञः महाकुले तु निर्गुणं गुणहीनम् अपत्यं न उपजायते उत्पद्यते पद्मरागाणां पद्मरागाख्यमणिविशेषाणाम् आकरे उत्पत्तिस्थाने काचमणेः कुतः कस्मात् जन्म उत्पत्तिः सम्भवतीति शेषः।

(ट) नीतिशास्त्राभिज्ञान्—नीतेः शास्त्रं तस्मिन् अभिज्ञाः पण्डितास्तान्, नीतिशास्त्रकुशलिनः।

"कीटोऽपि सुमनःसङ्गादारोहति सतां शिरः ।
अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः ॥ ४० ॥

अन्यच्च,

यथोदयगिरेर्द्रव्यं सन्निकर्षेण दीप्यते ।
तथा सत्सन्निधानेन हीनवर्णोऽपि दीप्यते ॥ ४१ ॥

तदेतेषामस्मत्पुत्राणां नीतिशास्त्रोपदेशाय भवन्तः प्रमाणम्" (ठ) इत्युक्त्वा, तस्य विष्णुशर्मणो बहुमानपुरःसरं पुत्रान् समर्पितवान् । अथ प्रासादपृष्ठे (ड) सुखोपविष्टानां राजपुत्राणां पुरस्तात् प्रस्तावक्रमेण स पण्डितोऽब्रवीत्,

"काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।

---

(४०) कीट इति । सुमनसः पुष्पस्य सङ्गात् संसर्गात् पुष्पेण सहेत्यर्थः, कीटोऽपि सतां महतां शिरः आरोहति महतां शिरसि स्थानं लभते इत्यर्थः । महद्भिः साधुभिः सुप्रतिष्ठितः पूजितः अश्मा प्रस्तरोऽपि देवत्वं याति प्राप्नोति ।

( ४१ ) यथोदयेति । यथा येन प्रकारेण उदयगिरेः उदयाचलस्य सन्निकर्षेण सम्पर्केण सूर्यकिरणसंयोगेनेत्यर्थः द्रव्यं वस्तुजातं दीप्यते प्रकाश्यते तथा तेन प्रकारेण सतः महतः सन्निधानं सन्निकर्षः संसर्ग इति यावत् तेन हीनः नीचैर्वर्णश्चाण्डालादिः अथवा हीना वर्णाः अक्षराणि यस्य सः अक्षरज्ञानशून्यश्चापि दीप्यते महत्त्वं लभते समादृियते इत्यर्थः ।

(ठ) भवन्तः प्रमाणं—भवन्तः स्वाधीनवृत्तयः, यथा भवद्भ्यो रोचते तथैव नीतिमुपदिशन्तु इत्यर्थः ।

(ड) प्रासादपृष्ठे—हर्म्यतले ।

(४२) काव्येति । धीर्विद्यते येषां तेषां पण्डितानां काव्यशास्त्र-

व्यसनेन च मूर्खाणां निद्रया कलहेन वा ॥ ४२ ॥

तद्भवतां विनोदाय (ख) काककूर्मादीनां विचित्रां (त) कथां कथयामि।" राजपुत्रैरुक्तं कथ्यताम्। विष्णुशर्मोवाच, यूयं शृणुत, सम्प्रति मित्रलाभः प्रस्तूयते। यस्यायमाद्यः श्लोकः,—

असाधना वित्तहीना बुद्धिमन्तः सुहृत्तमाः।
साधयन्त्याशु कार्य्याणि काककूर्ममृगाखवः ॥ ४३ ॥

राजपुत्रा ऊचुः, कथमेतत्? सोऽब्रवीत्,

अस्ति गोदावरीतीरे विशालः शाल्मलीतरुः, तत्र (थ) नानादिग्देशादागत्य रात्रौ पक्षिणो निवसन्ति। अथ कदाचिदवसन्नायां (द) रात्रौ अस्ताचलचूडावलम्बिनि

---

विनोदेन काव्यशास्त्रालोचनाजनितेन आमोदेन कालः गच्छति याति। पण्डिताः शास्त्रालोचनयैव कालम् अतिवाहयन्तीत्यर्थः। मूर्खाणां विद्याहीनानान्तु कालः व्यसनेन द्यूतपानाद्यासङ्गेन निद्रया वा अथवा कलहेन च गच्छति।

(ख) विनोदाय—प्रीत्यर्थम्।

(त) विचित्रां—रमणीयाम्।

(४३) असाधना इति। असाधनाः न सन्ति साधनानि अस्त्रशस्त्राणि उपायाः येषां ते उपायहीनाः, वित्तेन धनेन हीनाः निर्धनाः बुद्धिमन्तः बुद्धिशालिनः सुहृत्तमाः परस्परं सौहार्दमापन्नाः काककूर्ममृगाखवः आशु शीघ्रं कार्य्याणि साधयन्ति सम्पादयन्ति।

(थ) नानादिग्देशात्—विभिन्नदिग्भागात्।

(द) अवसन्नायाम्—विगतायां प्रभातायाम्।

भगवति कुमुदिनीनायके (ध) चन्द्रमसि, लघुपतनकनामा वायसः (न) प्रबुद्धः, (प) कृतान्तमिव द्वितीयमटन्तं व्याधमपश्यत्; तमवलोक्याचिन्तयत्, "अद्य प्रातरेवानिष्टदर्शनं (फ) जातं, न जाने किमनभिमतं (ब) दर्शयिष्यति ?" इत्युक्त्वा तदनुसरणक्रमेण व्याकुलश्चलितः ।

यतः, शोकस्थानं सहस्राणि, भयस्थानं शतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ ४४ ॥

अन्यच्च, (भ) विषयिणामिदमवश्यं कर्त्तव्यम् ।

उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम् ।
मरणव्याधिशोकानां किमद्य निपतिष्यति ?" ॥ ४५ ॥

---

(ध) कुमुदिनीनायके—कुमुदपतौ ।

(न) प्रबुद्धः—जागरितः ।

(प) कृतान्तं—कृतं दृष्टम् अन्तयति यः सः तं यमम् ।

(फ) अनिष्टदर्शनं—यत् शुभरूपममङ्गलम् ।

(ब) अनभिमतम्—अप्रियम् । दर्शयिष्यति--घटयिष्यति ।

(४४) शोकस्थानमिति । सहस्राणि शोकस्थानं शतानि च भयस्थानं मूढं मन्दमतिं पुरुषं दिवसे दिवसे प्रतिदिनम् आविशन्ति प्रविशन्ति पण्डितं जनं न आविशन्ति इति शेषः ।

(भ) विषयिणां—विषयानुरक्तानाम् ।

(४५) उत्थायेति । उत्थाय उत्थाय जागरित्वा जागरित्वा प्रतिदिनमित्यर्थः । महत् अतिशयं भयं भयकारणम् उपस्थितम् आगतं बोद्धव्यं ज्ञातव्यम् । मरणव्याधिशोकानां मध्ये किं निपतिष्यति किमुपस्थातव्यम् । प्रतिदिनमेव अनिष्टापातशङ्कां कृत्वा तत्प्रतीकाराय यतेतेत्यर्थः ।

अथ तेन व्याधेन तण्डुलकणान् विकीर्य जालं विस्तीर्णम्। तत्र स च प्रच्छन्नो भूत्वा स्थितः। अस्मिन्नेव काले चित्रग्रीवनामा कपोतराजः सपरिवारो वियति (म) विसर्पंस्तांस्तण्डुलकणानवलोकयामास, ततः कपोतराजस्तण्डुलकणलुब्धान् कपोतान् प्रत्याह, "कुतोऽत्र निर्जने वने तण्डुलकणानां सम्भवः? तन्निरूप्यतां तावत्, भद्रमिदं न पश्यामि, (य) प्रायेणानेन तण्डुलकणलोभेनास्माभिरपि तथा भवितव्यम्।

कङ्कणस्य तु लोभेन मग्नः पङ्के सुदुस्तरे।
वृद्धव्याघ्रेण संप्राप्तः पथिकः संमृतो यथा" ॥ ४६ ॥

कपोता ऊचुः, कथमेतत्? सोऽब्रवीत्,

"अहमेकदा दक्षिणारण्ये चरन्नपश्यम्, एको वृद्धो व्याघ्रः स्नातः सरस्तीरे ब्रूते," "भो भोः पान्थ! इदं सुवर्णकङ्कणं कुशहस्तात् गृह्यताम्"। ततो लोभाकृष्टेन केनचित् पान्थेनालोचितं; "भाग्येनैतत् सम्भवति, किन्त्वस्मिन्नात्मसन्देहे (र) प्रवृत्तिर्न विधेया।

---

(म) वियति—आकाशे।

(य) प्रायेण—भवितव्यमिति क्रियाया विशेषणम्।

(४६) कङ्कणस्येति। कङ्कणस्य सुवर्णालङ्कारविशेषस्य लोभेन लिप्सया सुदुस्तरे अतिगाढ़े पङ्के कर्दमे मग्नः पतितः वृद्धव्याघ्रेण केनचित् वृद्धशार्दूलेन संप्राप्तः आक्रान्तः पथिकः यथा येन प्रकारेण संमृतः मृत्युं प्राप।

(र) आत्मसन्देहे—आत्मनः सन्देहः यस्मिन् तस्मिन्। स्वशरीरनाशशङ्कायुक्ते कार्ये।

यतः, अनिष्टादिष्टलाभेऽपि न गतिर्जायते शुभा।
यत्रास्ते विषसंसर्गोऽमृतं तदपि मृत्यवे॥ ४७॥

किन्तु सर्वत्रार्थार्जने प्रवृत्तौ सन्देह एव। तथा चोक्तम्,

न संशयमनारुह्य नरो भद्राणि पश्यति।
संशयं पुनरारुह्य यदि जीवति पश्यति॥ ४८॥

तन्निरूपयामि तावत्।" प्रकाशं ब्रूते, "कुत्र तव कङ्कणम्?" व्याघ्रो हस्तं प्रसार्य्य दर्शयति। पान्थोऽवदत्, "कथं मारात्मके (ल) त्वयि विश्वासः?"

व्याघ्र उवाच, "शृणु रे पान्थ! प्रागेव यौवनदशायामतिदुर्वृत्तोऽस्मि अनेकगोमानुषाणां वधान्मे पुत्रा मृता दाराश्च, वंशहीनश्चाहम्, ततः केनचिद्धार्म्मिकेणाहमादिष्टः, "दानधर्म्मादिकञ्चरतु भवान्"। तदुपदेशादिदानीमहं

---

(४७) अनिष्टादिति। अनिष्टात् अहितकरात् इष्टलाभेऽपि हितप्राप्तेऽपि शुभा श्रेयसी गतिः उपायः न जायते भवतीत्यर्थः। यत्र यस्मिन् अस्ते इत्यर्थः विषसंसर्गः विषसंयोगः अस्ति तत् अमृतमपि मृत्यवे भवतीति शेषः। विषमिश्रितम् अमृतमिव अनिष्टादिष्टलाभोऽपि न श्रेयसे इत्यर्थः।

(४८) न संशयमिति। नरः संशयमनारुह्य किमिदं शुभमशुभं वेति सन्देहपदेषु उपविश्य भद्राणि शुभानि न पश्यति न लभते इत्यर्थः। पुनः किन्तु संशयम् आरुह्य यदि जीवति प्राणिति तदा पश्यति भद्राणीति शेषः।

(ल) मारात्मके—मारे हिंसायाम् आत्मा स्वभावो यस्य तस्मिन् हिंस्रे।

स्नानशीलो दाता वृद्धो (व) गलितनखदन्तो, न कथं (श) विश्वासभूमिः ?

यतः, इज्याध्ययनदानानि तपः सत्यं धृतिः क्षमा ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ ४९ ॥
तत्र पूर्वश्चतुर्वर्गो दम्भार्थमपि सेव्यते ।
उत्तरस्तु चतुर्वर्गो महात्मन्येव तिष्ठति ॥ ५० ॥

मम चैतावान् लोभविरहो, येन स्वहस्तस्थमपि सुवर्ण-कङ्कणं यस्मै कस्मैचिद्दातुमिच्छामि । तथापि "व्याघ्रो मानुषं खादतीति," (ष) लोकापवादो दुर्निवारः । यतः,

गतानुगतिको लोकः कुट्टिनीमुपदेशिनीम् ।

---

(व) गलितनखदन्तः—नखाश्च दन्ताश्च नखदन्ताः गलिताः नख-दन्ताः यस्य सः ।

(श) विश्वासभूमिः—विश्वासपात्रम् ।

(४९) इज्येति । इज्या यागः, अध्ययनं वेदपाठः, दानं सत्पात्रे विनियोगः, तपः धर्मानुष्ठानार्थं व्रतं, सत्यं, धृतिः सन्तोषः निर्विकल्प-चित्ततेति यावत्, क्षमा शान्तिः, अलोभः वीतस्पृहता, इति अयम् अष्टविधः अष्टप्रकारः धर्मः मार्गः पन्थाः स्मृतः कथितः ।

(५०) तत्रेति । तत्र तेषु अष्टसु मध्ये पूर्वः यागाध्ययनदानतपो-रूपः चतुर्वर्गः दम्भार्थं प्रभुशक्तिख्यापनार्थमपि सेव्यते अवलम्ब्यते, उत्तरस्तु सत्यधृतिक्षमाऽलोभरूपः चतुर्वर्गः महात्मनि उदारचरिते एव तिष्ठति ।

(ष) लोकापवादः—लोकेषु अपवादः निन्दा । दुर्निवारः—दुष्परिहरः ।

(५१) गतेति । गतस्य अतीतस्य पूर्वैरवलम्बितस्य मार्गस्य अनु-

प्रमाणयति नो धर्मे, यथा गोघ्नमपि द्विजम् ॥ ५१ ॥

मया च धर्म्मशास्त्राण्यधीतानि, शृणु,—

प्राणा यथात्मनोऽभीष्टा, भूतानामपि ते तथा ।
आत्मौपम्येन भूतानां दयां कुर्वन्ति साधवः ॥ ५२ ॥

अपरञ्च,

प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये ।
आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति ॥ ५३ ॥

अन्यच्च,

मातृवत् परदारेषु परद्रव्येषु लोष्ट्रवत् ।
आत्मवत् सर्वभूतेषु, यः पश्यति स पण्डितः ॥ ५४ ॥

---

गतिम् अनुसरणमिच्छतीति गतानुगतिकः प्राचीनाचारपद्धतिमनुसर्तुमिच्छन् लोकः धर्मे धर्मनिर्णये उपदेशिनीम् उपदेशदानयोग्यां कुट्टिनीं कोमलस्वभावामपि दुष्टां प्रमाणयति प्रमाणं करोति । यथा येन प्रकारेण गोघ्नं गोघातकमपि द्विजं ब्राह्मणं न प्रमाणयतीति शेषः ।

(५२) प्राणा इति । यथा आत्मनः स्वस्य प्राणाः अभीष्टाः अभिलषिताः सर्वप्रयत्नेन रक्षणीयाः इत्यर्थः भूतानाम् आत्मभिन्नप्राणिनामपि ते प्राणाः तथा अभीष्टा इत्यर्थः । साधवः सज्जनाः आत्मौपम्येन आत्मतुलनया भूतानां प्राणिनां दयां कुर्वन्ति । साधवः यदेवात्मनः क्लेशावहं परेषामपि तत्तथेति विविच्य सर्वभूतेषु आत्मवत् पश्यन्तीत्यर्थः ।

(५३) प्रत्येति । प्रत्याख्याने प्रार्थितस्यास्वीकरणे दाने च सुखदुःखे प्रियाप्रिये शुभाशुभे च पुरुषः आत्मौपम्येन आत्मतुलनया प्रमाणम् अधिगच्छति प्रमाणयति ।

(५४) मातृवदिति । यो जनः परदारेषु परनारीषु मातृवत् पर-

त्वञ्चातीव (ख) दुर्गतस्तेन (ग) तत्तुभ्यं दातुं सयत्नोऽहम्।
तथा चोक्तम्,

दरिद्रान् भर कौन्तेय ! मा प्रयच्छेश्वरे धनम्।
व्याधितस्यौषधं पथ्यं, नीरुजस्य किमौषधैः ? ॥ ५५॥

अन्यच्च,

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद्दानं सात्त्विकं विदुः ॥ ५६॥

तदत्र सरसि स्नात्वा सुवर्णकङ्कणं गृहाण" ततो

---

द्रव्ये लोष्ट्रवत् सर्वभूतेषु सर्वप्राणिषु आत्मवत् (सर्वत्र तेन तुल्यं क्रिया चेष्टितिरिति वृत्तिः)। पश्यति स जनः पण्डितः ज्ञानवान्।

(ख) दुर्गतः—दुरवस्थापन्नः निर्धन इति यावत्।

(ग) तत्—सुवर्णकङ्कणम्।

(५५) दरिद्रानिति। हे कौन्तेय! कुन्तीतनय युधिष्ठिर! दरिद्रान् निर्धनान् भर अन्नवस्त्रादिना प्रतिपालय, ईश्वरे धनवति जने धनं मा प्रयच्छ मा देहि। कुत इत्याशङ्कायामाह, व्याधिरस्य जातः व्याधितः रुग्णः तस्य पीड़ितस्य औषधं पथ्यं हितकरं, निर्नास्ति रुजा रोगो यस्य तस्य रोगहीनस्य औषधैः भेषजैः किं ? न किमपि प्रयोजनमित्यर्थः, नीरोगयुक्ते औषधप्रयोग इव धनवति धनदानं विफलमिति भावः।

(५६) दातव्यमिति। दातव्यं दानफलकामनयैव देयमिति मत्वा यद्दानम् अनुपकारिणे अहितकरायापीत्यर्थः दीयते तद्दानं निःस्वार्थ-दानमिति भावः। देशे तीर्थादौ पवित्रे स्थाने, काले पूर्णिमादिपर्वे, पात्रे दानयोग्यपात्रे च तत् सात्त्विकं सात्त्विकभावानुगतं विदुः जानन्ति विद्वांस इति शेषः।

यावदसौ (क) तद्वचःप्रतीतो लोभात् सरः स्नातुं प्रविशति, तावन्महापङ्के (ख) निमग्नः पलायितुमक्षमः । पङ्के पतितं दृष्ट्वा व्याघ्रोऽवदत्, "अहह ! महापङ्के पतितोऽसि ? अतस्त्वामहमुत्थापयामि" इत्युक्त्वा (ग) शनैः शनैरुपगम्य तेन व्याघ्रेण धृतः स पान्थोऽचिन्तयत् ।

"न धर्मशास्त्रं पठतीति कारणं
न चापि वेदाध्ययनं दुरात्मनः ।
स्वभाव एवात्र तथातिरिच्यते,
यथा प्रकृत्या मधुरं गवां पयः ॥ ५७ ॥

किञ्च, अवशेन्द्रियचित्तानां हस्तिस्नानमिव क्रिया ।
दुर्भगाभरणप्रायो ज्ञानं भारः क्रियां विना ॥ ५८ ॥

---

(क) तद्वचःप्रतीतः—तस्य व्याघ्रस्य वचः वाक्यं तस्मिन् प्रतीतः विश्वस्तः व्याघ्रवचने कृतप्रत्ययः ।

(ख) निमग्नः—पतितः (नि+मस्ज+क्तः) ।

(ग) शनैः शनैः—मन्दं मन्दम् (उपगम्येति क्रियाया विशेषणम्) ।

(५७) नेति । अयमित्यध्याहर्तव्यम् । अयं धर्मशास्त्रं मन्वादिप्रणीतं धर्मोपदेशकं शास्त्रं पठति अधीते इति एतत् केवलं धर्मशास्त्रपठनं वेदाध्ययनं वेदपाठश्च दुरात्मनः स्वभावतो दुराचारस्य न कारणं न धर्मप्रवृत्तिहेतु । अत्र संसारे स्वभावः प्रकृतिरेव तथा तद्वत् अतिरिच्यते (अति+रिच्+लट् ते कर्मकर्तरिवाच्ये) प्रबलो भवति यथा येन प्रकारेण गवां तृणभक्षिणीनामपीति भावः पयः दुग्धं प्रकृत्या स्वभावेन मधुरं सुस्वादु । यस्य यादृशः स्वभावः न केनापि तद्वैपरीत्यं जायते इति भावः ।

(५८) अवशेति । इन्द्रियाणि वाङ्मनश्चक्षुरादीनि, चित्तं मनः,

तन्मया भद्रं न कृतं, यदत्र (घ) मारात्मके विश्वासः कृतः।
तथा चोक्तम्,

शृङ्गिणाञ्च नदीनाञ्च नखिनां शस्त्रपाणिनाम्।
विश्वासो नैव कर्त्तव्यः, स्त्रीषु राजकुलेषु च ॥ ५९ ॥

अपरञ्च,

सर्वस्य हि परीक्ष्यन्ते स्वभावा, नेतरे गुणाः।
अतीत्य हि गुणान् सर्वान् स्वभावो मूर्ध्नि वर्त्तते ॥६०॥

---

अवशानि अवशीभूतानि इन्द्रियाणि चित्तञ्च येषां तेषाम् अजितेन्द्रियाणामित्यर्थः क्रिया व्यापारः हस्तिस्नानमिव निष्फलमित्यर्थः। क्रियां विना ज्ञानानुगतमनुष्ठानमन्तरेण ज्ञानं विषयपरिज्ञानं दुर्भगा बन्ध्या नारी तस्याः भरणप्रायः अन्नवस्त्रादिना पोषणतुल्यः भारः विफलमपि अवश्यकर्तव्यतया क्लेशावहं कर्म। बन्ध्याकामिनीनां यावज्जीवं पोषणवत् क्रियां विना कार्य्यकलापपरिज्ञानं वृथैवेत्यर्थः।

(घ) मारात्मके—मारे हिंसायाम् आत्मा स्वभावो यस्य तस्मिन् हिंस्रप्रकृतिविशिष्टे।

(५९) शृङ्गिणामिति। शृङ्गाण्येषां सन्तीति शृङ्गिणः विषाणवन्तः तेषां शृङ्गायुधानां गोमहिषादीनां नदीनां स्रोतस्वतीनां नखिनां नखायुधानां व्याघ्रादीनां शस्त्रेण पाणयो विद्यन्ते येषां तेषां शस्त्रधारिणां स्त्रीषु नारीषु राजकुलेषु च धर्माधिकरणे च विश्वासः प्रत्ययः नैव कर्तव्यः विधेयः। एतेषु न कथमपि विश्वसितव्यमित्यर्थः।

(६०) सर्वस्येति। सर्वस्य जनस्य स्वभावाः परीक्ष्यन्ते सम्यक् विचार्य्यन्ते, इतरे विद्यावत्तादिगुणाः न परीक्ष्यन्ते लोकैरिति शेषः। अन्यान् गुणानपेक्ष्य प्रथमं स्वभावपरीक्षणं श्रेयः इत्यर्थः। हि यतः, स्वभावः सर्वान् गुणान् अतीत्य अतिक्रम्य मूर्ध्नि शिरसि सर्वोपरीत्यर्थः वर्त्तते तिष्ठति। प्रकृतिर्दुरतिक्रमेति भावः।

अन्यच्च, स हि गगनविहारी कल्मषध्वंसकारी
दशशतकरधारी ज्योतिषां मध्यचारी।
विधुरपि विधियोगात् ग्रस्यते राहुणासौ
लिखितमपि ललाटे प्रोज्झितुं कः समर्थः ? ॥६१॥

इति चिन्तयन्नेवासौ व्याघ्रेण व्यापादितः खादितश्च।
अतोऽहं ब्रवीमि "कङ्कणस्य तु लोभेन इत्यादि"। अतः
सर्वथा (ङ) अविचारितं कर्म्म न कर्त्तव्यमिति।

यतः, सुजीर्णमन्नं, सुविचक्षणः सुतः,
सुशासिता स्त्री, नृपतिः सुसेवितः।
सुचिन्त्य चोक्तं, सुविचार्य्य यत् कृतं,
सुदीर्घकालेऽपि न याति विक्रियाम्" ॥ ६२ ॥

---

(६१) सहीति। गगने विहरतीति गगनविहारी आकाशे विहरमाणः कल्मषं पापं तस्य ध्वंसं नाशं करोतीति तथोक्तः सर्वपापघ्नः दशाहतं शतं दशशतं सहस्रमित्यर्थः कराः मयूखास्तान् धरतीति सहस्रकिरणमाली ज्योतिषां नक्षत्राणां मध्यचारी मध्ये विराजमानः असौ प्रसिद्धः विधुश्चन्द्रोऽपि विधियोगात् दैवनियमनात् राहुणा विधुन्तुदेन ग्रस्यते स्पृश्यते अपि निश्चितं ललाटे भाग्ये लिखितं विधात्रेति शेषः प्रोज्झितुं निवारयितुं प्रतीकर्त्तुम् अन्यथा कर्त्तुमिति यावत्, को जनः समर्थः न कोऽपि। ललाटे लिखितं यत्तु षष्ठीजागरवासरे। न हरिः शङ्करो ब्रह्मा चान्यथा कर्त्तुमर्हतीति भावः।

(ङ) अविचारितं—पूर्वं सम्यगनालोचितं प्रागवितर्कितम्।

(६२) सुजीर्णमिति। सुजीर्णं परिपाकमापादितम् अन्नं भक्ष्यं वस्तु सुविचक्षणः सुष्ठु शिक्षितः सुतः पुत्रः, सुशासिता विशेषेण वशं

एतद्वचनं श्रुत्वा कश्चित् कपोतः सदर्पमाह, "आः ! किमेवमुच्यते ?

वृद्धस्य वचनं ग्राह्यमापत्काले ह्युपस्थिते ।
सर्वत्रैवं विचारे न भोजनेऽपि प्रवर्त्तते ॥ ६३ ॥

यतः, शङ्काभिः सर्वमाक्रान्तमन्नं पानञ्च भूतले ।
प्रवृत्तिः कुत्र कर्त्तव्या ? जीवितव्यं कथं नु वा ? ॥६४॥

तथा चोक्तम्,

---

गमिता स्त्री पतिच्छन्दानुवर्त्तिनी नारी, सुसेवितः सर्वप्रयत्नेन आराधितः नृपतिः राजा, सुचिन्त्य सविशेषं विविच्य उक्तं कथितं, सुविचार्य्य सम्यक् समालोच्य यत् कृतम् अनुष्ठितम्, एतत् सर्वं सुदीर्घकालेऽपि बहुतिथे काले गतेऽपि चिरेणापीति यावत्, विक्रियां विकारस् अन्यथेति यावत्, न याति प्राप्नोति ।

(६३) वृद्धस्येति । आपत्काले विपत्समये उपस्थिते हि आगते सति वृद्धस्य वयोवृद्धत्वे लब्धप्रावीण्यस्य वचनं वाक्यम् उपदेश इति यावत्, ग्राह्यं ग्रहणार्हं, सर्वत्र सर्वस्मिन् विषये अनपेक्षितवृद्धोपदेशविषये एवं वृद्धवचनं ग्राह्यमिति विचारे सिद्धान्ते कृते तु सति भोजनेऽपि आहारेऽपि जीवनधारणस्य प्रधानसाधनभूतेऽपीति भावः अप्रवर्त्तनं प्रवृत्त्यभावः । वृद्धा हि खाद्यमिदं गुरुपाकं चिरेण पच्यते अतो मा भुङ्क्ष्व इत्येवम् उपदिशन्तीति न सर्वत्र तेषां वचनमनुसरणीयमित्यर्थः ।

(६४) शङ्काभिरिति । भूतले पृथिव्यां सर्वम् अन्नं पानञ्च (पीयते यत् तत् पानं कर्मणि अनट्) शङ्काभिः रोगोत्पादनभयैराक्रान्तं युक्तम् एवं सति कुत्र वस्तुनि प्रवृत्तिः अभिलाषः पानभोजनेच्छा कर्त्तव्या विधेया नु भो (चित्तग्रीवसम्बोधनमेतत्) कथं केन प्रकारेण वा पानभोजने प्रवृत्तिमन्तरेण वेत्यर्थः जीवितव्यं प्राणितव्यम् ।

ईर्षी, घृणी, त्वसन्तुष्टः, क्रोधनो, नित्यशङ्कितः ।
परभाग्योपजीवी च, षडेते दुःखभागिनः" ॥ ६५ ॥

एतच्छ्रुत्वा सर्वे कपोतास्तत्रोपविष्टाः ।

यतः, सुमहान्त्यपि शास्त्राणि धारयन्तो बहुश्रुताः ।
छेत्तारः संशयानाञ्च क्लिश्यन्ते लोभमोहिताः ॥ ६६ ॥

अन्यच्च,

लोभात् क्रोधः प्रभवति, लोभात् कामः प्रजायते ।
लोभान्मोहश्च नाशश्च, लोभः पापस्य कारणम् ॥ ६७ ॥

---

(६५) ईर्षीति । ईर्षा परस्त्रीकातरता विद्यतेऽस्येति ईर्षी परस्त्रीकातरः, घृणी अत्यन्तदयालुः सर्वदा सर्वस्मिन् विषये जुगुप्साशीलो वा, असन्तुष्टः सन्तोषहीनः, क्रोधनः कोपनस्वभावः, नित्यं शङ्का अस्य जातेति नित्यशङ्कितः सर्वदा सर्वत्र शङ्कायुक्तः, परस्य भाग्यं परभाग्यं तेन उपजीवतीति परभाग्योपजीवी परसम्पदा जीविकानिर्वाहकश्च, एते षट् षड्विधा लोका, दुःखभागिनः दुःखभाजो भवन्तीति शेषः ।

(६६) सुमहान्तीति । सुमहान्ति प्रधानानि शास्त्राणि धारयन्तः पठन्तः बहु श्रुतं शास्त्रं ज्ञानं येषां ते बहुश्रुताः बहुदर्शिनः अतएव संशयानां बहुषु विषयेषु जातानां सन्देहानां छेत्तारः निर्णायकाश्च पण्डिताः लोभमोहिताः लोभपरवशाः सन्तः क्लिश्यन्ते क्लेशमापाद्यन्ते लोभेनेति शेष : ।

(६७) लोभादिति । लोभात् लाभे उत्कटेच्छायाः क्रोधः कोपः प्रभवति जायते । लोभात् कामः विषयभोगवासना प्रजायते उत्पद्यते । लोभात् मोहः विवेकराहित्यं नाशः मृत्युश्च प्रजायते इति पूर्वेणान्वयः । इत्थं लोभः पापस्य अनिष्टस्य कारणं मूलम् । लोभः सर्वानर्थनिदानमित्यर्थः ।

अनन्तरं ते सर्वे (च) जालनिबद्धा बभूवुः, ततो यस्य वचनात् (छ) तत्रावलम्बितास्तं सर्वे तिरस्कुर्वन्ति।
यतः, न गणस्याग्रतो गच्छेत्, सिद्धे कार्य्ये समं फलम्।
यदि कार्य्यविपत्तिः स्यात्, मुखरस्तत्र हन्यते ॥६८॥
तथा चोक्तम्,
आपदां कथितः पन्था इन्द्रियाणामसंयमः।
तज्जयः सम्पदां मार्गो, येनेष्टं तेन गम्यताम् ॥ ६९ ॥
तस्य तिरस्कारं श्रुत्वा चित्रग्रीव उवाच "(ज) नायमस्य दोषः।

---

(च) जालनिबद्धाः—जालेन पाशेन निबद्धाः संरुद्धाः पाशनियमिताः।
(छ) तत्रावलम्बिताः—तत्र भूमौ अवलम्बिताः अवरूढाः।
(६८) नेति। गणस्य समूहस्य अग्रतः अग्रे न गच्छेत् न यायात् बहुभिः साध्ये कार्य्ये नैकेन पुरः प्रवर्त्तितव्यमित्यर्थः। कुतः कार्य्ये सिद्धे सफले सति फलं लाभः समं तुल्यम्। सर्व एव समांशेन फलभागिनः। यदि कार्य्यविपत्तिः कार्य्यध्वंसः स्यात् भवेत् तत्र तस्मिन् विषये तत्र गणे वा (निर्द्धारे सप्तमी) मुखरः अग्रयायी अग्रे प्रवर्त्तयिता हन्यते तिरस्क्रियते इत्यर्थः।
(६९) इन्द्रियाणामिति। इन्द्रियाणां वाङ्मनश्चक्षुरादीनाम् असंयमः अनिग्रहः आपदाम् अनिष्टानां पन्थाः मार्गः कथितः स्मृतः पण्डितैरिति शेषः। अजितेन्द्रिया एव विविधास्वापत्सु निमज्जन्तीत्यर्थः। तेषाम् इन्द्रियाणां जयः दमनं निग्रह इति यावत् सम्पदां श्रेयसां मार्गः पन्थाः एवमुभयोर्मार्गयोर्मध्ये येन पथा गमने इष्टं शुभं जायते तेन पथा गम्यतां भवद्भिरिति शेषः।
(ज) नायमस्य दोषः—अयं जालबन्धनरूपोऽपायः न अस्य चित्रग्रीवस्य दोषः दोषेण घटित इत्यर्थः।

यतः, आपदामापतन्तीनां हितोऽप्यायाति हेतुताम् ।
मातृजङ्घा हि वत्सस्य स्तम्भीभवति बन्धने ॥ ७० ॥

अन्यच्च, स बन्धुर्यो विपन्नानामापदुद्धरणक्षमः ।
न तु भीतपरित्राणवस्तूपालम्भपण्डितः ॥ ७१ ॥

विपत्काले विस्मय एव (क) कापुरुषलक्षणं, तदत्र धैर्यमवलम्ब्य प्रतीकारश्चिन्त्यताम् ।

यतः, विपदि धैर्यमथाभ्युदये क्षमा,
सदसि वाक्पटुता युधि विक्रमः ।

---

(७०) आपदामिति । हितोऽपि हितकरोऽपि विषयः आपतन्तीनाम् आगच्छन्तीनाम् अवश्यम्भाविनीनामिति यावत् आपदां विपदां हेतुतां कारणत्वम् आयाति प्राप्नोति । हि तथाहि मातृजङ्घा मातृजङ्घा मातुरूर्द्धदेशः विपदि आश्रयणीयं स्थानमित्यर्थः । वत्सस्य बन्धने बन्धनार्थम् अस्तम्भः स्तम्भः भवतीति स्तम्भीभवति (अभूततद्भावार्थे च्विः) बन्धनस्योपायान्तराभावे धेनुजङ्घायामेव वत्सं बद्ध्वा गां दुहन्तीत्यर्थः ।

(७१) स इति । यः विपन्नानाम् आपदि पतितानाम् आपदः उद्धरणं परित्राणं तस्मिन् क्षमः विपत्प्रतीकारसमर्थः स बन्धुः । तु किन्तु भीतानाम् आर्त्तानां परित्राणाय यत् वस्तु विषयः उपाय इति यावत् तेन उपालम्भः तिरस्कारः अनेनैवोपायेन कथं विपदो नातिक्रान्तवान् इत्येवं तिरस्कारस्तस्मिन् पण्डितः कुशलः न बन्धुरिति शेषः । प्रकृते आपदुद्धरणे विमुखः सन् तत्प्रतीकारार्थमुपायप्रदर्शको न बन्धुरित्यर्थः ।

(क) कापुरुषलक्षणम्—कुत्सितः पुरुषः कापुरुषः तस्य लक्षणं चिह्नम् । हीनपौरुषत्वसूचकम् ।

(७२) विपदीति । विपदि आपत्समये धैर्यम् अव्याकुलता अथ अभ्युदये उन्नतौ क्षमा सहिष्णुता अनौद्धत्यमिति यावत् सदसि सभायां

यशसि चाभिरुचिर्व्यसनं श्रुतौ,
प्रकृतिसिद्धमिदं हि महात्मनाम्॥ ३२॥

सम्पदि यस्य न हर्षो, विपदि विषादो न, रणे च धीरत्वम्।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम्॥ ३३॥

अन्यच्च, षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता॥ ३४॥

इदानीमपि एवं सर्वैरेकचित्तीभूय (ज) जालमादाय उड्डीयताम्।

---

वाक्पटुता वाक्प्रयोगनैपुण्यं वाग्मित्वमिति यावत् युधि युद्धे विक्रमः [illegible] यशसि कीर्तौ च अभिरुचिः स्पृहा श्रुतौ शास्त्रे व्यसनं आसक्तिः अत्यन्तानुरागः हि निश्चितम् इदम् एतत् सर्वं महात्मनां महानुभावानां प्रकृत्या सिद्धं प्रकृतिसिद्धं स्वभावसिद्धं सत एव सम्भवम्।

(३३) सम्पदीति। सम्पदि सम्पत्काले यस्य जनस्य न हर्षो, विपदि विपत्काले च न विषादः विषण्णता, रणे च धीरत्वं धैर्यं, तं एवम्भूतं त्रिभुवनतिलकं त्रिलोकश्रेष्ठं सुतं पुत्रं जननी प्रसूतिः विरलं स्तोकं जनयति प्रसूते।

(३४) षडिति। इह जगति भूतिम् उन्नतिम् इच्छता अभिलषता उन्नतिकामेनेत्यर्थः, पुरुषेण जनेन षड् दोषाः हातव्याः त्यक्तव्याः। के ते इत्याह निद्रेति। निद्रा स्वापः तन्द्रा कार्ये वैमुख्यं भयं भीरुस्वभावः आलस्यम् अलसता दीर्घेण चिरकालेन सूत्र्यते प्रारब्धं कर्म समाप्यते येन स तस्य भावः दीर्घसूत्रता चिरक्रियता।

(ज) एकचित्तीभूय—एकं चित्तं येषां ते एकचित्तास्तेषां भावः अनेकचित्ताः न एकचित्ताः एकचित्ता भूत्वेति एकचित्तीभूय अभूततद्भावार्थे च्विः।

यतः, अल्पानामपि वस्तूनां संहतिः कार्य्यसाधिका ।
तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥७५॥
संहतिः श्रेयसी पुंसां स्वकुलैरल्पकैरपि ।
तुषेणापि परित्यक्ता न प्ररोहन्ति तण्डुलाः" ॥७६॥

इति विचिन्त्य पक्षिणः सर्वे जालमादाय उत्पतिताः । अनन्तरं स व्याधः सुदूरात् (ट) जालापहारकांस्तानवलोक्य पश्चाद् धावितोऽचिन्तयत् ।

"संहतास्तु हरन्तीमे जालं मम विहङ्गमाः ।
यदा तु निपतिष्यन्ति वशमेष्यन्ति मे तदा" ॥७७॥

ततस्तेषु (ठ) चक्षुर्विषयमतिक्रान्तेषु पक्षिषु स व्याधो

---

(७५) अल्पानामिति । अल्पानां क्षुद्राणामपि वस्तूनां संहतिः मिलनं कार्य्यसाधिका कार्य्यसम्पादिका भवतीति शेषः । क्षुद्रा अपि समेत्य महत् कार्य्यं साधयन्तीत्यर्थः । तत्र दृष्टान्तमाह गुणत्वं रज्जुत्वम् आपन्नैः प्राप्तैः रज्जुरूपेण परिणतैरित्यर्थः तृणैः कुशादिभिः मत्तदन्तिनः मदस्राविणः हस्तिनः बध्यन्ते नियम्यन्ते ।

(७६) संहतिरिति । पुंसां नराणाम् अल्पकैरपि अल्पसंख्यकैरपि स्वकुलैः स्ववंशोत्पन्नैः सह संहतिर्मिलनं श्रेयसी प्रशंसनीया । तुषेणापि परित्यक्ताः हीनाः तण्डुलाः न प्ररोहन्ति अङ्कुरान् उत्पादयन्ति, तुषहीनात् तण्डुलात् कदाचिदङ्कुरो जायते इत्यर्थः ।

(ट) जालापहारकान्—जालस्य अपहारकास्तान् पाशचोरान् ।

(७७) संहता इति । इमे विहङ्गमाः पक्षिणः संहताः मिलिताः सन्तः मे मम जालं पाशं हरन्ति । तु किन्तु यदा यस्मिन् काले निपतिष्यन्ति भूमौ अवतरिष्यन्ति तदा मे मम वशम् एष्यन्ति प्राप्स्यन्ति मम वशीभूता भविष्यन्ति, तदा न मे दुरासदा भविष्यन्तीत्यर्थः ।

(ठ) चक्षुर्विषयमतिक्रान्तेषु—दृष्टिपथहिर्भूतेषु ।

यशसि चाभिरुचिर्व्यसनं श्रुतौ,
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ७२ ॥

सम्पदि यस्य न हर्षो, विपदि विषादो न, रणे च धीरत्वम् ।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ ७३ ॥

अन्यच्च, षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ७४ ॥

इदानीमपि एवं सर्वैरेकचित्तीभूय (ज) जालमादाय उड्डीयताम् ।

---

वाक्पटुता वाक्प्रयोगनैपुण्यं वाग्मित्वमिति यावत् युधि युद्धे विक्रमः साहसप्रदर्शनं यशसि कीर्त्तौ च अभिरुचिः स्पृहा श्रुतौ शास्त्रे व्यसनं आसक्तिः अत्यन्तानुरागः हि निश्चितम् इदम् एतत् सर्वं महात्मनां महानुभावानां प्रकृत्या सिद्धं प्रकृतिसिद्धं स्वभावसिद्धं स्वत एव सम्पन्नम् ।

(७३) सम्पदीति । सम्पदि सम्पत्समये यस्य जनस्य न हर्षो, विपदि विपत्काले च न विषादः विषण्णता, रणे च धीरत्वं धैर्य्यं, तं एवम्भूतं त्रिभुवनतिलकं त्रिलोकश्रेष्ठं सुतं पुत्रं जननी प्रसूतिः विरलं स्तोकं जनयति प्रसूते ।

(७४) षडिति । इह जगति भूतिम् उन्नतिम् इच्छता अभिलषता उन्नतिकामेनेत्यर्थः, पुरुषेण जनेन षट् दोषाः हातव्याः त्यक्तव्याः । के ते इत्याह निद्रेति । निद्रा स्वापः तन्द्रा कार्य्यवैमुख्यं भयं भीरुस्वभावः आलस्यम् अलसता दीर्घेण चिरकालेन सूत्रयते प्रारब्धं कर्म्म समाप्यते येन स तस्य भावः दीर्घसूत्रता चिरक्रियता ।

(ज) एकचित्तीभूय—एकं चित्तं येषां ते एकचित्तास्तेषां भावः एकचित्ताः न एकचित्ताः एकचित्ता भूत्वेति एकचित्तीभूय अभूततद्भावार्थे च्विः ।

यतः, अल्पानामपि वस्तूनां संहतिः कार्य्यसाधिका ।
तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥७५॥
संहतिः श्रेयसी पुंसां स्वकुलैरल्पकैरपि ।
तुषेणापि परित्यक्ता न प्ररोहन्ति तण्डुलाः” ॥७६॥

इति विचिन्त्य पक्षिणः सर्वे जालमादाय उत्पतिताः । अनन्तरं स व्याधः सुदूरात् (ट) जालापहारकांस्तानव-लोक्य पश्चाद् धावितोऽचिन्तयत् ।

“संहतास्तु हरन्तीमे जालं मम विहङ्गमाः ।
यदा तु निपतिष्यन्ति वशमेष्यन्ति मे तदा” ॥७७॥

ततस्तेषु (ठ) चक्षुर्विषयमतिक्रान्तेषु पक्षिषु स व्याधो

---

(७५) अल्पानामिति । अल्पानां क्षुद्राणामपि वस्तूनां संहतिः मिलनं कार्य्यसाधिका कार्य्यसम्पादिका भवतीति शेषः । क्षुद्रा अपि समेत्य महत् कार्य्यं साधयन्तीत्यर्थः । तत्र दृष्टान्तमाह गुणत्वं रज्जुत्वम् आपन्नैः प्राप्तैः रज्जुरूपेण परिणतैरित्यर्थः तृणैः कुशाभिः मत्त-दन्तिनः मदस्राविणः हस्तिनः बध्यन्ते नियम्यन्ते ।

(७६) संहतिरिति । पुंसां नराणाम् अल्पकैरपि अल्पसंख्यकैरपि स्वकुलैः स्ववंशोत्पन्नैः सह संहतिर्मिलनं श्रेयसी प्रशंसनीया । तुषे-णापि परित्यक्ताः हीनाः तण्डुलाः न प्ररोहन्ति अङ्कुरान् उत्पाद-यन्ति, तुषहीनात् तण्डुलात् कदाचिदङ्कुरो जायते इत्यर्थः ।

(ट) जालापहारकान्—जालस्य अपहारकास्तान् पाशचोरान् ।

(७७) संहता इति । इमे विहङ्गमाः पक्षिणः संहताः मिलिताः सन्तः मे मम जालं पाशं हरन्ति । तु किन्तु यदा यस्मिन् काले निप-तिष्यन्ति भूमौ अवतरिष्यन्ति तदा मे मम वशम् एष्यन्ति प्राप्स्यन्ति मम वशीभूता भविष्यन्ति, तदा न मे दुरासदा भविष्यन्तीत्यर्थः ।

(ठ) चक्षुर्विषयमतिक्रान्तेषु—दृष्टिपथहिर्भूतेषु ।

निवृत्तः। अथ लुब्धकं निवृत्तं दृष्ट्वा कपोता ऊचुः, "किमिदानीं कर्तुमुचितम्"? चित्रग्रीव उवाच,

माता मित्रं पिता चेति स्वभावात्त्रितयं हितम्।
कार्य्यकारणतश्चान्ये भवन्ति हितबुद्धयः॥ ७८॥

तस्मै मित्रं हिरण्यको नाम मूषिकराजो गण्डकीतीरे चित्रवने निवसति, सोऽस्माकं पाशांश्छेत्स्यति।" इत्यालोच्य सर्वे हिरण्यकविवरसमीपं गताः। हिरण्यकश्च सर्वदा (ड) अपायशङ्कया (ढ) शतद्वारं विवरं कृत्वा निवसति, ततो हिरण्यकः (ण) कपोतावपातभयाच्चकितस्तूष्णीं (त) स्थितः।

चित्रग्रीव उवाच, "सखे हिरण्यक! कथमस्मान् न

---

(७८) मातेति। स्वभावात् स्वभावतः कार्य्यकारणभावमन्तरेणापि माता जननी, मित्रं बन्धुर्मातुलादयः पिता जनकश्चेति त्रितयं त्रिसंख्यकं हितं हितकरम् अन्ये एभ्यस्त्रिभ्यः इतरे कार्य्यकारणतः हिताहिताचरणेन च हितबुद्धयः हिता हितकरी बुद्धिर्येषां ते तथोक्ता हितैषिणो भवन्ति।

(ड) अपायशङ्कया—अपायोऽनिष्टं तस्मात् शङ्का त्रासः तया। अनिष्टापातभयेन।

(ढ) शतद्वारं—शतं द्वाराणि यस्य तम्। समन्तात् बहुभिर्द्वारैर्युक्तम्।

(ण) कपोतावपातभयात्—कपोतानाम् अवपातः अवरोहणं तस्मात् भयं तस्मात्। कपोतानामवरोहणे यः पक्षशब्दो जातः तस्मादुत्पन्नेन त्रासेनेत्यर्थः।

(त) तूष्णीं—निःशब्दम्। अव्ययं स्थित इति क्रियाया विशेषणम्।

सम्भाषसे ?" ततो हिरण्यकस्तद्वचनं (थ) प्रत्यभिज्ञाय ससम्भ्रमं बहिर्निःसृत्याब्रवीत् "आः! पुण्यवानस्मि प्रियसुहृन्मे चित्रग्रीवः समायातः।

यस्य मित्रेण सम्भाषो, यस्य मित्रेण संस्थितिः।
यस्य मित्रेण संलापस्ततो नास्तीह पुण्यवान्॥" ७९॥

अथ (द) पाशबद्धांश्चैतान् दृष्ट्वा सविस्मयः क्षणं स्थित्वा उवाच, "सखे! किमेतत् ?"।

चित्रग्रीव उवाच, "सखे! अस्माकं (ध) प्राक्तनजन्मकर्म्मणः फलमेतत् (न)।

यस्माच्च येन च यथा च यदा च यच्च
यावच्च यत्र च शुभाशुभमात्मकर्म।

---

(थ) प्रत्यभिज्ञाय—स्वरसंयोगेन चित्रग्रीव एव माम् आह्वयति इति विदित्वेत्यर्थः।

(७९) यस्येति। यस्य जनस्य मित्रेण बन्धुना सह सम्भाषः। यस्य जनस्य मित्रेण सह संस्थितिः एकत्रावस्थानं सहवास इति यावत्। यस्य जनस्य मित्रेण बन्धुना सह संलापः मिथो भाषणं परस्पररहस्यकथनमिति यावत्। ततः तस्मात् जनात् तं जनमपेक्ष्येत्यर्थः इह जगति पुण्यवान् पुण्यशाली नास्ति। बहुपुण्येनैव मित्रेणैतत् सर्वं घटते इत्यर्थः।

(द) पाशबद्धान्—जालनियमितान्।

(ध) प्राक्तनजन्मकर्म्मणः—प्राक् भवं प्राक्तनं तच्च जन्म चेति तस्मिन् कर्म्म पापपुण्यात्मकं कार्य्यं तस्य। पूर्व्वजन्मकृतकार्य्यस्य।

(न) एतत्—जालबन्धनरूपम्।

(८०) यस्मादिति। यस्मात् यत्कारणात् येन करणेन च यथा

तस्माच्च तेन च तथा च तदा च तच्च
तावच्च तत्र च विधातृवशादुपैति ॥ ८० ॥
रोगशोकपरीतापबन्धनव्यसनानि च ।
आत्मापराधवृक्षस्य फलान्येतानि देहिनाम्" ॥ ८१ ॥

एतच्छ्रुत्वा मूषिकश्चित्रग्रीवस्य बन्धनं छेत्तुं सत्वरमुपसर्पति। चित्रग्रीव उवाच, "मित्र! मैवं, प्रथममस्मदाश्रितानामेतेषां तावत् पाशांश्छिन्धि, तदा मम पाशं पश्चात् छेत्स्यसि।"

हिरण्यकोऽप्याह, "अहं (प) अल्पशक्तिर्दन्ताश्च मे कोमलास्तदेतेषां पाशांश्छेत्तुं कथमहं समर्थो भवामि? तत् यावन्मे दन्ता न त्रुट्यन्ति, तावत् तव पाशं छिनद्मि। तदनन्तरमप्येषां बन्धनं यावत् शक्यं छेत्स्यामि।

---

येन प्रकारेण च यदा यस्मिन् समये यत् यादृशं यावत् यावत्कालं यत्र यस्मिन् स्थाने शुभाशुभं पापपुण्यम् आत्मनः स्वस्य कर्म पापपुण्यादिकं तस्मात् हेतोः तेन कारणेन तथा तेन प्रकारेण तदा तस्मिन् समये तत् कर्म तावत् तावत्कालं तत्र तस्मिन् स्थाने विधातृवशात् विधिनियमितत्वात् उपैति प्राप्नोति फलतीत्यर्थः ।

(८१) रोगेति । रोगः पीड़ा, शोकः पुत्रादिनाशजनितं दुःखं, परीतापः कृतस्य दोषस्य अनुशोचनं, बन्धनं कारागारादौ स्थितिः, व्यसनं विपत्, एतानि देहिनां शरीरिणाम् आत्मनः स्वस्य अपराधा एव वृक्षास्तेषां स्वकृतदोषाणां फलानि परिणामभूतानि । वृक्षेभ्यः फलानीव स्वकृतदोषेभ्यः रोगादयो उत्पद्यन्ते इत्यर्थः ।

(प) अल्पशक्तिः—अल्पा शक्तिर्यस्य सः क्षीणबलः ।

चित्रग्रीव उवाच, "अस्त्वेवं, तथापि यथाशक्ति बन्धन-मेतेषां खण्डय।" हिरण्यकेन उक्तम् (फ) आत्मपरित्यागेन यदाश्रितानां परिरक्षणं, तन्न (ब) नीतिवेदिनां सम्मतम्।

यतः, आपदर्थं धनं रक्षेद्दारान् रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद् दारैरपि धनैरपि॥ ८२॥

अन्यच्च, धर्मार्थकाममोक्षाणां प्राणाः संस्थितिहेतवः।
तान् निघ्नता किन्न हतं? रक्षता किन्न रक्षितम्?॥"८३॥

चित्रग्रीव उवाच, "सखे! नीतिस्तावदीदृशी एव (भ) किन्त्वहमस्मदाश्रितानां दुःखं सोढुं सर्वथाऽसमर्थस्तेनेदं ब्रवीमि।

यतः, धनानि जीवितञ्चैव परार्थे प्राज्ञ उत्सृजेत्।
सन्निमित्ते वरं त्यागो विनाशे नियते सति॥ ८४॥

---

(फ) आत्मपरित्यागेन—आत्मानमुपेक्ष्य।

(ब) नीतिवेदिनां—नीतिं विदन्ति ये तेषां नीतिशास्त्राभिज्ञानाम्।

(८२) आपदिति। आपदर्थं विपत्प्रतीकारार्थं धनम् अर्थं रक्षेत्, धनैरपि दारान् स्त्रियं रक्षेत्, दारैः स्त्रिया धनैरपि सततं सर्वदा आत्मानं स्वजीवनं रक्षेत् पालयेत् पण्डित इति शेषः।

(८३) धर्मार्थेति। प्राणाः जीवनं धर्मः अहिंसादिः अर्थः अर्जन-वर्द्धनसंरक्षणात्मकं धनं कामः विषयभोगवासना मोक्षः अपवर्गः तेषां चतुर्वर्गस्य संस्थितिहेतवः रक्षाकारणानि तान् प्राणान् रक्षता जनेन किं न रक्षितं निघ्नता विनाशयता जनेन च किं न हृतं विनाशि-तम्। चतुर्वर्गसाधनभूतेषु प्राणेषु विनष्टेषु सर्वमेव विनष्टं भवेदित्यर्थः।

(भ) ईदृशी एव—आत्मानं सततं रक्षेदेवंभूतैव।

(८४) धनानीति। प्रज्ञा विद्यतेऽस्येति प्राज्ञः बुद्धिमान् जनः

अथमपरश्चासाधारणो हेतुः,—

जातिद्रव्यबलानाञ्च साम्यमेषां मया सह ।
मत्प्रभुत्वफलं ब्रूहि कदा किन्तद्भविष्यति ? ॥ ८५ ॥

अन्यच्च,

विना वर्त्तनमेवैते न त्यजन्ति ममान्तिकम् ।
तस्मे प्राणव्ययेनापि जीवयैतान्ममाश्रितान् ॥ ८६ ॥

किञ्च, मांसमूत्रपुरीषास्थिनिर्मिते च कलेवरे ।
विनश्वरे विहायास्थां यशः पालय मित्र ! मे ॥ ८७ ॥

---

परार्थे परनिमित्तं परेषामुपकारार्थमित्यर्थः धनानि अर्थान् जीवितं प्राणांश्च उत्सृजेत् त्यजेत् । कुत इत्याह, विनाशे तत्त्वस्य धनस्य व्यये जीवितस्य मरणे च नियते निश्चिते सति सत् निमित्तं कारणं तस्मिन् परोपकारस्वरूपसदनुष्ठाने त्यागः धनजीवानामिति शेषः वरं श्रेयान् ।

(८५) जातीति । एषां कपोतानां जातिः कपोतत्वं, द्रव्यं पक्षचञ्च्वादिरूपा सम्पत् बलं सामर्थ्यम् उत्पतनादौ शक्तिरिति यावत् । मया सह साम्यम् एकरूपता । एवं सति मयि प्रभुत्वं मयि अर्पितम् आधिपत्यं तस्य फलं ब्रूहि कथय कदा कस्मिन् काले नेदानीं चेदिति भावः किं भविष्यति ।

(८६) विनेति । वर्त्तनं जीविकां वेतनं वा विनैव एते कपोताः मम अन्तिकं सन्निधिं न त्यजन्ति न परिहरन्ति । तत् तस्मात् वर्तनाभावेऽपि सविशेषानुरागसम्भवात् मे मम प्राणव्ययेनापि जीवनविनिमयेनापि एतान् मम आश्रितान् शरणागतान् जीवय रक्ष ।

(८७) मांसेति । हे मित्र ! मांसस्य मूत्रस्य पुरीषस्य शक्रस्य अस्थि च तैर्निर्मिते आरब्धे विनश्वरे नियतविनाशे कलेवरे शरीरे आस्थां यत्नं विहाय त्यक्त्वा मे मम यशः कीर्त्तिं पालय रक्ष यशः अविनश्वरं कुरु इत्यर्थः ।

अपरञ्च पश्य,

यदि नित्यमनित्येन निर्मलं मलवाहिना।

यशः कायेन लभ्येत, तन्न लब्धं भवेन्नु किम् ? ॥ ८८ ॥

यतः, शरीरस्य गुणानाञ्च दूरमत्यन्तमन्तरम्।

शरीरं क्षणविध्वंसि कल्पान्तस्थायिनो गुणाः ॥ ८९ ॥

इत्याकर्ण्य हिरण्यकः (म) प्रहृष्टमनाः पुलकितः सन्नब्रवीत्, "साधु मित्र! साधु, अनेनाश्रितवात्सल्येन त्रैलोक्यस्यापि प्रभुत्वं त्वयि युज्यते" एवमुक्त्वा तेन सर्वेषां बन्धनानि छिन्नानि। ततो हिरण्यकः सर्वान् सादरं सम्पूज्याह। "सखे चित्रग्रीव! सर्वथा अत्र जालबन्धनविधौ (य) सति (र) दोषमाशङ्क्य आत्मन्यवज्ञा न कर्तव्या।

---

(८८) यदीति। यदि अनित्येन अस्थिरेण मलं पुरीषं वहति यः स तेन मलपूरितेन कायेन शरीरेण नित्यं स्थायि निर्मलं विशुद्धं यशः लभ्येत प्राप्येत जनेनेति शेषः तत् तदा किं न लब्धं भवेत् स्यात्। स्वल्पमूल्येन बहुमूल्यविनिमयो महान् लाभ इति भावः।

(८९) शरीरस्येति। शरीरस्य देहस्य गुणानां दयादाक्षिण्या-दीनाञ्च अन्तरं प्रभेदः अत्यन्तम् अतिशयेन दूरम् अतिमहदित्यर्थः। तथाहि, शरीरं क्षणविध्वंसि क्षणभङ्गुरं गुणाः कल्पस्य प्रलयस्य अन्तः तस्मिन् तिष्ठन्ति ये ते तथोक्ताः प्रलये स्थितिमन्त इत्यर्थः।

(म) प्रहृष्टमनाः—प्रहृष्टं प्रीतिविस्फारितं मनो यस्य सः। सन्तुष्टचित्तः।

(य) जालबन्धनविधौ—जाले पाशे बन्धनं संरोधः स एव विधि-र्व्यापारः तस्मिन्, पाशबन्धनव्यापारे।

(र) दोषं—लोकनिन्दाम्।

यतः, योऽधिकाद् योजनशतात् पश्यतीहामिषं खगः ।
स एव प्राप्तकालस्तु पाशबन्धं न पश्यति ॥ ९० ॥

अपरञ्च,

शशिदिवाकरयोर्ग्रहपीड़नं
गजभुजङ्गमयोरपि बन्धनम् ।
मतिमताञ्च विलोक्य दरिद्रतां
विधिरहो बलवानिति मे मतिः ॥ ९१ ॥

अन्यच्च,

व्योमैकान्तविहारिणोऽपि विहगाः संप्राप्नुवन्त्यापदं
बध्यन्ते निपुणैरगाधसलिलान्मत्स्याः समुद्रादपि ।
दुर्नीतं किमिहास्ति ? किं सुचरितं ? कः स्थानलाभे गुणः ?
कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ॥ ९२ ॥

---

(९०) य इति । इह जगति यः खगः पक्षी योजनानां शतं तस्मात् अधिकात् बहुदूरादपीत्यर्थः आमिषं भक्ष्यं पश्यति लक्षयति स एव खगः प्राप्तः उपस्थितः कालः नियतिर्यस्य स तथोक्तः सन् पाशबन्धं जालबन्धं न पश्यति लक्षयति । नियतिः केन बाध्यते इति भावः ।

(९१) शशीति । शशिदिवाकरयोः चन्द्रसूर्य्ययोः ग्रहपीड़नं राहुग्रासः गजभुजङ्गमयोः हस्तिसर्पयोः बन्धनं शृङ्खलेन मन्त्रौषधिभ्याञ्च संरोधनं मतिमतां विदुषाञ्च दरिद्रताम् अकिञ्चनत्वं विलोक्य अहो खेदे विधिर्दैवं बलवान् प्रबलः इति मे मम मतिः ज्ञानं निश्चय इति यावत् ।

(९२) व्योमेति । व्योम्नः आकाशस्य एकान्ते एकदेशे विहरन्ति ये तथोक्ताः आकाशैकदेशचारिणः विहगाः पक्षिणः आपदं विपदं

इति प्रबोध्यातिथ्यं कृत्वा आलिङ्ग्य च (ल) सम्प्रेषित-श्चित्रग्रीवोऽपि सपरिवारो यथेष्टदेशान् ययौ, हिरण्यकोऽपि स्वविवरं प्रविष्टः ।

यानि कानि च मित्राणि कर्त्तव्यानि शतानि च ।
पश्य मूषिकमित्रेण कपोता मुक्तबन्धनाः" ॥ ८२ ॥

अथ लघुपतनकनामा काकः (व) सर्वंवृत्तान्तदर्शी साश्चर्यं इदमाह, "अहो हिरण्यक ! श्लाघ्योऽसि, अतोऽहमपि त्वया सह मैत्रीमिच्छामि, अतो मां मैत्र्यानुग्रहीतुमर्हसि । एतच्छ्रुत्वा हिरण्यकोऽपि विवराभ्यन्तरादाह, कस्त्वं ? स

---

संप्राप्नुवन्ति अधिगच्छन्ति निपुणैः कुशलैः धीवरैः अगाधसलिलात् अतलस्पर्शात् समुद्रादपि मत्स्याः मीनाः बध्यन्ते भ्रियन्ते । इह संसारे किं दुर्नीतं दुश्चरितं किमस्ति किञ्च सुचरितं किमस्ति स्थानलाभे निरापदस्थानप्राप्तौ वा कः गुणः न कोऽपीत्यर्थः । व्यसने विपदि प्रसारितः विस्तारितः करः हस्तो येन स तथोक्तः अवश्यम्भाविन्यां विपदि करं प्रसार्येत्यर्थः कालः नियतिः दूरादपि किमुत अन्तिकात् स्पृहाति स्ववश्यतां प्रापयन्ति ।

(ल) संप्रेषितः—विसर्जितः ।

(८२) यानीति । यानि कानि च शतानि बहूनि मित्राणि कर्त्तव्यानि कार्य्याणि उत्तमाधममविचार्य्य बहुभिः सह मित्रता करणीयेत्यर्थः । मूषिकमित्रेण मूषिकबन्धुना कपोताः पारावताः मुक्तम् उन्मोचितं छिन्नमिति यावत् बन्धनं येषां ते तथोक्ताः छिन्नपाश-बन्धनाः बभूवुरिति शेषः । पश्य जानीहि ।

(व) सर्वंवृत्तान्तदर्शी—सर्वं वृत्तान्तं पश्यतीति सर्वंवृत्तान्तदर्शी । चित्रग्रीवादीनां पाशमोचनादिकं सर्वं प्रत्यक्षीकुर्वन् ।

ब्रूते, लघुपतनकनामा वायसोऽहम्। हिरण्यको विहस्य आह, "का त्वया सह मैत्री ?

यतः, यद् येन युज्यते लोके बुधस्तत्तेन योजयेत्।
अहमन्नं, भवान् भोक्ता, कथं प्रीतिर्भविष्यति ?॥ ९४॥

अपरञ्च, भक्ष्यभक्षकयोः प्रीतिर्विपत्तेरेव कारणम्।
शृगालात् पाशबद्धोऽसौ मृगः काकेन रक्षितः॥ ९५॥

वायसोऽब्रवीत् कथमेतत् ? हिरण्यकः कथयति।

"अस्ति मगधदेशे चम्पकावती नाम (अ) अरण्यानी, तस्यां चिरात्महता स्नेहेन मृगकाकौ निवसतः स च मृगः स्वेच्छया भ्राम्यन् (ब) हृष्टपुष्टाङ्गः केनचित् शृगालेनावलोकितः, तं दृष्ट्वा शृगालोऽचिन्तयत्, "आः ! कथमेतन्मांसं (स) सुललितं भक्षयामि ? भवतु विश्वासं तावदुत्पादयामि"

---

(९४) यदिति। बुधः पण्डितः यत् वस्तु येन वस्तुना सह लोके जगति युज्यते संगच्छति तत् वस्तु तेन वस्तुना सह योजयेत् मिलयेत् अहम् अन्नं भक्ष्यं वस्तु भवान् भोक्ता भक्षकः। कथं केन प्रकारेण प्रीतिः प्रणयः आवयोरिति शेषः भविष्यति सम्पत्स्यते न कथमपीत्यर्थः।

(९५) भक्ष्यभक्षकयोरिति। भक्ष्यः खाद्यः भक्षकः खादकः तयोः खाद्यखादकयोः प्रीतिः प्रणयः विपत्तेः आपदः एव कारणं हेतुः। शृगालात् शृगालमाश्रित्य अनुसृत्य वा पाशबद्धः जालनियमितः असौ वक्ष्यमाणो मृगः काकेन केनचिद् बन्धुना वायसेन रक्षितः पाशाद्विमोचितः।

(अ) अरण्यानी—महारण्यम्।

(ब) हृष्टपुष्टाङ्गः—हृष्टानि स्फूर्त्तिमापन्नानि पुष्टानि मांसलानि च अङ्गानि यस्य सः स्फूर्तियुक्तस्थूलकायः।

(स) सुललितं—कोमलं मधुरमिति यावत्।

इत्यालोच्य उपसृत्याब्रवीत्, "मित्र ! कुशलं ते ?" मृगेण उक्तं, "कस्त्वम् ?" जम्बुको ब्रूते "क्षुद्रबुद्धिनामा जम्बुकोऽहम् अत्रारण्ये बन्धुहीनो मृतवन्निवसामि इदानीं त्वां मित्रमासाद्य पुनः सबन्धुर्जीवलोकं (ङ) प्रविष्टोऽस्मि अधुना तवानुचरेण मया सर्वथा भवितव्यमिति"। मृगेणोक्तम्, एवमस्तु, ततस्तावदस्तङ्गते सवितरि भगवति मरीचिमालिनि (क) तौ मृगस्य वासभूमिं गतौ। तत्र चम्पकवृक्षशाखायां सुबुद्धिनामा काको मृगस्य चिरमित्रं निवसति।

तौ दृष्ट्वा काकोऽवदत्, "सखे! कोऽयं द्वितीयः ?" मृगो ब्रूते, "जम्बुकोऽयमस्मत्सख्यं (ख) इच्छन्नागतः"। काको ब्रूते, "मित्र ! अकस्मादागन्तुना (ग) सह मैत्री न युक्ता। तन्न भद्रमाचरितम्।

तथा चोक्तम्,

अज्ञातकुलशीलस्य वासो देयो न कस्यचित्।
मार्जारस्य हि दोषेण हतो गृध्रो जरद्गवः ॥ ८६ ॥

---

(ङ) जीवलोकं प्रविष्टः— जीवनं प्राप्तः।

(क) मरीचिमालिनि—मरीचीनां किरणानां माला विद्यतेऽस्येति तस्मिन् अंशुमालिनि।

(ख) अस्मत्सख्यम्—आवाभ्यां सख्यम् अस्मत्सख्यम्। आवाभ्यां सह मैत्रीम्।

(ग) आगन्तुना— नवागतेन अज्ञातकुलशीलेनेति भावः।

(८६) अज्ञातेति। कुलं वंशः शीलं स्वभावः अज्ञाते अविदिते कुलशीले वंशचरिते यस्य तस्य अपरिचितस्येत्यर्थः कस्यचित् जनस्य वासः आश्रयः न देयः दातव्यः, हि यतः मार्जारस्य बिडालस्य दोषेण

तावाहतुः, कथमेतत्? काकः कथयति। "अस्ति भागीरथीतीरे गृध्रकूटनाम्नि पर्वते महान् पर्कटीवृक्षः, तस्य कोटरे (घ) दैवदुर्विपाकाद्गलित- नखनयनो (ङ) जरद्गवनामा गृध्रः प्रतिवसति, अथ कृपया तज्जीवनाय (च) तद्वृक्षवासिनः पक्षिणः स्वाहारात् किञ्चिदुद्धृत्य ददति, तेनासौ जीवति। अथ कदाचिद्दीर्घकर्णनामा मार्जारः पक्षिशावकान् भक्षितुं तत्रागतः।

ततस्तमायान्तं दृष्ट्वा पक्षिशावकैर्भयार्त्तैः कोलाहलः (छ) कृतः, तच्छ्रुत्वा जरद्गवेनोक्तं, कोऽयमायाति? दीर्घ- कर्णो गृध्रमवलोक्य सभयमाह—"हा! हतोऽस्मि।
यतः, तावद्भयस्य भेतव्यं यावद्भयमनागतम्।
आगतन्तु भयं वीक्ष्य नरः कुर्याद् यथोचितम्॥८७॥

---

अपराधेन हेतुना जरद्गवः तन्नामा कश्चित् गृध्रः शकुनिः हतः व्यापादितः पक्षिभिरिति शेषः।

(घ) दैवदुर्विपाकात्—दुर्दैववशात्।

(ङ) गलितनखनयनः—नखानि च नयने च नखनयनानि गलितानि जीर्णतामापन्नानि नखनयनानि यस्य सः। जीर्णनखः अन्धश्चेत्यर्थः।

(च) तज्जीवनाय—तस्य जरद्गवस्य जीवनं रक्षितुम्।

(छ) कोलाहलः—कलरवः।

(८७) तावदिति। तावत् तावत्कालं भयस्य भयहेतोः (सम्बन्ध- विवक्षया षष्ठी) भेतव्यं त्रासितव्यं शङ्कितव्यमिति यावत्। यावत् यावत्- कालपर्य्यन्तं भयं भयकारणम् अनागतम् अनुपस्थितम्। नरः भयम्

ततोऽधुनातिसन्निधानेन पलायितुमशक्यम्। तद्यथा भवितव्यं तद्भवतु, तावद्विश्वासमुत्पाद्यास्य समीपमुपगच्छामि"। इत्यालोच्य तमुपसृत्याब्रवीत्, "आर्य्य! (ञ) त्वामभिवन्दे" (झ)। गृध्रोऽवदत्, कस्त्वम्? सोऽवदत्, मार्जारोऽहम्। गृध्रो ब्रूते, "दूरमपसर, नो चेद्धन्तव्योऽसि मया"। मार्जारोऽवदत्, श्रूयतां तावदस्मद्वचनं, ततो यद्यहं (ञ) बध्यस्तदा हन्तव्यः।

यतः, जातिमात्रेण किं कश्चिद्वध्यते पूज्यते क्वचित्।
व्यवहारं परिज्ञाय बध्यः पूज्योऽथवा भवेत्" ॥ ९८ ॥

गृध्रो ब्रूते ब्रूहि किमर्थमागतोऽसि? सोऽवदत्, "अहमत्र गङ्गातीरे नित्यस्नायी (ट) निरामिषाशी (ठ) ब्रह्मचर्य्येण

---

आगतम् उपस्थितं वीक्ष्य दृष्ट्वा यथोचितम् उचितमनतिक्रम्य यथागतं कुर्य्यात् अनुतिष्ठेत्।

(ञ) आर्य्य!—पूज्य!।

कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन्।
तिष्ठति प्रकृताचारे स वा आर्य्य इति स्मृतः॥

(झ) अभिवन्दे—प्रणमामि।

(ञ) बध्यः— बधं हिंसाम् अर्हतीति बध्यः अर्हार्थे यः।

(९८) जातीति। क्वचित् कुत्रचित् स्थाने कश्चित् जनः जातिमात्रेण केवलया वंशविचारणया किं बध्यते हन्यते अथवा पूज्यते सम्मान्यते नैतदुचितमित्याह व्यवहारमिति व्यवहारम् आचरणं परिज्ञाय विदित्वा बध्यः बधार्हः अथवा पूज्यः पूजनीयो भवेत्।

(ट) नित्यस्नायी—नित्यं स्नाति यः सः नित्यस्नानशीलः।

(ठ) निरामिषाशी—निरामिषम् अश्नातीति निरामिषाशी मत्स्यमांसाहारे विरतः।

(ड) चान्द्रायणव्रतनावरं स्त्रिशानि. युष्माकं धर्मज्ञानां प्रेम-विश्वासभूमयः (ढ) पक्षिणः सर्वदा ममाग्रे त्वदीयगुणग्रामं प्रस्तुवन्ति, अतो भवद्भ्यो विद्यावयोवृद्धेभ्यो (ण) धर्मं श्रोतुमिहागतः, भवन्तश्चैतादृशा धर्मज्ञाः, यन्मामतिथिं हन्तुमुद्यताः ? गृहस्थधर्मश्चैषः,—

अरावप्युचितं कार्य्यमातिथ्यं गृहमागते।
छेत्तुः पार्श्वगतां छायां नोपसंहरति द्रुमः ॥ ९९ ॥

यद्यन्नं नास्ति, तदा सुप्रीतेनापि (त) वचसा तावदतिथिः पूज्यः। तथा चोक्तम्,

तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥ १०० ॥

(ड) चान्द्रायणव्रतं—चन्द्रस्यायं चान्द्रः चन्द्रलोकः प्राप्यते अनेनेति चान्द्रायणं तच्च व्रतञ्चेति। चन्द्रलोकप्रापकम् एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च परिवर्द्धयेदित्युक्तलक्षणं व्रतम् अनुष्ठानम्।

(ढ) प्रेमविश्वासभूमयः—प्रणयविश्वासभाजनानि।

(ण) विद्यावयोवृद्धेभ्यः—विद्या च वयश्च विद्यावयसी ताभ्यां वृद्धाः तेभ्यः विद्यया वयसा च प्रवीणेभ्यः।

(९९) अराविति। गृहम् आगते गृहे उपस्थिते अरौ शत्रावपि उचितं यथोपयुक्तम् आतिथ्यम् अतिथिसत्कारः कार्य्यं करणीयं गृहस्थेनेति शेषः। द्रुमः वृक्षः छेत्तुः छेदकात् पार्श्वगतां पार्श्ववर्त्तिनीं छायाम् अनातपं न उपसंहरति नाकर्षति। वृक्षाच्छेदकायेव गृहस्थाः अतिथिभावेनागते शत्रावपि आश्रयदाने न कातरा भवन्तीत्यर्थः।

(त) सुप्रीतेनापि—प्रीतियुक्तेन, मधुरेणेतियावत्।

(१००) तृणानीति। तृणानि कुशादिनिर्मितमासनं भूमिः विश्रामलाभार्थं स्थानम् उदकं पादप्रक्षालनार्थं जलं चतुर्थी चतुर्णां पूरणी

अपरञ्च, निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः ।
न हि संहरते ज्योत्स्नां, चन्द्रश्चाण्डालवेश्मनि ॥ १०१ ॥
अन्यच्च, बालो वा यदि वा वृद्धो युवा वा गृहमागतः ।
तस्य पूजा विधातव्या सर्वस्याभ्यागतो गुरुः ॥ १०२ ॥
अन्यच्च, अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते ।
स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥ १०३ ॥
अन्यच्च, उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः ।
पूजनीयो यथायोग्यं सर्वदेवमयोऽतिथिः" ॥ १०४ ॥

---

सूनृता सत्यप्रिया वाक् वचनम् एतानि तृणादीनि अपि सतां साधूनां गेहे गृहे कदाचन कदाचिदपि न उच्छिद्यन्ते न प्रत्यादिश्यन्ते ।

(१०१) निर्गुणेष्विति । साधवः सज्जनाः निर्गुणेषु गुणहीनेषु अपि सत्त्वेषु प्राणिषु दयाम् अनुकम्पां कुर्वन्ति चन्द्रः चाण्डालवेश्मनि अस्पृश्यजातीयगृहे पतितामिति शेषः ज्योत्स्नां कौमुदीं न हि संह-रते न हि आकर्षति ।

(१०२) बाल इति । बालः बालकः यदि वा अथवा वृद्धः अथवा युवा तरुणः यः कोऽपीत्यर्थः । गृहम् आगतः प्राप्तः तस्य पूजा सत्-कारः विधातव्या कर्तव्या सर्वस्य जनस्य अभ्यागतः अतिथिः गुरुः गुरुवत् पूजनीय इत्यर्थः ।

(१०३) अतिथिरिति । यस्य जनस्य गृहात् अतिथिः भग्नाशः आतिथ्यलाभे हताशः सन् प्रतिनिवर्तते प्रत्यावर्तते सः अतिथिः तस्मै दुष्कृतं पापं स्वकृतं दुरितं दत्त्वा पुण्यम् अतिथिसेवाविमुखस्येति शेषः आदाय गृहीत्वा तत्कृतपुण्यं प्रणाश्य गच्छति अन्यत्र याति ।

(१०४) उत्तमस्येति । उत्तमस्य स्वापेक्षया उत्कृष्टस्य वर्णस्य गृहं आगतः समायातः नीचोऽपि यथायोग्यं यथोचितं पूजनीयः आति-

गृध्रोऽवदत् "मार्जारो हि (थ) मांसरुचिः, पक्षिशावकाश्चात्र निवसन्ति, तेनैवं ब्रवीमि"। तच्छ्रुत्वा मार्जारो (द) भूमिं स्पृष्ट्वा कर्णौ स्पृशति, "कृष्ण कृष्ण" ब्रूते च, मया धर्मशास्त्रं (ध) श्रुत्वा वीतरागेण (न) इदं दुष्करं व्रतं चान्द्रायणमध्यवसितम् (प)। यतः, परस्परं (फ) विवदमानानामपि धर्मशास्त्राणाम् अहिंसा परमो धर्म इत्यैकमत्यम् (ब)।

यतः, सर्वहिंसानिवृत्ता ये नराः सर्वसहाश्च ये।
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ॥ १०५ ॥

---

थ्येन सम्मानयनीयः यतः अतिथिरभ्यागतः सर्वदेवमयः सर्वदेवस्वरूपः (ताद्रूप्ये मयट्) सर्वेषां देवानां पूजनेन यत् फलम् अतिथिसेवयापि तदित्यर्थः।

(थ) मांसरुचिः—मांसे रुचिर्यस्य सः मांसप्रियः।

(द) भूमिं स्पृष्ट्वा कर्णौ स्पृशति—भूमिस्पर्शपूर्वकं शपथं कृत्वा पापकथाश्रवणनिवृत्तये कर्णौ आच्छादयतीत्यर्थः।

(ध) धर्मशास्त्रं—मन्वादिप्रणीतं धर्मोपदेशकं शास्त्रम्।

(न) वीतरागेण—वीतः विगतः रागः विषयवासना यस्य सः विषयभोगे वीतस्पृहेण।

(प) अध्यवसितं—अनुष्ठितं (अधि + अव + सो + क्तः कर्मणि)

(फ) विवदमानानां—विरोधिनां विमतिव्यक्तसङ्घोक्तेरित्यात्मनेपदम्।

(ब) ऐकमत्यं—एकमतावलम्बित्वम्।

(१०५) सर्वेति। ये नराः मनुष्याः सर्वाः हिंसाः प्राणिवधादयः ताभ्यः निवृत्ताः विरताः ये च नराः सर्वं सहन्ते इति सर्वं सहाः सर्वसहिष्णवः सर्वस्य जनस्य आश्रयभूताः अवलम्बनस्थानानि याना-

अन्यच्च, एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ॥ १०६ ॥
किञ्च, योऽत्ति यस्य यदा मांसमुभयोः पश्यतान्तरम्।
एकस्य क्षणिका प्रीतिरन्यः प्राणैर्विमुच्यते ॥ १०७ ॥
अपिच, मर्त्तव्यमिति यद्दुःखं पुरुषस्योपजायते।
शक्यस्तेनानुमानेन परोऽपि परिरक्षितुम् ॥ १०८ ॥
शृणु पुनः,
स्वच्छन्दवनजातेन शाकेनापि प्रपूर्य्यते।
अस्य दग्धोदरस्यार्थे कः कुर्य्यात् पातकं महत्?" ॥१०९॥

---

श्रित्य अनेके उपजीवन्तीत्यर्थः। ते नरा मनुष्याः स्वर्गगामिनः स्वर्गवासोचिताः।

(१०६) एक इति। धर्मः एक एव अद्वितीय एव सुहृत् बन्धुः अनन्यसाधारणं मित्रं कुत इत्याह यः धर्मः निधनेऽपि मरणेऽपि अनुयाति अनुसरति तु किन्तु अन्यत् सर्वं भोग्यं वस्तु शरीरेण कायेन समं सह नाशं गच्छति प्राप्नोति।

(१०७) य इति। यो जनः यदा यस्मिन् काले यस्य प्राणिनः मांसम् अत्ति भक्षयति उभयोः अन्तरं प्रभेदं पश्यत जानीत। एकस्य प्राणिनः क्षणिका क्षणस्थायिनी प्रीतिः सन्तोषः अन्यः भक्ष्यः प्राणैः जीवितेन विमुच्यते त्यज्यते।

(१०८) मर्तव्यमिति। पुरुषस्य पुंसः मर्तव्यम् अवश्यमेव मृत्युर्भविता इति इत्थं चिन्तया यत् यादृशं दुःखं क्लेशः उपजायते भवति। तेन अनुमानेन आत्ममरणवदन्येषामपि मरणं दुःसहक्लेशकरम् इति बुद्ध्वा परोऽपि अन्योऽपि प्राणी परिरक्षितुं जीवयितुं न हन्तुमिति यावत् शक्यः सर्वथा परिरक्षणीयः।

(१०९) स्वच्छन्देति। स्वस्य छन्दो यस्मिन् तत् यथा तथा जातेन

एवं विश्वस्य स मार्जारः तरुकोटरे स्थितः सन्ो दिनेषु गच्छत्सु पक्षिशावकानाक्रम्य कोटरमानीय प्रत्यहं खादति, अथ येषामपत्यानि खादितानि, तैः शोकार्त्तैर्विलपद्भिः (भ) इतस्ततो जिज्ञासा समारब्धा, (म) तत् परिज्ञाय मार्जारः कोटरान्निःसृत्य बहिः पलायितः। पश्चात् पक्षिभिरितस्ततो निरूपयद्भिस्तत्र तरुकोटरे शावकास्थीनि प्राप्तानि। अनन्तरञ्च "तेनैव जरद्गवेनास्माकं शावकाः खादिता इति, सर्वैः पक्षिभिर्निश्चित्य मिलित्वा गृध्रो व्यापादितः। अतोऽहं ब्रवीमि, "अज्ञातकुलशीलस्येत्यादि"। इत्याकर्ण्य स जम्बुकः सकोपमाह, "मृगस्य प्रथमदर्शनदिने भवानप्यज्ञातकुलशील एवासीत्, तत् कथं भवता सह एतस्य (य) स्नेहानुवृत्तिरुत्तरोत्तरं वर्द्धते (र)।

---

कृलकर्षणादिकमन्तरेण स्वत उत्पन्नेन शाकेनापि यत् उदरमिति शेषः प्रपूर्य्यते परिपूर्णं भवति वन्येन फलमूलादिनापि यस्य पोषणं भवेत् इत्यर्थः। अस्य दग्धोदरस्य कृतोदरस्य अर्थे निमित्ते को जनः महत् प्राणिवधरूपम् अतीव गर्हितं पातयति यत् तत् पातकं पापं कुर्य्यात् आचरेत् न कोऽपीत्यर्थः।

(भ) विलपद्भिः—रुदद्भिः।

(म) इतस्ततो जिज्ञासा समारब्धा— समन्तात् शावकान्वेषणं कृतमित्यर्थः।

(य) स्नेहानुवृत्तिः—स्नेहाचरणम्। प्रणयबन्ध इति यावत्।

(र) उत्तरोत्तरं वर्द्धते—क्रमशः वृद्धिं प्राप्नोति।

यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि ।
निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ॥ ११० ॥

अन्यच्च, अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥ १११ ॥

यथायं मृगो मम बन्धुस्तथा भवानपि"। मृगोऽब्रवीत् किमनेनोत्तरेण, (ल) सर्वैरेकत्र विश्रम्भालापैः (व) सुखमनुभवद्भिः स्थीयताम् ।

यतः, न कश्चित् कस्यचिन्मित्रं, न कश्चित् कस्यचिद्रिपुः ।
व्यवहारेण मित्राणि जायन्ते रिपवस्तथा ॥ ११२ ॥

---

(११०) यत्रेति । यत्र यस्मिन् देशे विद्वज्जनः पण्डितो जनः न अस्ति विद्यते तत्र तस्मिन् देशे अल्पा धीर्बुद्धिर्यस्य स अल्पधीः मन्दबुद्धिः विद्याहीनोऽपीत्यर्थः श्लाघ्यः प्रशंसनीयः सर्वेषामादरणीय इति यावत् भवतीति शेषः । निरस्तः पादपः यस्मिन् तस्मिन् वृक्षहीने देशे स्थाने एरण्डः तन्नामा कश्चित् असारवृक्षोऽपि द्रुमायते द्रुम इवाचरति द्रुमत्वेन परिगण्यते इत्यर्थः ।

(१११) अयमिति । अयं निजः आत्मीयः अयं परः अनात्मीयः इति लघुचेतसां नीचाशयानां गणना विचारणा । तु किन्तु उदारम् औदार्य्यगुणान्वितं चरितं येषां तेषां सर्वत्र समदर्शिनामित्यर्थः, वसुधा पृथिव्येव कुटुम्बकम् एककुलम् उदारचरितैस्तु सर्व एव वसुधावासिन आत्मीया मन्यन्ते इत्यर्थः ।

(ल) किमनेनोत्तरेण—अनेन ईदृशेन उत्तरेण उत्तरोत्तरवाक्प्रपञ्चेन ।

(व) विश्रम्भालापैः—विश्रम्भेण आलापाः तैः । प्रणयगर्भैर्विश्वासपूर्णैश्च आलापैः मिथोभाषणैः ।

(११२) नेति । कश्चित् जनः कस्यचित् जनस्य न मित्रं मित्रमिति

काकेनोक्तमेवमस्तु । अथ प्रातः सर्वे यथाभिमतदेशं (अ) गताः, एकदा निभृतं (ब) शृगालो ब्रूते । "सखे मृग ! एतस्मिन्नेव वनैकदेशे शस्यपूर्णं क्षेत्रमस्ति, तदहं त्वां तत्र नीत्वा दर्शयामि" तथा कृते सति मृगः प्रत्यहं तत्र गत्वा शस्यं खादति, ततो दिनकतिपयेन (स) क्षेत्रपतिना तं दृष्ट्वा पाशो योजितः । अनन्तरं पुनरागतो मृगस्तत्र चरन् पाशैर्बद्धोऽचिन्तयत्, "को मामितः कालपाशादिव व्याधपाशात् त्रातुं मित्रादन्यः समर्थः ? अत्रान्तरे जम्बूकस्तत्रागत्य उपस्थितोऽचिन्तयत्, "फलितस्तावदस्माकं (ह) कपटप्रबन्धो, मनोरथसिद्धिरपि बाहुल्यान्मे भविष्यति । एतस्योत्कृत्यमानस्य (क) मांसासृग्लिप्तानि (ख) अस्थीनि मया

---

स्निह्यति इति मित्रं प्रणयास्पदं बन्धुरिति यावत् । कश्चित् जनः कस्यचित् जनस्य न रिपुः शत्रुः । न कश्चित् कस्यचित् मित्रं शत्रुर्वा भूत्वा जायेतेत्यर्थः । व्यवहारेण हिताहिताचरणेन मित्राणि बन्धवस्तथा रिपवः शत्रवश्च जायन्ते । यो हि शत्रुवदाचरति स एव शत्रुः यश्च मित्रवदाचरति स एव मित्रमित्यर्थः ।

(अ) यथाभिमतदेशं—यथाभीष्टप्रदेशम् ।

(ब) निभृतं—रहसि ।

(स) दिनकतिपयेन—दिनेषु गच्छत्सु ।

(ह) कपटप्रबन्धः—छलप्रयोगः ।

(क) उत्कृत्यमानस्य—खण्डशः क्रियमाणस्य छिद्यमानस्य ।

(ख) मांसासृग्लिप्तानि—मांसञ्च असृक् च मांसासृजी ताभ्यां लिप्तानि रक्तमांसपरिहितानि ।

श्रवश्यं प्राप्तव्यानि"। स च मृगस्तं दृष्ट्वा उल्लसितो (ग) ब्रूते, "सखे! छिन्धि तावन्मम बन्धनं, सत्वरं त्रायस्व माम्।
यतः, आपत्सु मित्रं जानीयात्, युद्धे शूरमृणे शुचिम्।

भार्य्यां क्षीणेषु वित्तेषु, व्यसनेषु च बान्धवान् ॥११३॥

अपरञ्च, उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे।

राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः" ॥ ११४ ॥

जम्बुकः पाशं मुहुर्मुहुर्विलोक्याचिन्तयत्, "दृढबन्धन-बद्धोऽस्ति तावदयं मृगः" ब्रूते च, "सखे! (घ) स्नायुनिर्मित-पाशास्तदद्य भट्टारकवारे कथमेतान् दन्तैः स्पृशामि? मित्र! यदि चित्ते नान्यथा मन्यसे, तदा प्रभाते यत्त्वया वक्तव्यं, तत् कर्त्तव्यमिति"। अनन्तरं स काकः प्रदोष-

---

(ग) उल्लासितः—आनन्दितः।

(११३) आपत्स्विति। आपत्सु आपत्काले उपस्थिते सतीत्यर्थः मित्रं बन्धुं युद्धे समरे उपस्थिते शूरं विक्रमशालिनम् ऋणे ऋण-ग्रहणे सति शुचिं निर्मलचरितं वित्तेषु धनेषु क्षीणेषु हीनेषु सत्सु भार्य्यां व्यसनेषु पीड़ाद्यापत्सु च बान्धवान् जानीयात् अवगच्छेत् परीक्षेत लोके इति शेषः।

(११४) उत्सवे इति। उत्सवे विवाहादौ आनन्दजनकव्यापारे व्यसने आपदि उपस्थितायां चैव दुःदुष्प्रापा भिक्षा यस्मिन् तस्मिन् अन्नाभावे राष्ट्रस्य राज्यस्य विप्लवे उपद्रवे नृपान्तराक्रमणे राजद्वारे विचारालये श्मशाने दाहाद्यन्त्येष्टिकर्मणि यस्तिष्ठति अनुकूलयति स बान्धवः प्रकृतो बन्धुः।

(घ) स्नायुनिर्मितपाशाः—स्नायुभिः देहान्तर्वर्त्तिनाड़ीविशेषैः निर्मिताः कृताः पाशाः।

काले मृगमनागतमवलोक्य इतस्ततोऽन्विष्यन् तथाविधं दृष्ट्वा च, "सखे ! किमेतत् ? मृगेणोक्तं, (ङ) अवधीरितसुहृद्वाक्यस्य (च) फलमेतत्।

तथा चोक्तम्,

सुहृदां हितकामानां यः शृणोति न भाषितम्।
विपत् सन्निहिता तस्य स नरः शत्रुनन्दनः॥ ११५॥

काको ब्रूते, स (छ) वञ्चकः क्वास्ते ? "मृगेणोक्तं, मन्मांसार्थी तिष्ठत्यत्रैव"। काको ब्रूते, उक्तमेव मया पूर्वम्।

अपराधो न मेऽस्तीति नैतद्विश्वासकारणम्।
विद्यते हि नृशंसेभ्यो भयं गुणवतामपि॥ ११६॥

---

(ङ) अवधीरितसुहृद्वाक्यस्य—अवधीरितम् अवज्ञातम् अश्रुतमिति यावत् सुहृदः मित्रस्य वाक्यं वचनं येन तस्य अवज्ञातबन्धुवचनस्य।

(च) फलं—परिणामः।

(११५) सुहृदामिति। यः जनः हितं कामयन्ते ये तेषां हितैषिणां सुहृदां बन्धूनां भाषितं वचनं न शृणोति आकर्णयति तस्य जनस्य विपत् आपत् सन्निहिता निकटवर्त्तिनी अचिरेणैवापतिष्यतीत्यर्थः। स नरः शत्रुनन्दनः शत्रूणामानन्दकरः प्रीतिवर्द्धनः तम् आसन्नविपदं मत्वा शत्रवो हृष्यन्तीत्यर्थः।

(छ) वञ्चकः—वञ्चयतीति वञ्चकः प्रतारकः धूर्त्त इति यावत्।

(११६) अपराध इति। मे मम अपराधः दोषः नास्ति न विद्यते नाहमस्य कथमप्यपराद्ध इत्यर्थः। इति एतत् एतावत् ज्ञानं न विश्वासकारणं निसर्गक्रूरे प्रत्ययहेतुः। हि तथाहि नृन् शंसन्ति हिंसन्ति ये तेभ्यः गुणदोषौ अविचार्य परद्वेषिभ्यः गुणवतां निरपराधानामपि किमुतान्येषामिति भावः। भयं विद्यते अस्ति।

दीपनिर्वाणगन्धञ्च सुहृद्वाक्यमरुन्धतीम् ।
न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति गतायुषः ॥ ११७ ॥
परोक्षे कार्य्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ ११८ ॥

ततः काको दीर्घं निश्वस्य, "अरे वञ्चक ! किं त्वया पापकर्म्मणा ( ज ) कृतम् ? यतः,

संलापितानां मधुरैर्वचोभि-
र्मिथ्योपचारैश्च वशीकृतानाम् ।
आशावतां श्रद्दधताञ्च लोके
किमर्थिनां वञ्चयितव्यमस्ति ? ॥ ११९ ॥

---

(११७) दीपेति । गतम् आयुर्जीवनकालो येषां ते तथोक्ताः आसन्नमृत्यवः जनाः दीपस्य प्रदीपस्य निर्वाणं विरतिः तस्य गन्धं घ्राणं न जिघ्रन्ति सुहृदः वाक्यं बन्धुवचनं न शृण्वन्ति आकर्णयन्ति तथा अरुन्धतीं सप्तर्षिमण्डलस्थं तदाख्यनक्षत्रविशेषञ्च न पश्यन्ति अवलोकयन्ति ।

(११८) परोक्ष इति । अक्ष्णोः परं परोक्षं तस्मिन् असमक्षे कार्य्यस्य हन्तारं व्याघातकं प्रत्यक्षे समक्षे प्रियं वदतीति तं मधुरमालपन्तम् अत एव पयो दुग्धं मुखे यस्य तं पयोमुखं विषस्य कुम्भं विषपूर्णकलसमिवेत्यर्थः तादृशं कपटाचारिणमिति भावः । मिद्यति स्निह्यतीति मित्रं बन्धुं यत्नतः यत्नेन वर्जयेत् त्यजेत् तादृशेन न कदापि मैत्री कर्त्तव्येत्यर्थः ।

(ज) पापकर्मणा—पापं पापजनकं कर्म यस्य सः तेन, दुराचारेण ।

(११९) संलापितानामिति । संलापितानां प्रियं मधुरञ्च सम्भाषितानां मधुरैः प्रीतिगर्भैः वचोभिः वचनैः मिथ्योपचारैः कपटाचरणैश्च

अन्यच्च, उपकारिणि विस्रब्धे शुद्धमतौ यः समाचरति पापम्।
तं जनमसत्यसन्धं भगवति! वसुधे! कथं वहसि? ॥१२०॥
दुर्जनेन समं सख्यं प्रीतिञ्चापि न कारयेत्।
उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् ॥ १२१ ॥
अथवा स्थितिरियं दुर्जनानाम् (भ)।
प्राक् पादयोः पतति खादति पृष्ठमांसं
कर्णे कलं किमपि रौति शनैर्विचित्रम्।

---

वशीकृतानां वशं गतानां श्रद्दधतां विश्वासमापन्नानाम् आशावताम् उपकारादिप्रत्याशायुक्तानाम् अर्थिनां याचकानाञ्च किं वञ्चयितव्यमस्ति। नैते कथमपि वञ्चनीया इत्यर्थः। एषां वञ्चने का विदग्धता इति भावः।

(१२०) उपकारिणीति। उपकारिणि उपकुर्वति तथा विस्रब्धे विश्वस्ते शुद्धा सरला मतिर्यस्य तस्मिन् अकपटान्तःकरणे यो जनः पापम् अनिष्टं समाचरति घटयति हे भगवति वसुधे! पृथ्वि! असत्यसन्धं वञ्चनापरं तं जनं कथं केन प्रकारेण वहसि धारयसि। अतिदुर्वहो हि ईदृशस्य भार इति भावः।

(१२१) दुर्जनेनेति। दुर्जनेन दुष्टप्रकृतिकेन जनेन समं सह सख्यं मैत्रीं प्रीतिं मिलनं चापि न कारयेत् दुर्जनसङ्गतिं नैव कुर्यादित्यर्थः। कथमित्याह अङ्गारः उष्णः उष्णावस्थः सन् दहति उत्तापयति शीतः शीतलः सन् करं हस्तं संस्पृष्टमिति शेषः कृष्णायते कृष्णं करोति मलिनीकरोतीति यावत्।

(भ) स्थितिरियं दुर्जनानां—दुर्जनानां दुष्टप्रकृतिकानाम् इयम् ईदृशी स्थितिर्मर्यादा आचरणमिति यावत्।

(१२२) प्रागिति। मशकः दंशकः खलस्य क्रूरस्य सर्वं चरितं चरित्रं करोति अनुकरोति। कथमित्याह प्राक् प्रथमं पादयोः पतति खलपक्षे पदानतो भवति। ततः पृष्ठमांसं खादति मशकपक्षे

छिद्रं निरूप्य सहसा प्रविशत्यशङ्कः
सर्वं खलस्य चरितं मशकः करोति ॥ १२२ ॥
दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् ।
मधु तिष्ठति जिह्वाग्रे हृदि हालाहलं विषम्" ॥१२३॥

अथ प्रभाते स क्षेत्रपतिर्लगुडहस्तः तत् प्रदेशं गच्छन् काकेनावलोकितः । तमालोक्य काकेनोक्तम्, "सखे मृग ! त्वमात्मानं (ञ) मृतवत् सन्दर्श्य वातेनोदरं पूरयित्वा पादान् स्तब्धीकृत्य (ट) तिष्ठ, अहं तव चक्षुषी चञ्च्वा विलिखामि, यदाहं शब्दं करोमि, तदा त्वमुत्थाय सत्वरं पलायिष्यसे" मृगस्तथैव काकवचनेन स्थितः ।

ततः क्षेत्रपतिना (ठ) हर्षोत्फुल्ललोचनेन तथाविधो

---

पृष्ठे दशति अन्यत्र मडदनिष्टं घटयति कर्णे कर्णान्तिके विचित्रं बहुविधं कलं मधुरं किमपि अनिर्वचनीयं शनैर्मन्दं रौति शब्दायते अन्यत्र मधुरमालपति । छिद्रम् एकत्र रोमकूपम् अन्यत्र आपदादिरन्ध्रं निरूप्य निर्णीय प्राप्येत्यर्थः अशङ्कः निर्भीकः सन् प्रविशति मशपचे दशति अन्यत्र प्रतिकूलयति ।

(१२३) दुर्जन इति । दुर्जनः प्रियवादी च सन् एतत् दुर्जनस्य प्रियवादित्वं न विश्वासकारणं प्रत्ययहेतुः । कुत इत्याह अस्य जिह्वाग्रे मुखे मधु तिष्ठति हृदि मनसि हालाहलम् अतितीक्ष्णं विषं तिष्ठतीति शेषः ।

(ञ) मृतवत्—मृतेन तुल्यं (तेन तुल्यं क्रिया चेद्वतिरिति वतिः)

(ट) स्तब्धीकृत्य—स्थिरीकृत्य ।

(ठ) हर्षोत्फुल्ललोचनेन—हर्षेण प्रीत्या उत्फुल्ले विकसिते लोचने यस्य तेन ।

मृग आलोकितः, "आः ! स्वयं मृतोऽसि ?" इत्युक्त्वा मृगं बन्धनान्मोचयित्वा पाशान् संवरीतुं कृतयत्नो बभूव। ततः कियद्दूरे अन्तरिते (छ) क्षेत्रपतौ स मृगः काकशब्दं श्रुत्वा संसम्भ्रममुत्थाय पलायितः, तमुद्दिश्य तेन क्षेत्रपतिना प्रकोपात् क्षिप्तेन लगुडेन शृगालो व्यापादितः। तथा चोक्तम्,

त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः।
अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते" ॥ १२४ ॥

अतोऽहं ब्रवीमि, "भक्ष्यभक्षकयोः प्रीतिरित्यादि"।

काकः पुनराह,

"भक्षितेनापि भवता नाहारो मम पुष्कलः।
त्वयि जीवति जीवामि चित्रग्रीव इवानघः ॥ १२५ ॥

अन्यच्च, तिरश्चामपि विश्वासो दृष्टः पुण्यैककर्मणाम्।
सतां हि साधुशीलत्वात् स्वभावो न निवर्त्तते ॥ १२६ ॥

---

(छ) अन्तरिते—अन्तर्हिते।

(१२४) त्रिभिरिति। त्रिभिः वर्षैः वत्सरैः वर्षत्रयेण त्रिभिर्मासैः मासत्रयेण त्रिभिः पक्षैः पञ्चचत्वारिंशदह्निः त्रिभिर्दिनैः दिनत्रयेण वा अत्युत्कटैः अधिकैः पापपुण्यैः अधर्मधर्माचरणैः करणैः इहैव अस्मिन्नेव भूतले फलं परिणामम् अश्नुते उपभुनक्ति।

(१२५) भक्षितेनेति। भक्षितेनापि खादितेनापि भवता करणेन मम पुष्कलः प्रचुरः आहारः न भवतीति शेषः। त्वयि जीवति प्राणान् धारयति सति अहम् अनघः निष्पापः चित्रग्रीव इव चित्रग्रीववत् बन्धुसहवाससुखमनुभवन्नित्यर्थः, जीवामि प्राणिमि।

(१२६) तिरश्चामिति। पुण्यं धर्मानुष्ठानम् एकं कर्म येषां तेषां

साधोः प्रकोपितस्यापि मनो नायाति विक्रियाम्।
न हि तापयितुं शक्यं सागराम्भस्तृणोल्कया॥ १२७॥

हिरण्यको ब्रूते (ढ) "चपलस्त्वं, चपलेन सह स्नेहः सर्वथा न कर्त्तव्यः। तथा चोक्तम्,

किञ्च, मार्ज्जारो, महिषो, मेषः, काकः, कापुरुषस्तथा
विश्वासात् प्रभवन्त्येते विश्वासस्तत्र नोचितः॥ १२८॥

किञ्चान्यत्, (ण) शत्रुपक्षो भवानस्माकम्। उक्तञ्चैतत्,

शत्रुणा न हि सन्दध्यात्, सुश्लिष्टेनापि सन्धिना।
सुतप्तमपि पानीयं शमयत्येव पावकम्॥ १२९॥

---

दुष्यान्तुष्टानपराणां तिरश्चां तिर्य्यग्जातीनां पश्वादीनामपि विश्वासः प्रत्ययः दृष्टः कथितः। हि तथाहि साधुशीलत्वात् सत्स्वभावत्वात् सतां प्रकृत्या साधूनां स्वभावः न निवर्त्तते न विक्रियां याति।

(१२७) साधोरिति। प्रकोपितस्यापि क्रोधं गमितस्यापि साधोः उदारचरितस्य मनः हृदयं विक्रियां विकृतिं न आयाति प्राप्नोति न विकृतं भवतीत्यर्थः। हि तथाहि सागराम्भः समुद्रजलं तृणोल्कया साग्निशिखया तापयितुम् उष्णत्वमापादयितुं न शक्यं न सम्भाव्यम्।

(ढ) चपलः—अव्यवस्थितचित्तः।

(१२८) मार्जार इति। मार्जारः विडालः महिषः मेषः काकः तथा कापुरुषः मार्जारादिवत् लघुचित्तो जनः एते षट् विश्वासात् विश्वासलाभेन प्रभवन्ति कृतविश्वासेऽपि प्रभुतां प्रदर्शयन्ति अतस्तत्र तेषु विश्वासः न उचितः युक्तः एतेषु न कथमपि विश्वसितव्यमित्यर्थः।

(ण) शत्रुपक्षः—शत्रुजातीयः स्वभाववैरीति यावत्।

(१२९) शत्रुणेति। सुश्लिष्टेन सुघटितेन दृढबद्धेनेति यावत् सन्धिना मिलनेन करणेन शत्रुणा सह न सन्दध्यात् न मिलेत् सन्धिं

दुर्जनः परिहर्त्तव्यो, विद्ययालङ्कृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ? ॥ १३० ॥
यदशक्यं न तच्छक्यं यच्छक्यं शक्यमेव तत् ।
नोदके शकटं याति न च नौर्गच्छति स्थले ॥ १३१ ॥
अपरञ्च, महताप्यर्थसारेण यो विश्वसिति शत्रुषु ।
भार्य्यासु च विरक्तासु तदन्तं तस्य जीवनम्" ॥१३२॥
लघुपतनको ब्रूते, "श्रुतं मया सर्वं, तथापि ममैतावा-
नेव (त) सङ्कल्पः, यत्त्वया सह सौहृद्यमवश्यं करणीयमिति,

---

क्वापि न निर्वृतो भवेदित्यर्थः । अत्र दृष्टान्तमाह, पानीयं जलं सुतप्तमपि उष्णत्वादिवह्निगुणं लभमानमपि पावकं वह्निं शमयत्येव निर्वापयत्येव ।

(१३०) दुर्जन इति । विद्यया शास्त्रज्ञानेन अलङ्कृतः भूषितोऽपि दुर्जनः परिहर्त्तव्यः त्यक्तव्यः मणिना रत्नेन भूषितः शिरसि अलङ्कृतः सर्पः सर्प इवेत्यर्थः असौ दुर्जनः किं न भयङ्करः भयावहः सर्वथा भयावह एवेत्यर्थः ।

(१३१) यदिति । यत् शक्यं साधयितुं पार्य्यं तत् न शक्यमेव न साध्यमेव यच्च शक्यं साध्यं तत् शक्यमेव साधयितुमर्हमेव । उदके जले शकटं रथो न याति स्थले च नौर्नौका न गच्छति चलति नियतिकृतनियमोऽवश्यमेव फलतीत्यर्थः ।

(१३२) महतेति । महतापि गुरुणापि अर्थसारेण प्रयोजनेन हेतुना यः जनः शत्रुषु विरक्तासु प्रतिकूलचारिणीषु असाध्वीष्विति यावत् भार्य्यासु पत्नीषु विश्वसिति विश्वासं स्थापयति तस्य जनस्य जीवनं प्राणाः स विश्वासः अन्तो यस्य तत् तत्कृतविश्वासादेव तस्य जीवनशेषो भवेदित्यर्थः ।

(त) सङ्कल्पः—निश्चयः ।

नो चेदनाहारेणात्मानं तव द्वारि व्यापादयिष्यामि ।

तथा ह,

मृद्घटवत् सुखभेद्यो दुःसन्धानश्च दुर्जनो भवति ।
सुजनस्तु कनकघटवत् दुर्भेद्यश्चाशु सन्धेयः ॥१२२ ॥

किञ्च, द्रवत्वात् सर्वलोहानां, निमित्तान्मृगपक्षिणाम् ।
भयाल्लोभाच्च मूर्खाणां, सङ्गतं, दर्शनात् सताम् ॥ १२४॥

किञ्च, नारिकेलसमाकारा दृश्यन्तेऽपि हि सज्जनाः ।
अन्ये वदरिकाकारा बहिरेव मनोहराः ॥ १२५ ॥

अन्यच्च, स्नेहच्छेदेऽपि साधूनां गुणा नायान्ति विक्रियाम् ।
भङ्गेनापि मृणालानामनुबध्नन्ति तन्तवः ॥१२६ ॥

---

(१२२) मृद्घटवदिति । दुर्जनः मृदा निर्मितो घटः मृद्घटः तद्वत् सुखेन भेद्यः सुखभेद्यः अनायासेन भेदयितुं शक्यः दुः दुःखसाध्यं सन्धानं सन्धिर्यस्य स दुःसन्धानः कष्टसाध्यसन्धिश्च भवति । तु किन्तु सुजनः कनकघटवत् दुर्भेद्यः दुःखेन भेदयितुं शक्यः आशु सहसा सन्धेयः सन्धातुं शक्यश्च भवतीति शेषः ।

(१२४) द्रवत्वादिति । सर्वलोहानां सर्वधातूनां रजतकाञ्चनादीनां द्रवत्वात् द्रवीकरणात् मृगपक्षिणां पशुपक्षिणां निमित्तात् प्राक्तन-संस्कारविशेषात् मूर्खानां भयात् शङ्कया लोभात् प्रलोभनेन सतां साधूनां दर्शनात् सङ्गतं मिलनं भवतीति शेषः ।

(१२५) नारिकेलेति । सज्जनाः साधवो हि नारिकेलसमाकाराः नारिकेलफलसमानाः अन्तर्मधुरा इति भावः । दृश्यन्ते लक्ष्यन्ते अन्ये असज्जनाः वदरिकायाः आकारः येषां ते तथोक्ताः अन्तःखला वहिरेव बाह्येनैव मनोहराः शोभना दृश्यन्ते इति शेषः ।

(१२६) स्नेहेति । स्नेहस्य प्रणयस्य छेदेऽपि भङ्गेऽपि साधूनां

अन्यच, शुचित्वं, त्यागिता, शौर्य्यं सामान्यं सुखदुःखयोः ।
दाक्षिण्यं, चानुरक्तिश्च, सत्यता च सुहृद्गुणाः ॥ १२७॥

एतैर्गुणैरुपेतो (थ) भवदन्यो मया कः सुहृत् प्राप्तव्यः ?—इत्यादि, तद्वचनमाकर्ण्य हिरण्यको वहिर्निःसृत्याह, (द) "आप्यायितोऽहं भवतामनेन वचनामृतेन (ध) ।

तथा चोक्तम्,

घर्मार्त्तं न तथा सुशीतलजलैः स्नानं, न मुक्तावली
न श्रीखण्डविलेपनं सुखयति प्रत्यङ्गमप्यर्पितम् ।
प्रीत्यै सज्जनभाषितं प्रभवति प्रायो यथा चेतसः
सद्युक्त्या च परिष्कृतं सुकृतिनामाकृष्टिमन्त्रोपमम् ॥ १२८॥

---

सज्जनानां गुणाः दाक्षिण्यादयः न विक्रियां विकृतिम् आयान्ति प्राप्नुवन्ति । मृणालानां पद्मनालानां भङ्गेन छेदेन तन्तवः सूत्राणि अनुबध्नन्ति परस्परसंश्लिष्टा विद्यन्त इत्यर्थः ।

(१२७) शुचित्वमिति । शुचित्वम् अकपटत्वं त्यागिता सत्पात्रे दानशीलता शौर्य्यं साहसिकता सुखदुःखयोः सम्पदि आपदि च सामान्यं समभावः दाक्षिण्यम् अनुकूलता अनुरक्तिश्च आसक्तः सत्यता सत्यवादित्वम् एते सुहृदः अकृत्रिममित्रस्य गुणाः ।

(थ) उपेतः—अन्वितः ।

(द) आप्यायितः—प्रीतः ।

(ध) वचनामृतेन—मधुरेण श्रोत्रसुखेन वा वचनेन ।

(१२८) घर्मार्त्तमिति । सद्युक्त्या परिष्कृतं निर्मलं सुकृतिनां पुण्यशीलानाम् आकृष्टिराकर्षणं तदर्थो मन्त्रः स उपमा यस्य तत् आकर्षणमन्त्रसदृशं सज्जनभाषितं महाजनोक्तिः यथा प्रायः भूम्ना चेतसः चित्तस्य प्रीत्यै सन्तोषाय प्रभवति सन्तोषं जनयतीत्यर्थः तथा सुशीतल-

अन्यच्च, रहस्यभेदो याच्ञा च नैष्ठुर्य्यं चलचित्तता।
क्रोधो निःसत्यता द्यूतमेतन्मित्रस्य दूषणम्॥ १३९॥

(न) अनेन वचनक्रमेण तदेकदूषणमपि (प) त्वयि न लक्ष्यते।

यतः, पटुत्वं सत्यवादित्वं कथायोगेन बुध्यते।
अस्तब्धत्वमचापल्यं प्रत्यक्षेणावगम्यते॥ १४०॥

अपरञ्च, अन्यथैव हि सौहार्द्दं भवेत् स्वच्छान्तरात्मनः।
प्रवर्त्ततेऽन्यथा वाणी शाठ्योपहतचेतसः॥ १४१॥

---

जनैः शीतलवारिभिः स्नानम् अभिषेको न मुक्तावली मुक्तादाम न अङ्गे अङ्गे प्रत्यङ्गं (वीप्सार्थेऽव्ययीभावः) सर्वाङ्गेऽपि अर्पितं विक्षिप्तं श्रीखण्डविलेपनं चन्दनानुलेपनं कर्म्म घर्मार्त्तं ग्रीष्मोपतापितं जनं न सुखयति न शीतलयति।

(१३९) रहस्यभेद इति। रहस्यस्य गुप्तमन्त्रणस्य भेदः अन्यसन्निधौ प्रकाशनं याच्ञा धनादीनां प्रार्थना नैष्ठुर्य्यं निर्दयता चलचित्तता अव्यवस्थितचित्तता क्रोधः कोपः निःसत्यता मिथ्यावादित्वं द्यूतम् अक्षक्रीड़ा एतत् पूर्वोक्तं सर्वं मित्रस्य दूषणं दोषः एतद्दोषदूषिते मित्रता न कर्त्तव्येति भावः।

(न) अनेन वचनक्रमेण—अस्मिन् श्लोके उक्तेन।

(प) एकदूषणमपि—रहस्यभेदादीनां व्यस्तमपि।

(१४०) पटुत्वमिति। पटुत्वं दक्षता सत्यवादित्वं सत्यपरायणता कथायोगेन वाक्यादेव बुध्यते ज्ञायते। अस्तब्धत्वम् अहङ्काररहितत्वम् अचापल्यं स्थिरधीत्वं प्रत्यक्षेण साक्षादेव अवगम्यते ज्ञायते बुध्यते।

(१४१) अन्यथैवेति। हि निश्चितं स्वच्छः निर्मलः कापट्यशून्य इति यावत्। अन्तरात्मा मनो यस्य तस्य सरलान्तःकरणस्य सौहार्द्दं मित्रता अन्यथैव अन्यप्रकारमेव अनिर्वचनीयस्वरूपमेव भवेत्। शाठ्येन शठतया उपहतं दूषितं चेतो यस्य तस्य खलस्येत्यर्थः वाणी वाक्यम्

मनस्यन्यद् वचस्यन्यत् कार्य्यमन्यद् दुरात्मनाम् ।
मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ॥ १४२ ॥

तद्भवतु भवतो(फ)ऽभिमतमेव" इत्युक्त्वा हिरण्यको मैत्रं विधाय भोजनविशेषैर्वायसं सन्तोष्य विवरं प्रविष्टः। वायसोऽपि स्वस्थानं गतः। ततः प्रभृति तयोरन्योन्याहारप्रदानेन (ब) कुशलप्रश्नैर्विस्रम्भालापैश्च (भ) कालोऽतिवर्तते ।

एकदा लघुपतनको हिरण्यकमाह, सखे! वायसस्य (म) कष्टलभ्याहारमिदं, तदेतत् स्थानं परित्यज्य स्थानान्तरं गन्तुमिच्छामि। हिरण्यको ब्रूते,

स्थानभ्रष्टा न शोभन्ते दन्ता केशाः नखाः नराः ।
इति विज्ञाय मतिमान् स्वस्थानं न परित्यजेत् ॥१४३॥

---

अन्यथा अन्यप्रकारा प्रवर्त्तते निःसरति। शठस्य तु वचसि एकं मनसि तद्विपरीतमित्यर्थः।

(१४२) मनसीति। दुरात्मनां खलानां मनसि हृदये अन्यत् अन्यप्रकारं वचसि अन्यद् तदन्यथा कार्य्यम् आचरणञ्च अन्यत् वाङ्मनसोर्विपरीतम्। महात्मनान्तु मनसि एकं वचसि वाक्ये एकं कर्मणि कार्य्ये च एकं वाङ्मनःकर्मसु कस्मिन्नपि न वैपरीत्यं लक्ष्यते इत्यर्थः।

(फ) अभिमतम्—आवाभ्यां मैत्रीकरणरूपम् अभिप्रेतम्।

(ब) अन्योन्याहारप्रदाने—अन्योऽन्यस्मै आहारप्रदानं तेन परस्पराहारदानकर्मणा।

(भ) विस्रम्भालापैः—विस्रम्भेण आलापास्तैः विश्वासपूर्वैः प्रणयगर्भैश्च आलापैः।

(म) कष्टलभ्याहारं—कष्टेन कृच्छ्रेण लभ्यः प्राप्तुं शक्यः आहारो यस्मिन् तत्, दुष्प्राप्याहारम्।

(१४३) स्थानभ्रष्टा इति। दन्ताः केशाः नखाः नराः मनुष्याः

काको ब्रूते, मित्र ! (य) कापुरुषस्य वचनमेतत् ।

यतः, स्थानमुत्सृज्य गच्छन्ति सिंहाः सत्पुरुषा गजाः ।
तत्रैव निधनं यान्ति काकाः कापुरुषा मृगाः ॥१४४॥

अन्यच्च, को वीरस्य मनस्विनः स्वविषयः ? को वा विदेशः स्मृतः ?
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम् ।
यद्दंष्ट्रानखलाङ्गुलप्रहरणः सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैः तृष्णां छिनत्त्यात्मनः ॥१४५॥

हिरण्यको ब्रूते, मित्र ! क्व गन्तव्यम् ?
चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान् ।

---

स्थानभ्रष्टाः परित्यक्तवासाः सन्तः न शोभन्ते न प्रकाशन्ते न संमन्यन्ते इत्यर्थः । इति विज्ञाय विविच्य मतिमान् बुद्धिमान् जनः स्वस्थानं स्वकीयं वासस्थानं न परित्यजेत् विहाय अन्यत्र न गच्छेत् ।

(य) कापुरुषस्य—पौरुषहीनस्य ।

(१४४) स्थानमिति । सिंहाः मृगेन्द्राः सत्पुरुषाः महान्तः गजाः करिणः स्थानम् उत्सृज्य त्यक्त्वा गच्छन्ति अन्यत्र यान्ति । काकाः वायसाः कापुरुषाः पौरुषहीना जनाः मृगाः शशवश्च तत्रैव स्वस्व-वासभूमावेव निधनं विनाशं यान्ति म्रियन्ते इत्यर्थः ।

(१४५) क इति । मनस्विनः प्रशस्तचेतसः वीरस्य स्वविषयः स्व-देशः कः ? विदेशश्च कः ? स्मृतः कथितः स हि वीरः यं देशं श्रयते गच्छति तमेव देशं बाहुप्रतापार्जितं भुजबलाधिकृतं कुरुते । दंष्ट्राः दन्ताः नखाः लाङ्गूलं वालधिः तान्येव प्रहरणं प्रहारसाधनं यस्य स महाकविप्रयुक्ततया लाङ्गूलपदे ऊकारस्य ह्रस्वत्वम् । सिंहः यदेव वनं गाहते प्रविशति तस्मिन्नेव वने हताः व्यापादिताः ये द्विपेन्द्राः हस्तिनः तेषां रुधिरैः शोणितैः आत्मनः तृष्णां छिनत्ति निवार-यति, विक्रान्तः स्वदेशे विदेशे च सममेव विक्रमं प्रदर्शयति ।

नासमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥ १४६ ॥

वायसो ब्रूते, अस्ति (र) सुनिरूपितस्थानम्। हिरण्यकोऽवदत् किन्तत्? वायसो ब्रूते, अस्ति दण्डकारण्ये कर्पूरगौराभिधानं सरस्तत्र (ल) चिरकालोपार्जितः प्रियसुहृन्मे मन्थराभिधानः कूर्मः (व) सहजधार्मिकः प्रतिवसति। यतः, परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम्।

धर्मे स्वीयमनुष्ठानं कस्यचित्तु महात्मनः ॥ १४७ ॥

स च भोजनविशेषैर्मां (श) संवर्द्धयिष्यति" हिरण्यकोऽप्याह, तत् किमत्रावस्थाय मया कर्त्तव्यम्?

यतः, यस्मिन् देशे न सम्मानो न वृत्तिर्न च बान्धवाः।

न च विद्यागमः कश्चित्, तं देशं परिवर्जयेत् ॥ १४८ ॥

---

(१४६) चलतीति। बुद्धिमान् जनः एकेन पादेन चलति न सर्वथा स्वस्थानं विहाय गच्छतीत्यर्थः। एकेन पादेन तिष्ठति परं स्थानम् अपरं देशम् असमीक्ष्य अनिश्चित्य पूर्वं प्रागधिष्ठितम् आयतनम् आवासं न त्यजेत्।

(र) सुनिरूपितं—विशेषेण निर्दिष्टम्।

(ल) चिरकालोपार्जितः—बहुकाललब्धः।

(व) सहजधार्मिकः—प्रकृत्या धर्मपरायणः।

(१४७) परेति। परोपदेशे परस्य उपदेशदाने सर्वेषां निखिलानामेव नृणां नराणां पाण्डित्यं विदग्धता सुकरं सुलभम्। तु किन्तु धर्मे धर्माचरणे स्वीयं स्वकीयम् अनुष्ठानं कस्यचित् बहुषु एकस्यैव विरलस्यैव इति यावत्, महात्मनः महतः दृश्यते इति शेषः।

(श) संवर्द्धयिष्यति—आप्याययिष्यते।

(१४८) यस्मिन्निति। यस्मिन् देशे सम्मानः न वृत्तिः जीवनोपायः

अपरञ्च, धनिकः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः।
पञ्च यत्र न विद्यन्ते, तत्र वासं न कारयेत्॥ १४९॥
अपरञ्च, लोकयात्रा भयं लज्जा दाक्षिण्यं त्यागशीलता।
पञ्च यत्र न विद्यन्ते न कुर्य्यात् तत्र संस्थितिम्॥१५०॥
अन्यच्च, तत्र मित्र! न वस्तव्यं, यत्र नास्ति चतुष्टयम्।
ऋणदाता च वैद्यश्च श्रोत्रियः सजला नदी॥ १५१॥

ततो मामपि तत्र नय। अथ वायसस्तेन मित्रेण सह (घ) विचित्रालापैः सुखेन तस्य सरसः समीपं ययौ ततो मन्थरो दूरादेव लघुपतनकमवलोक्य उत्थाय यथोचितमातिथ्यं (ङ) विधाय मूषिकस्यातिथिसत्कारं चकार।

---

न बान्धवाः आत्मीयाश्च न कश्चित् विद्यालाभश्च न विद्यन्ते तं देशं परिवर्जयेत् परित्यजेत्।

(१४९) धनिक इति। धनिकः धनवान् श्रोत्रियः सद्वंशजातः कुलीनः राजा अधिपतिः नदी पञ्चमः वैद्यः चिकित्सकस्तु इति पञ्च यत्र देशे न विद्यन्ते तत्र देशे वासं संस्थितिं न कारयेत्।

(१५०) लोकेति। लोकयात्रा जीविका भयं लज्जा दाक्षिण्यम् अनुकूलकारिता त्यागशीलता दातृत्वञ्च इति पञ्च यत्र देशे न विद्यन्ते तत्र देशे संस्थितिं न कुर्य्यात्।

(१५१) तत्रेति। हे मित्र! यत्र चतुष्टयम् एते चत्वारः न अस्ति तत्र न वस्तव्यं न अवस्थातव्यम्। किं तत् चतुष्टयं तत्राह, ऋणदाता उत्तमर्णः वैद्यः चिकित्सकः श्रोत्रियः कुलीनः सजला नदी।

(घ) विचित्रालापैः—विचित्राः बहुविधाः आलापाः कथोपकथनानि तैः।

(ङ) आतिथ्यम्—अतिथिसत्कारम्।

यतः, गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेको गुरुः स्त्रीणां सर्वत्राभ्यागतो गुरुः ॥ १५२ ॥
अपरञ्च, उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः ।
पूजनीयो यथायोग्यं सर्वदेवमयोऽतिथिः ॥ १५३ ॥

वायसोऽवदत्, "सखे मन्थर ! सविशेषपूजामस्मै (ह) विधेहि, यतोऽयं पुण्यकर्मणां (क) धुरीणः (ख) कारुण्यरत्नाकरो हिरण्यकनामा मूषिकराजः, एतस्य (ग) गुणस्तुतिं (घ) जिह्वासहस्रद्वयेनापि यदि (ङ) सर्पराजः कदा-

---

(१५२) गुरुरिति । द्विजातीनां ब्राह्मणानाम् अग्निः वह्निः गुरुः पूजनीयः वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्रात्मकानां चतुर्णां ब्राह्मणः गुरुः पूजनीयः । स्त्रीणां नारीणां पतिर्भर्त्ता एकः अद्वितीयः गुरुः सेवनीयः सर्वत्र सर्वस्मिन् स्थाने अभ्यागतः अतिथिः गुरुः गुरुवत् सेव्यः सत्काराहं इति यावत् ।

(१५३) उत्तमेति । उत्तमस्य श्रेष्ठस्यापि वर्णस्य ब्राह्मणादीनां चतुर्णामेकस्य गृहम् आगतः गृहे अतिथिभावेन उपस्थितः नीचः ब्राह्मणस्य गृहे क्षत्रियः क्षत्रियस्य गृहे वैश्य इतिवत् हीनवर्णोऽपि यथायोग्यं यथोचितं पूजनीयः सत्कर्त्तव्यः अतिथिः सर्वदेवमयः सर्वदेवस्वरूपः सर्वेषां देवानां पूजनेन यत् फलम् अतिथिसत्कारेणापि तदित्यर्थः

(ह) विधेहि—कुरु वि+धा+लोट् हि ।

(क) धुरीणः—अग्रगण्यः ।

(ख) कारुण्यरत्नाकरः—करुणैव कारुण्यं (स्वार्थे ष्यञ्) तस्य रत्नाकरः समुद्रः दयासागरः, प्रभूतस्य कारुण्यस्याधार इत्यर्थः ।

(ग) गुणस्तुतिं—गुणव्याख्यानम् ।

(घ) जिह्वासहस्रद्वयेणापि—द्विसहस्ररसनाभिरपि ।

(ङ) सर्पराजः—अनन्तः ।

चित् कर्तुं समर्थः स्यात्"इत्युक्ता चित्रग्रीवोपाख्यानं वर्णित-वान्। मन्थरः सादरं हिरण्यकं संपूज्याह,"भद्र! आत्मनो (च) निर्जनवनागमनकारणम् (छ) आख्यातुमर्हसि।,,

हिरण्यकोऽवदत्, कथयामि श्रूयताम्।

"अस्ति चम्पकाभिधानायां नगर्यां (ज) परिव्राजकाव-सथः। तत्र चूड़ाकर्णो नाम परिव्राजकः प्रतिवसति। स च (झ) भोजनावशिष्टभिक्षान्नसहितं (ञ) भिक्षापात्रं (ट)नागदन्तकेऽवस्थाप्य स्वपिति, अहञ्च तदन्नं (ठ) उत्प्लुत्य प्रत्यहं भक्षयामि।

अनन्तरं तस्य प्रियसुहृद् वीणाकर्णो नाम परिव्राजकः समायातः। तेन सह (ड) नानाकथाप्रसङ्गावस्थितो मम त्रासाय जर्जरवंशखण्डेन चूड़ाकर्णो भूमिमताड़यत्। तं

---

(च) निर्जनवनागमनकारणं—निर्नास्ति जनो यस्मिन् तच्च वन-ञ्चेति तस्मिन् आगमनं तस्य कारणं हेतुम्।

(छ) आख्यातुम्—अभिधातुं वर्णयितुमिति यावत्।

(ज) परिव्राजकावसथः—परिव्राजकानां भिक्षाश्रमिणाम् आव-सथः आवासः।

(झ) भोजनावशिष्टभिक्षान्नसहितं—भोजनेभ्यः अवशिष्टम् उद्वृत्तं भिक्षया लब्धम् अन्नं तण्डुलः तेन सहितम्।

(ञ) भिक्षापात्रं—भिक्षायै पात्रम्।

(ट) नागदन्तके—गृहभित्तौ प्रोथिते गजदन्ताकारदारुखण्डविशेषे।

(ठ) उत्प्लुत्य—ऊर्द्धमुत्थाय।

(ड) नानाकथाप्रसङ्गावस्थितः—नाना बहुविधाः कथाः आ-लापाः तासां प्रसङ्गः अवतारणं तस्मिन् अवस्थितः आसक्तः।

तथाविधं दृष्ट्वा वीणाकर्ण उवाच, सखे! किमिति मम कथाविरक्तोऽन्यासक्तो (ढ) भवान्?

यतः, मुखं प्रसन्नं विमला च दृष्टिः
कथानुरागो मधुरा च वाणी।
स्नेहोऽधिकं सम्भ्रमदर्शनञ्च
सदानुरक्तस्य जनस्य लक्ष्म॥ १५४॥

अदृष्टिदानं कृतपूर्वनाशनम्
अमाननं दुश्चरितानुकीर्तनम्।
कथाप्रसङ्गेन च नामविस्मृति-
र्विरक्तभावस्य जनस्य लक्षणम्॥ १५५॥

चूडाकर्णेन उक्तं, "मित्र! नाहं विरक्तः, किन्तु पश्य अयं मूषिको ममापकारी सदा पात्रस्थं भिक्षान्नमुत्प्लुत्य

---

(ढ) अन्यासक्तः—अन्यस्मिन् विषये आसक्तः व्यापृतः निविष्ट-चित्त इति यावत्।

(१५४) मुखमिति। मुखं मुखकान्तिः प्रसन्नं हर्षसूचकं दृष्टिः दर्शनं विमला परितोषव्यञ्जिका कथायां वाक्यालापे अनुरागः आग्रहः वाणी वाक् च मधुरा मनोहरा स्नेहः प्रणयिभावः अधिकं पुनःपुनः सम्भ्रमदर्शनं सोत्सुकावलोकनम् एतत् सर्वं सदानुरक्तस्य अतीव प्रणया-सक्तस्य जनस्य लक्ष्म चिह्नम्।

(१५५) अदृष्टिदानमिति। अदृष्टिदानं दृष्टिपाताभावः पूर्वं कृतं कृतपूर्वं तस्य नाशो यस्मिन् तत् पूर्वकृतस्य अस्वीकारः अमाननम् अव-मानना दुश्चरितस्य असदाचरणस्य अनुकीर्त्तनं वर्णनम् अन्यसन्निधौ ख्यापनमिति यावत्। कथाप्रसङ्गेन प्रसङ्गागतकथायां तद्विषयकोक्तौ च नामविस्मृतिः नामविस्मरणं विरक्तभावस्य अननुरक्तस्य जनस्य लक्षणं चिह्नम्।

भक्षयति ।" वीणाकर्णो नागदन्तमवलोक्याह, "कथं मूषिकः स्वल्पबलोऽप्येतावद्दूरमुत्पतति ? तदत्र केनापि कारणेन भवितव्यम् ।

तथा चोक्तम्,

अकस्मात् युवती वृद्धं केशेष्वाकृष्य चुम्बति ।

पतिं निर्दयमालिङ्ग्य हेतुरत्र भविष्यति ॥"१५६ ॥

चूड़ाकर्णः पृच्छति, कथमेतत् ?

वीणाकर्णः कथयति,—"अस्ति (च) गौड़ीये कौशाम्बी नाम नगरी, तस्यां चन्दनदासो नाम वणिग् महाधनो निवसति, तेन च (त) पश्चिमे वयसि वर्त्तमानेन (थ) कामाधिष्ठितचेतसा (द) धनदर्पाल्लीलावती नाम वणिक्पुत्री परिणीता, सा च (ध) मकरकेतोर्वैजयन्तीव यौवनवती बभूव, स च वृद्धपतिस्तस्याः सन्तोषाय नाभवत् ।

---

(१५६) अकस्मादिति । युवती वृद्धं पतिम् अकस्मात् अतर्कितं यथा तथा निर्दयं गाढम् आलिङ्ग्य आश्लिष्य केशेषु आकृष्य धृत्वा चुम्बति अत्र कश्चित् हेतुः कारणं भविष्यति ।

(च) गौड़ीये—गौड़देशे, वङ्गे ।

(त) पश्चिमे—वृद्धे ।

(थ) कामाधिष्ठितचेतसा—कामेन अधिष्ठितम् आक्रान्तं चेतो यस्य तेन कामरिपुपरतन्त्रेण ।

(द) धनदर्पात्—धनित्वाभिमानात् ।

(ध) मकरकेतोर्वैजयन्तीव—मकरकेतोः कन्दर्पस्य वैजयन्ती विजयपताकेव यत्रयापि कन्दर्पः कामिषु विजयं लभते इति भावः ।

यतः, अग्निनीव हिमार्त्तानां, घर्म्मार्त्तानां रवाविव ।
मनो न रमते, स्त्रीणां जराजीर्णेन्द्रिये पतौ ॥ १५७ ॥

अन्यच्च, पलितेष्वपि दृष्टेषु पुंसः का नाम कामिता ।
भैषज्यमिव मन्यन्ते यदन्यमनसः स्त्रियः ॥ १५८ ॥

स च वृद्धपतिस्तस्यामतीवानुरागवान् ।

यतः, धनाशा जीविताशा च गुर्वी प्राणभृतां सदा ।
वृद्धस्य तरुणी भार्य्या प्राणेभ्योऽपि गरीयसी ॥ १५९ ॥

अपिच, नोपभोक्तुं न च त्यक्तुं, शक्नोति विषयान् जरी ।
अस्थि निर्दशनः श्वेव जिह्वया लेढि केवलम् ॥ १६० ॥

---

(१५७) अग्निनीति । हिमार्त्तानां हिमपीड़ितानां अग्निनि चन्द्रे इव घर्मार्त्तानां ग्रीष्मतापितानां रवौ सूर्य्ये इव स्त्रीणां नारीणां जरया जीर्णे शिथिलितेन्द्रिये पतौ भर्त्तरि मनश्चेतः न रमते न हृष्यति नानुरक्तं भवतीत्यर्थः ।

(१५८) पलितेति । पलितेषु वार्द्धक्यसुलभशुक्लेषु केशेषु दृष्टेषु सत्स्वपि पुंसः पुरुषस्य कामिता कामिनीसङ्गयासादिविषयभोगवासना का नाम वार्द्धके रमणीसम्भोगाभिलाषो न सम्भावनीय एव । यत् यस्मात् स्त्रियः अन्यस्मिन् मनो यासां ताः तथोक्ताः तरुणपुरुषासक्तचित्ताः तं वृद्धपतिमिति शेषः, भैषज्यं दुःखसेव्यम् औषधमिव मन्यन्ते जानन्ति, न तस्मिन्ननुरागवत्यो भवन्तीत्यर्थः ।

(१५९) धनाशेति । धनाशा अर्थाभिलाषः जीविताशा प्राणधारणवासना च प्राणभृतां प्राणिनां सदा सर्वदा गुर्वी महती वर्त्तते इति शेषः । वृद्धस्य जराग्रस्तस्य तरुणी युवती भार्य्या पत्नी प्राणेभ्योऽपि जीवितादपि गरीयसी प्रशस्ततरा प्राणेभ्योऽप्यधिकेत्यर्थः ।

(१६०) नेति । जरा विद्यतेऽस्येति जरी जराजीर्णः जनः विषयान् कामान् उपभोक्तुं सेवितुं त्यक्तुं त्रिहातुञ्च न शक्नोति । निर्दशनः

अथ सा लीलावती यौवनदर्पादतिक्रान्तकुलमर्य्यादा(न) केनापि वणिक्पुत्रेण सहानुरागवती बभूव।

यतः, स्वातन्त्र्यं पितृमन्दिरे निवसतिर्यात्रोत्सवे सङ्गतिः,
गोष्ठी पूरुषसन्निधावनियमो, वासो विदेशे तथा।
संसर्गः सह पुंश्चलीभिरसकृद्वृत्तेर्निजायाः क्षतिः
पत्युर्वार्द्धकमीर्षितं प्रवसनं, नाशस्य हेतुः स्त्रियाः॥१६१॥

अपरञ्च, पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम्।
स्वप्नश्चान्यगृहे वासो नारीणां दूषणानि षट्॥१६२॥

---

दन्तशून्यः श्वा कुक्कुरः अस्थि इव केवलं जिह्वया रसनया लेढि आस्वादयति, उपभोगेऽसमर्थोऽपि भोगवासनां न जहातीत्यर्थः।

(न) अतिक्रान्तकुलमर्य्यादा—अतिक्रान्ता लङ्घिता कुलमर्य्यादा कुलाचारः यया सा स्वेच्छाचारिणी।

(१६१) स्वातन्त्र्यमिति। स्वतन्त्रस्य भावः स्वातन्त्र्यं स्वाधीनता स्वेच्छाचरणं पितृमन्दिरे पित्रालये निवसतिः बहुकालमवस्थानं यात्रोत्सवे तीर्थयात्रादौ उत्सवकर्मणि च समवेतबहुजने व्यापारे इत्यर्थः, सङ्गतिः समागमः पूरुषसन्निधौ असम्पृक्तपुरुषसमीपे गोष्ठी सभा बहुभिः मीलनम् अनियमः स्त्रीजनोचितकर्मणि नियमाभावः। तथा विदेशे पतिदेशातिरिक्ते देशे वासः अवस्थितिः पुंश्चलीभिः वेश्याभिः संसर्गः सहवासः एकत्रावस्थानम् असकृत् बहुशः निजायाः स्वकीयायाः वृत्तेः चरितस्य क्षतिः भ्रंशः पत्युः भर्त्तुः वार्द्धकं वृद्धावस्था ईर्षितम् ईर्षापरतन्त्रता सपत्नीनां भर्त्तृवात्सल्यासहिष्णुत्वम् इति यावत्। प्रवसनं प्रयासः एतत् सर्वं स्त्रियाः भार्य्याः नाशस्य हेतुः कारणम् एतैर्दोषैः स्त्रियः पातिव्रत्यात् नश्यन्ते इति भावः।

(१६२) पानमिति। पानं मद्यादीनां दुर्जनसंसर्गः असज्जनैः सहवासः पत्या भर्त्रा च विरहः अटनं परगृहे बहुशः भ्रमणं स्वप्नः

किञ्च, स्थानं नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नरः ।
तेन नारद ! नारीणां सतीत्वमुपजायते ॥ १६३ ॥
अन्यच्च, न स्त्रीणामप्रियः कश्चित् प्रियो वापि न विद्यते ।
गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नवम् ॥ १६४ ॥
अन्यच्च, सुवेशं पुरुषं दृष्ट्वा भ्रातरं यदि वा सुतम् ।
योनिः क्लिद्यति नारीणां, सत्यं सत्यं हि नारद ! ॥१६५॥
अपरञ्च, घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमान् ।
तस्मात् घृतञ्च वह्निञ्च नैकत्र स्थापयेद् बुधः ॥ १६६ ॥

---

स्वैरं अन्यपुरुषलाभः अन्यगृहे असम्पृक्तालये वासः स्थितिः एतानि षट् नारीणां स्त्रीणां दूषणानि सतीत्वनाशकारणभूतानि ।

(१६३) स्थानमिति । यत्रेति अध्याहार्यं यत्र स्थानं नास्ति पुरुषसङ्गमोचितस्थानं न विद्यते क्षणः समयः सङ्गमावकाश इति यावत् । नास्ति प्रार्थयिता प्रणयाकाङ्क्षी नरः पुरुषश्च नास्ति तेन स्थानाद्यलाभेन हे नारद ! नारीणां सतीत्वं साध्वीत्वम् उपजायते रचितं भवति ।

(१६४) नेति । स्त्रीणाम् अप्रियः अरुचिविषयः कश्चित् न नास्ति प्रियः रुचिकरश्च न विद्यते । अरण्ये वने गावः तृणमिव शष्पमिव नवं नवम् एकस्मादन्यं प्रार्थयन्ति काङ्क्षन्ति प्रार्थयन्ति इति परस्मैपद-प्रयोगः मह्राकविप्रयुक्ततया सिध्यति ।

(१६५) सुवेशमिति । भ्रातरं यदि वा सुतं वापि सुवेशं सुश्रीकं पुरुषं दृष्ट्वा हे नारद ! नारीणां स्त्रीणां योनिः क्लिद्यति क्लिन्ना भवति इति सत्यं सत्यं ब्रवीमि इति शेषः । यस्य कस्यापि सुन्दरपुरुषस्य दर्शनेन कामिन्यः कामपरतन्त्रा भवन्तीत्यर्थः ।

(१६६) घृतेति । नारी घृतस्य कुम्भः घृतकुम्भः तेन समा तुल्या घृतपूरितकलसतुल्या पुमान् पुरुषः तप्तः उत्तप्तः योऽङ्गारस्तेन समः ज्वलदिन्धनसदृशः तस्मात् हेतोः बुधः पण्डितः घृतञ्च हविश्च वह्निं

मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ १६७ ॥
न लज्जा न विनीतत्वं न दाक्षिण्यं न भीरुता ।
प्रार्थनाभाव एवैकं सतीत्वे कारणं स्त्रियाः ॥ १६८ ॥
अपिच, पिता रक्षति कौमारे, भर्त्ता रक्षति यौवने ।
पुत्रश्च स्थाविरे भावे, न स्त्री स्वातन्त्र्यमर्हति ॥ १६९ ॥
स्त्रियो हि चपला नित्यं देवानामपि विश्रुतम् ।
ताश्चापि रक्षिता येषां ते नराः सुखभागिनः ॥ १७० ॥

---

अग्निञ्च एकत्र एकस्मिन् स्थाने न स्थापयेत् न रक्षेत् । वह्निसान्निध्ये घृतमिव पुरुषसन्निधौ नारीणां मनः अवश्यमेव द्रवीभवतीत्यर्थः ।

(१६७) मात्रेति । मात्रा जनन्या मातृस्थानीयया वा स्वस्रा भगिन्या दुहित्रा कन्यया वा सह विविक्ते विजने आसनम् उपवेशनं यस्य स तथोक्तः निर्जनदेशस्थायी न भवेत् । यतः बलवान् प्रबलः दुर्दम इति भावः । इन्द्रियग्रामः इन्द्रियसमूहः विद्वांसं पण्डितं जितेन्द्रियमिति भावः । अपि अन्येषान्तु का कथेत्यर्थः । कर्षति आकर्षति स्वायत्तीकरोतीत्यर्थः ।

(१६८) नेति । स्त्रियाः नार्य्याः सतीत्वे साध्वीत्वरक्षणे लज्जा-ग्रस्तीनता न सर्वत्र कारणमित्यनेनान्वयः । विनीतत्वं विनयो न दाक्षिण्यं पतिच्छन्दानुवर्त्तनञ्च न भीरुता गुरुजनेभ्यः भयञ्च न किन्तु प्रार्थनाभावः पुरुषान्तरसम्भोगे अनिच्छैव एकं प्रधानं कारणं हेतुः ।

(१६९) पितेति । कौमारे अपरिणीतावस्थायां पिता रक्षति, यौवने यौवनदशायां भर्त्ता पतिः रक्षति, स्थाविरे भावे वार्द्धके पुत्रः रक्षति, इत्यं स्त्री स्वातन्त्र्यं स्वच्छन्दानुवर्त्तनं स्वेच्छाचारित्वं न अर्हति । नार्य्यः सर्वावस्थायामेव रक्षणीया इत्यर्थः ।

(१७०) स्त्रिय इति । स्त्रियः नार्य्यः नित्यं सदा चपलाः चञ्चल-

एकदा सा लीलावती (प) रत्नावलीकिरणकर्बुरे पर्य्यङ्के तेन वणिक्पुत्रेण सह (फ) विस्रम्भालापैः सुखासीना (ब) तमलक्षितोपस्थितं पतिमवलोक्य सहसोत्थाय (भ) केशेष्वाकृष्य (म) निर्भरमालिङ्ग्य चुम्बितवती । तेनावसरेण जारश्चोत्थाय पलायितः । उक्तञ्च,

उशना वेद यच्छास्त्रं, यच्च वेद बृहस्पतिः ।
स्वभावेनैव तच्छास्त्रं स्त्रीबुद्धौ सुप्रतिष्ठितम् ॥ १७१ ॥

तदालिङ्गनमवलोक्य समीपवर्त्तिनी कुट्टिन्यचिन्तयत् अकस्मादियमेनमुपगूढ़वतीति (य) ततस्तया कुट्टिन्या

---

प्रकृतयः देवानामपि विश्रुतं विदितम् । येषां पुरुषाणां ताः नार्य्यश्चापि प्रकृतिचपलाश्चापीति भावः, रक्षिताः ते नराः पुमांसः सुखभागिनः सुखभाजनानि ।

(प) रत्नावलीकिरणकर्बुरे—रत्नावलीनाम् अङ्गाभरणगतमणिमुक्ताराजीनां किरणैरंशुभिः कर्बुरे विचित्रिते ।

(फ) विस्रम्भालापैः—मिथोभाषणैः, रहसि प्रणयगर्भैरालापैः

(ब) अलक्षितोपस्थितम्—अलक्षितम् अतर्कितं यथा तथा उपस्थितः तम्, अतर्कितोपगतम् ।

(भ) केशेषु—अवच्छेदे सप्तमी ।

(म) निर्भरं गाढ़म् ।

(१७१) उशनेति । यत् शास्त्रं कूटनीतिशास्त्रम् उशनाः दैत्यगुरुः शुक्राचार्य्यः वेद जानाति यच्च शास्त्रं बृहस्पतिः वेद जानाति तत् शास्त्रं स्त्रीबुद्धौ नारीबुद्धौ स्वभावेनैव प्रकृत्यैव शिक्षामन्तरेणैवेति भावः, सुप्रतिष्ठितं विद्यमानं, स्त्रीणामशिक्षितपटुत्वं सर्वत्र दृश्यते इत्यर्थः ।

(य) उपगूढ़वती—आलिङ्गितवती (उप + गूह + क्तवत् )

तत्कारणं परिज्ञाय सा लीलावती गुप्ते न दण्डिता। अतोऽहं ब्रवीमि, अकस्माद् युवती वृद्धमित्यादि। बलोपष्टम्भेन च केनापि कारणेनात्र भवितव्यम्।" क्षणं विचिन्त्य परिव्राजकेनोक्तं, कारणञ्चात्र (र) धनबाहुल्यं प्रतिभाति।

यतः, धनवान् बलवान् लोके सर्वः सर्वत्र सर्वदा।
प्रभुत्वं धनमूलं, हि राज्ञामप्युपजायते॥" १७२॥

ततः खनित्रमादाय तेन विवरं खनित्वा चिरसञ्चितं मम धनं गृहीतम्। ततः प्रभृति निजशक्तिहीनः सत्त्वोत्साहरहितः (ल) स्वाहारमप्युत्पादयितुमक्षमः, (व) सत्रासं मन्दं मन्दमुपसर्पन् चूडाकर्णेनावलोकितः, ततस्तेनोक्तम्,

"धनेन बलवान् लोको धनाद्भवति पण्डितः।
पश्यैनं मूषिकं पापं स्वजातिसमतां गतम्॥ १७३।

---

(र) धनबाहुल्यं—प्रचुरधनसञ्चयः।

(१७२) धनवानिति। लोके जगति सर्वत्र सर्वस्मिन् देशे सर्वदा सर्वस्मिन् समये सर्वः धनवान् धनशाली जनः बलवान् बलशाली भवेदिति शेषः। हि तथाहि, राज्ञां नरपतीनाम् अपि प्रभुत्वं प्रभावः धनमेव मूलं कारणं यस्य तत् उपजायते भवति, धनाभावे राज्ञामपि प्रभुत्वं न सम्भवेदेवेत्यर्थः।

(ल) सत्त्वोत्साहरहितः—सत्त्वं बलम् उत्साहः उद्योगः ताभ्यां रहितः, दुर्बलः निरुत्साहश्च।

(व) उत्पादयितुम्—उपार्जयितुम्।

(१७३) धनेनेति। लोकः जनः धनेन हेतुना बलवान् बलशाली भवतीति शेषः, धनाद्धेतोः पण्डितः भवति। एनं पापं पापिष्ठं मूषिकं स्वजातिसमतां मूषिकजातेस्तुल्यबलत्वं गतं प्राप्तं पश्य जानीहीति।

किञ्च, अर्थेन तु विहीनस्य पुरुषस्याल्पमेधसः ।
क्रियाः सर्वा विनश्यन्ति ग्रीष्मे कुसरितो यथा ॥१७४॥

अपरञ्च, यस्यार्थास्तस्य मित्राणि, यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमांल्लोके, यस्यार्थाः स हि पण्डितः ॥१७५॥

अन्यच्च, अपुत्रस्य गृहं शून्यं सन्मित्ररहितस्य च ।
मूर्खस्य च दिशः शून्याः, सर्वशून्या दरिद्रता ॥ १७६ ॥

अपिच, दारिद्र्यान्मरणाद्वापि दारिद्र्यमवरं स्मृतम् ।
अल्पक्लेशेन मरणं दारिद्र्यमतिदुःसहम् ॥ १७७ ॥

---

पूर्वम् अयं भिक्षापात्रस्थमन्नमपहृत्य भक्षित्वा च स्वजात्यपेक्षया व्यधिकबलः आसीत् इदानीन्तु तदपहरणेन दुर्बलः संवृत्त इत्यर्थः ।

(१७४) अर्थेनेति । अर्थेन धनेन विहीनस्य रहितस्य अल्पा मेधा धारणावती बुद्धिर्यस्य तस्य मन्दधियः पुरुषस्य ग्रीष्मे ग्रीष्मर्त्तौ कुसरितः स्वल्पजलाः नद्यः यथा नद्य इव सर्वाः सकलाः क्रियाः कर्माणि विनश्यन्ति विफलीभवन्ति ।

(१७५) यस्येति । यस्य जनस्य अर्थाः धनानि सन्तीति शेषः, तस्य जनस्य मित्राणि बन्धवः । यस्य अर्थाः तस्य बान्धवाः मातुलादयः कुटुम्बानि । यस्य अर्थाः स लोके जगति पुमान् पुरुषार्थयुक्तः । यस्य अर्थाः स हि पण्डितः विद्वान् ।

(१७६) अपुत्रस्येति । अपुत्रस्य अनपत्यस्य सत् मित्रं सन्मित्रं तेन रहितस्य अकृत्रिमसुहृद्वर्जितस्य च जनस्य गृहं शून्यं निष्फलम् अकिञ्चित्करमिति यावत् । मूर्खस्य मन्दबुद्धेः दिशः शून्याः सर्वास्वपि दिक्षु सहायहीनतेत्यर्थः । दरिद्रता अकिञ्चनत्वं सर्वशून्या सर्वसुखवर्जिता, दरिद्रस्य न कश्चिदपि सुखलेशोऽप्यस्तीत्यर्थः ।

(१७७) दारिद्र्यादिति । दारिद्र्यात् दरिद्रतायाः मरणात् मृत्योर्वापि उभयोर्मध्ये इत्यर्थः दारिद्र्यं धनहीनत्वम् अवरं हीनं

अन्यच्च, तानीन्द्रियाण्यविकलानि, तदेव नाम
सा बुद्धिरप्रतिहता, वचनं तदेव।
अर्थोष्मणा विरहितः पुरुषः स एव
अन्यः क्षणेन भवतीति विचित्रमेतत् ॥"१७८॥

एतत् सर्वमाकर्ण्य मयाऽवलोचितं, "ममात्रावस्थान-मयुक्तं, यच्चान्यस्मै एतद् वृत्तान्तकथनं, तदप्यनुचितम्।
यतः, अर्थनाशं मनस्तापं, गृहे दुश्चरितानि च।
वञ्चनञ्चापमानञ्च, मतिमान्न प्रकाशयेत् ॥ १७९ ॥

---

स्मृतं कथितं, दारिद्र्यान्मरणं श्रेय इत्यर्थः। कुत इत्याह, मरणं मृत्युः अल्पक्लेशेन कियत्कालं क्लेशभोगेन जायते इति शेषः। दारिद्र्यम् अतिदुःसहं दुःसहक्लेशकरं यावज्जीवक्लेशावहमित्यर्थः।

(१७८) तानीति। अर्थहीनस्य पुरुषस्येति सर्वत्राध्याहृत्यान्वयः। तानि धनिन इव अविकलानि अविकृतानि इन्द्रियाणि चक्षुरादीनि सन्तीति शेषः। तदेव नाम धनिन इव आख्या अस्ति। सा धनिन इव अप्रतिहता तीक्ष्णा बुद्धिः, तदेव तादृशमेव वचनं किन्तु स एव पुरुषः धनिवदविकलेन्द्रियादियुक्त एव पुरुषः नरः अर्थोष्मणा धनगर्वेण विरहितः धनहीनः सन्नित्यर्थः क्षणेन मुहूर्तादेव अन्यः अन्यविधः विकलेन्द्रियादियुक्तवत् भवतीति एतत् विचित्रम् आश्चर्यं विस्मयकरमिति यावत्, धनाभावे पुरुषस्य इन्द्रियादीनामपि विकृतिर्जायते इवेत्यर्थः।

(१७९) अर्थनाशमिति। मतिर्विद्यतेऽस्येति मतिमान् बुद्धिमान् जनः अर्थनाशं धनक्षयं मनस्तापम् आन्तरिकक्लेशं गृहे निजालये दुश्चरितानि स्वगृहच्छिद्राणि वञ्चनं परस्य प्रतारणम् अपमानम् अन्यकृतामवज्ञां न प्रकाशयेत् अन्यसन्निधौ न कथयेत्।

यथा चोक्तम्,

आयुर्वित्तं गृहच्छिद्रं मन्त्रमैथुनभेषजम् ।

तपोदानापमानञ्च नव गोप्यानि यत्नतः ॥ १८० ॥

तथा चोक्तम्,

अत्यन्तविमुखे दैवे व्यर्थयत्ने च पौरुषे ।

मनस्विनो दरिद्रस्य वनादन्यत् कुतः सुखम् ? ॥१८१॥

अन्यच्च, मनस्वी म्रियते कामं, कार्पण्यं न तु गच्छति ।

अपि निर्वाणमायाति नानलो याति शीतताम् ॥१८२॥

---

(१८०) आयुरिति । आयुः परमायुः जीवनकालः वित्तं धनं गृहच्छिद्रं स्वगृहदोषः मन्त्रः मन्त्रणा मैथुनं स्त्रीसहवासः भेषजम् औषधम् एतेषां समाहारस्तत् तथोक्तं तपः धर्मानुष्ठानं दानं सत्पात्रे विनियोगः अपमानश्च तेषां समाहारस्तत् नव नवसंख्यकानि यत्नतः यत्नेन गोप्यानि नान्यसमीपे प्रकाश्यानि ।

(१८१) अत्यन्तेति । दैवे नियतौ अत्यन्तविमुखे अतीव प्रतिकूले दुर्दैवे सतीत्यर्थः, पौरुषे पुरुषकारे च व्यर्थः विफलः यत्नः चेष्टा यस्मिन् स तस्मिन् विफलप्रयासे सति मनस्विनः स्थिरधियः दरिद्रस्य धनहीनस्य वनात् अन्यत् वनवासादपरं कुतः कस्मात् सुखं भवतीति शेषः, ईदृशस्य वनवास एव श्रेयानित्यर्थः ।

(१८२) मनस्वीति । मनस्वी स्थिरधीः उदारप्रकृतिर्जनः कामं वरं म्रियते मृत्युमाश्रयति, तु किन्तु कार्पण्यं कृपणतां लघुत्वमिति यावत् न गच्छति न लभते । दृष्टान्तमाह, अनलः वह्निः निर्वाणं विनाशम् आयाति गच्छति अपि निश्चये आयात्वेवेत्यर्थः, तथापि शीततां शैत्यं निस्तेजस्कत्वमिति भावः न याति प्राप्नोति ।

किञ्च, कुसुमस्तवकस्येव द्वे वृत्ती तु मनस्विनः।
सर्वेषां मूर्ध्नि वा तिष्ठेद्विशीर्य्येदथवा वने ॥ १८३ ॥
यच्चात्रैव याञ्चया जीवनं, तदतीव गर्हितम्।
यतः, वरं विभवहीनेन प्राणैः सन्तर्पितोऽनलः।
नोपचारपरिभ्रष्टः कृपणः प्रार्थ्यते जनः ॥ १८४ ॥
अन्यच्च,
दारिद्र्यात् ह्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते, परिभवान्निर्वेदमापद्यते।
निर्विण्णः शुचमेति शोकपिहितो बुद्ध्या परित्यज्यते,
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥१८५॥

---

(१८३) कुसुमेति। मनस्विनः उन्नतचेतसः कुसुमस्तवकस्य पुष्पस्तवकस्य इव द्वे द्विविधे वृत्ती प्रवृत्ती व्यापाराविति यावत्। एका सर्वेषां जनानां मूर्ध्नि मस्तके सर्वोपरि इत्यर्थः तिष्ठेत् परिगण्येत वा अथवा वने विशीर्य्येत् वनवासप्रयासेन शरीरं विसृजेदित्यर्थः।

(१८४) वरमिति। विभवहीनेन दरिद्रेण प्राणैर्जीवनेन अनलः वह्निः सन्तर्पितः तृप्तिमापादितः वरं श्रेयान् वरं वह्नौ प्रविशेदित्यर्थः। उपचारपरिभ्रष्टः उपचारेण पूज्यपूजया परिभ्रष्टः रहितः अकृतपूज्यसत्कारः कृपणः लघुचेता जनः न प्रार्थ्यते याच्यते, क्षुद्रे प्रार्थनायां वह्निप्रवेशः सहस्रशः श्रेयानिति भावः।

(१८५) दारिद्र्यादिति। दारिद्र्यात् धनहीनत्वात् हेतोः ह्रियं लज्जाम् एति प्राप्नोति, ह्रीपरिगतः व्रीडितो जनः तेजसः औदार्य्यात् भ्रश्यते हीयते, निस्तेजाः तेजोहीनः परिभूयते अवज्ञायते लोकैरिति शेषः, परिभवात् अपमानात् निर्वेदम् अवज्ञाजनितस्वावमाननां जीवितं मे धिक् इत्येवम् आत्मनि अवज्ञाम् आपद्यते प्राप्नोति, निर्विण्णः आत्मावमाननायुक्तो जनः शुचं चित्तवैक्लव्यं मनःक्षोभमिति यावत्,

किञ्च, वरं मौनं कार्य्यं न च वचनमुक्तं यदनृतं
वरं क्लैव्यं पुंसां न च परकलत्राभिगमनम् ।
वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरुचि-
र्वरं भिक्षाशित्वं न च परधनास्वादनसुखम् ॥ १८६ ॥
वरं शून्या शाला न च खलु वरो दुष्टवृषभः
वरं वेश्या पत्नी न पुनरविनीता कुलवधूः ।
वरं वासोऽरण्ये न पुनरविवेकाधिपपुरे
वरं प्राणत्यागो न पुनरधमानामुपगमः ॥ १८७ ॥

---

एति प्राप्नोति, शोकेन मनःक्लेशेन पिहितः अभिभूतः बुद्ध्या परित्यज्यते बुद्धिभ्रष्टो भवति, निर्बुद्धिः क्षयं नाशम् एति प्राप्नोति, अहो खेदे निधनता दारिद्र्यं सर्वापदां सकलविपत्तीनाम् आस्पदं स्थानम् ।

(१८६) वरमिति । वरं मौनं मौनावलम्बनं कार्य्यं कर्त्तव्यं, यत् अनृतम् असत्यं तत् वचनम् उक्तं न च कार्य्यम्। पुंसां पुरुषाणां क्लैव्यं क्लीवता वरं परकलत्राभिगमनं परदारसम्भोगलिप्सा न च वरमित्यर्थः। प्राणत्यागः वरं पिशुनवाक्येषु शाठ्यपूर्णवचनेषु उक्तिषु अभिरुचिः अभिलाषः न च वरम् । भिक्षाशित्वं भिक्षया लब्धेनान्नेन वर्त्तनशीलत्वं वरं परधनास्वादनसुखं परधनस्य अन्यदत्तस्य धनस्य अर्थस्य आस्वादनम् उपभोगः तेन सुखं चित्तनिर्वृतिः न च वरम् ।

(१८७) वरमिति । शून्या गोवर्जिता शाला गोगृहं वरं दुष्टो वृषभः न वरः । वेश्या गणिका वरं पुनः अविनीता प्रतिकूलाचारिणी कुलवधूः पत्नी भार्य्या न वरम् । अरण्ये वने वासोऽवस्थितिः वरं पुनः किन्तु अविवेकः विवेचनाशक्तिरहितः योऽधिपः राजा तस्य नगरे स्वेच्छाचारिणो राज्ञः राज्ये वासो न वरम् । प्राणत्यागः मृत्यु-रपि वरं पुनस्तथापि अधमानां नीचाशयानाम् उपगमः सहवासः न वरम् ।

अपिच,

सेवेव मानमखिलं ज्योत्स्नेव तमो, जरेव लावण्यम्।
हरिहरकथेव दुरितं, गुणशतमप्यर्थिता हरति॥ १८८॥

इति विमृश्य तत् किमहं (य) परपिण्डेनात्मानं पोषयामि (र)? कष्टं भो! तदपि द्वितीयं स मृत्युद्वारम्।
यतः, पल्लवग्राहि पाण्डित्यं क्रयक्रीतञ्च मैथुनम्।
भोजनञ्च पराधीनं तिस्रः पुंसां विडम्बनाः॥ १८९॥
अन्यच्च, रोगी चिरप्रवासी परान्नभोजी परावसथशायी।
यज्जीवति तन्मरणं, यन्मरणं सोऽस्य विश्रामः॥१९०॥

---

(१८८) सेवेति। अर्थिता याचकभावः सेवा भृत्यभावः अखिलं सर्वं मानमिव ज्योत्स्ना कौमुदी तमः अन्धकारमिव जरा वार्द्धक्यं लावण्यं सौन्दर्य्यमिव हरिहरकथा विष्णुमहेश्वरनामकीर्त्तनं दुरितं पापमिव गुणशतं गुणराशिं हरति हन्ति।

(य) परपिण्डेन—अन्यदत्तेनान्नेन।

(र) आत्मानं पोषयामि—जीविकां निर्वाहयामि।

(ल) मृत्युद्वारं—मृत्युवत् क्लेशावहम्।

(१८९) पल्लवेति। पुंसां नराणां तिस्रः विडम्बनाः विफलप्रयत्नाः। कीदृश्यस्ता इत्याह, पल्लवम् अग्रं गृह्णाति यत् तत् तथोक्तं किञ्चिन्मात्रमित्यर्थः पाण्डित्यं विद्यावत्ता क्रयक्रीतम् अर्थक्रीतं भग्नलब्धमिति यावत्, मैथुनं स्त्रीसम्भोगः पराधीनं भोजनम् आहारः।

(१९०) रोगीति। रोगी चिररुग्णः चिरप्रवासी प्रोषितः परान्नभोजी परदत्तेनान्नेन जीविकां निर्वाहयन् परस्यावसथः आलयः तस्मिन् शेते यः सः परगृहे शयनशीलः एवंविधः पुरुषः जीवति यत् तत् मरणं यत् मरणं मृत्युः सः अस्य ईदृशस्य विश्रामः शान्तिः। विधेयप्राधान्यात् स इत्यत्र पुंस्त्वम्।

इत्यालोच्यापि लोभात् पुनरपि तदीयान्नं ग्रहीतुं ग्रह (ङ) मकरवम्। तथा चोक्तम्,

लोभेन बुद्धिश्चलति, लोभो जनयते तृषाम्।
तृषार्त्तो दुःखमाप्नोति परत्रेह च मानवः ॥ १८१ ॥

ततोऽहं मन्दं मन्दमुपसर्पंस्तेन वीणाकर्णेन (क) जर्जरवंशखण्डेन ताड़ितश्चाचिन्तयम्, लुब्धो ह्यसन्तुष्टो (ख) नियतमात्मद्रोही (ग) भवति।

तथाच, धनलुब्धो ह्यसन्तुष्टोऽनियतात्माऽजितेन्द्रियः।
सर्वा एवापदस्तस्य यस्य तुष्टं न मानसम् ॥१८२॥
सर्वाः सम्पत्तयस्तस्य सन्तुष्टं यस्य मानसम्।

---

(ङ) ग्रहम्—आग्रहम्, उद्यमम्।

(१८१) लोभेनेति। लोभेन लिप्सया बुद्धिश्चलति विचलिता भवति। लोभः तृषाम् अत्युत्कटामिच्छां जनयते उत्पादयति। तृष्णार्त्तः तृष्णया उत्कटेच्छया ऋतः अभिभूतः अत्यन्तलोभीत्यर्थः मानवः परत्र परस्मिन् काले इह च अस्मिन् लोके च दुःखम् आप्नोति प्राप्नोति।

(क) जर्जरवंशखण्डेन—विशीर्णवंशदण्डेन।

(ख) नियतं—निश्चितम्।

(ग) आत्मद्रोही—आत्मानं द्रुह्यतीति आत्मद्रोही आत्मघाती॥

(१८२) धनलुब्ध इति। यस्य मानसं मनः न तुष्टं तस्य सर्वा एव आपदः विपदः, स हि सर्वापदामास्पदमित्यर्थः। हि तथाहि, स नरः धनलुब्धः अर्थलोलुपः असन्तुष्टः अप्रसन्नचित्तः अनियतात्मा असंयमितान्तःकरणवृत्तिः तथा अजितानि अनिग्रहीतानि इन्द्रियाणि यस्य सः इन्द्रियासक्तो भवतीति शेषः।

(१८३) सर्वा इति। यस्य मानसं मनः सन्तुष्टं तस्य सर्वाः

उपानद्गूढपादस्य ननु चर्मावृतेव भूः ॥ १९३ ॥

अपरञ्च, सन्तोषामृततृप्तानां यत् सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ १९४ ॥

किञ्च, तेनाधीतं, श्रुतन्तेन, तेन सर्वमनुष्ठितम् ।
येनाशाः पृष्ठतः कृत्वा नैराश्यमवलम्बितम् ॥ १९५ ॥

अपिच, असेवितेश्वरद्वारमदृष्टविरहव्यथम् ।
अनुक्तक्लीववचनं धन्यं कस्यापि जीवनम् ॥ १९६ ॥

---

सम्पत्तयः स सर्वसम्पदामास्पदम्, उपानद्भ्यां गूढौ आच्छादितौ पादौ यस्य तस्य चर्मपादुकावृतचरणस्य भूः पृथ्वी ननु निश्चितं चर्मावृतेव चर्मणा आच्छादितेव प्रतीयते इत्यर्थः । सन्तुष्टचित्तस्याप्रीतिकरमपि प्रीतिकरमिव प्रतिभातीति भावः ।

(१९४) सन्तोषामृतेति । सन्तोषः अमृतमिवेति सन्तोषामृतं तेन तृप्ताः तेषां सन्तोषसद्भावात् प्रसन्नचित्तानां शान्तम् अक्षुब्धं चेतः चित्तं येषां तेषां स्थिरधियां यत् सुखं भवतीति शेषः इतश्चेतश्च समन्तात् धावतां भ्रमतां धनलुब्धानां धनाकाङ्क्षिणां तत् तादृशं सुखं कुतः ? न कुतोऽपि सम्भवेदित्यर्थः ।

(१९५) तेनेति । येन जनेन आशाः विषयभोगवासनाः पृष्ठतः पश्चात् कृत्वा परित्यज्येत्यर्थः नैराश्यं वीतस्पृहत्वम् अवलम्बितम् आश्रितं तेन जनेन अधीतं शास्त्रं पठितं तेन श्रुतं नीतिशास्त्रमाकर्णितं तेन सर्वम् अनुष्ठितं कृतम् । स एव हि प्रकृतो विद्वान् नीतिज्ञश्चेत्यर्थः ।

(१९६) असेवितेति । असेवितम् अनुपासितम् ईश्वरस्य धनशालिनः द्वारं यस्मिन् तत्, अदृष्टा अप्राप्ता विरहस्य पुत्रादिवियोगजनितस्य दुःखस्य व्यथा क्लेशः यस्मिन् तत्, अनुक्तम् अकथितं क्लीवं व्यर्थं वचनं यस्मिन् तत्, कस्यापि जनस्य जीवनं धन्यं सफलम् । ईदृग्जीवनवन्तः एव पुरुषाः सफलजन्मान इत्यर्थः ।

यतः, न योजनशतं दूरं वाह्यमानस्य तृष्णया ।
सन्तुष्टस्य करप्राप्तेऽप्यर्थे भवति नादरः ॥१८७॥

तदत्रावस्थोचितकार्य्यपरिच्छेदः (घ) श्रेयान् । उक्तञ्च,
को धर्म्मो ? भूतदया, किं सौख्यम् ? अरोगिता जगति जन्तोः।
कः स्नेहः ? सद्भावः, किं पाण्डित्यं ? परिच्छेदः ॥ १८८ ॥

तथा च, परिच्छेदो हि पाण्डित्यं यदापन्ना विपत्तयः ।
अपरिच्छेदकर्तॄणां विपदः स्युः पदे पदे ॥१८९॥

---

(१८७) नेति । तृष्णया धनलिप्सया वाह्यमानस्य नीयमानस्य जनस्य योजनानां शतं योजनशतं बहुदूरमपीत्यर्थः, न दूरं दूरत्वेन परिगणितम् । सन्तुष्टस्य वीतस्पृहस्येत्यर्थः अर्थे धने करप्राप्ते हस्तगते आदरः यत्नः न भवतीति शेषः ।

(घ) अवस्थोचितकार्य्यपरिच्छेदः—अवस्थायाः उचितं युक्तं कार्य्यं तस्य परिच्छेदः निर्णयः, अवस्थानुरूपकर्त्तव्यावधारणम् ।

(१८८) क इति । जगति भूतले जन्तोः मानवस्य धर्मः कः कीदृशः ? भूतेषु दया भूतदया प्राणिषु अनुकम्पा एव धर्मः । सौख्यं सुखित्वं किम् ? अरोगिता नीरुजत्वम् एव सौख्यम् । स्नेहः प्रणयः कः ? सद्भावः उपचिकीर्षादिः पाण्डित्यम् अभिज्ञत्वं किं परिच्छेदः कर्त्तव्याकर्त्तव्यावधारणम् ।

(१८९) परिच्छेद इति । परिच्छेदः हि कार्य्यनिर्णय एव पाण्डित्यं विद्यावत्ता यत् यतः परिच्छेदात् विपत्तयः आपदः आपन्नाः नष्टा भवन्तीति शेषः। अपरिच्छेदकर्तॄणां कार्य्यनिर्णायकबुद्धिरहितानामविवेकिनामित्यर्थः पदे पदे प्रतिपदम् अनुक्षणमिति यावत् विपदः स्युः भवेयुः । अविवेकिनः पदे पदे विपदमाप्नुयुरित्यर्थः ।

तथाहि, त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
　ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ २०० ॥
अपरञ्च, पानीयं वा निरायासं स्वाद्वन्नं वा भयोत्तरम् ।
　विचार्य्य खलु पश्यामि तत् सुखं यत्र निर्वृतिः ॥ २०१ ॥
इत्यालोच्याहं (ङ) निर्जनवनमागतः ।　　यतः,
　वरं वनं व्याघ्रगजेन्द्रसेवितं
　द्रुमालयः पक्वफलाम्बुभक्षणम् ।
　तृणानि शय्या परिधानवल्कलं
　न बन्धुमध्ये धनहीनजीवनम् ॥ २०२ ॥

---

(२००) त्यजेदिति । कुलस्यार्थे कुलमर्य्यादारक्षार्थम् एकं पुत्रादिकम् आत्मीयं त्यजेत्, उत्सृजेत् ग्रामस्यार्थे स्वग्रामवासिनामुपकाराय कुलं सर्वानेव स्वपरिवारान् त्यजेत्, जनपदस्य राज्यस्य अर्थे निमित्ते राज्यरक्षार्थं ग्रामं त्यजेत्, आत्मार्थे आत्मरक्षार्थं पृथिवीं त्यजेत् । आत्मानं सततं रक्षेदिति भावः ।

(२०१) पानीयमिति । निरायासम् अनायासलब्धं पानीयं जलं, भयोत्तरं सभयं स्वादु सुरसवत् अन्नं भक्ष्यं वस्तु वा विचार्य्य उभयोरन्तरं विविच्य यत्र निर्वृतिः यस्मिन् वस्तुनि चित्तस्य शान्तिः तत् सुखं सुखकरं, पराधीनस्य स्वादुनोऽन्नात् स्वाधीनस्य पानीयमपि सुखाय भवतीत्यर्थः ।

(ङ) निर्जनवनम्—मानवसमागमरहितमरण्यम् ।

(२०२) वरमिति । व्याघ्राश्च गजेन्द्रा द्विपेन्द्राश्च तैः सेवितम् अधिष्ठितं हिंस्रप्राणिसङ्कुलमित्यर्थः, तथा द्रुमाणां वृक्षाणाम् आलयः वृक्षपूर्वो निवासः पक्वानि परिणतानि फलानि अम्बु च तेषां भक्षणं यस्मिन् तत्, तथा यत्र तृणानि शाखाः शय्या वल्कलं परिधानं

(च) ततोऽस्मत्पुण्योदयादनेन मित्रेणाहं त्वं ह्यानुगृह्या-नुगृहीतः । अधुना च पुण्यपरम्परया भवदाश्रयः स्वर्ग एव मया प्राप्तः ।

यतः, संसारविषवृक्षस्य द्वे एव मधुरे फले ।

काव्यामृतरसास्वादः सङ्गमः सज्जनैः सह ॥ २०३ ॥

अपरञ्च, सङ्गमः केशवे भक्तिर्गङ्गाम्भसि निमज्जनम् ।

असारे खलु संसारे त्रीणि साराणि भावयेत् ॥ २०४ ॥

मन्थर उवाच,

"अर्थाः पादरजोपमा गिरिनदीवेगोपमं यौवनं

आयुष्यं जलविन्दुलोलचपल फेनोपमं जीवनम् ।

धर्म्मं यो न करोति निश्चलमतिः स्वर्गार्गलोद्घाटनं

पश्चात्तापहतो जरापरिणतः शोकाग्निना दह्यते ॥२०५।

---

वरं तादृशं वनं वरं सुखं बन्धुमध्ये बान्धववेष्टिते नगरेऽपीत्यर्थः धन-हीनजीवनं सम्पत्तिहीनस्यस्थानं न वरमिति शेषः ।

(च) पुण्योदयात्—पुण्यबलेन ।

(२०३) संसारेति । संसारः एव विषवृक्षः तस्य क्लेशवहुलस्य संसारस्येत्यर्थः द्वे मधुरे स्वादुनी फले । के द्वे इत्याह, काव्यमेवामृतं तस्य रसः शृङ्गारादिनवसंख्यकः तस्य स्वादः अनुभूतिः तथा सज्जनैः साधुभिः सह सङ्गमः मिलनञ्च ।

(२०४) सङ्गम इति । खलु निश्चितम् असारे क्षणभङ्गुरे संसारे इह जन्मनि सङ्गमः साधुसंसर्गः केशवे नारायणे भक्तिः आराधना गङ्गाम्भसि गङ्गोदके स्नानम् इति त्रीणि साराणि स्थायीनि भावयेत् चिन्तयेत् ।

(२०५) अर्था इति । अर्थाः पादरजोपमाः पादस्य रजः धूलिः तत् उपमा येषां ते यथैव क्षयं यान्तीत्यर्थः । यौवनं यौवनावस्था

युष्माभिरतिसञ्चयः कृतः, तस्यायं दोषः ।

शृणु, उपार्जितानां वित्तानां त्याग एव हि रक्षणम् ।
तड़ागोदरसंस्थानां परीवाह इवाम्भसाम् ॥ २०६ ॥

अन्यच्च, यदधोऽधः क्षितौ वित्तं निचखान मितम्पचः ।
तदधो निलयं गन्तुं चक्रे पन्थानमग्रतः ॥ २०७ ॥

यतः, निजसौख्यं निरुन्धानो यो धनार्जनमिच्छति ।
परार्थं भारवाहीव क्लेशस्यैव हि भाजनम् ॥२०८॥

---

गिरिनद्याः निर्झरिण्याः वेगः स्रोतः स उपमा यस्य तत् केवलं व्यय-मेव याति न तु वर्द्धते । मानुष्यं मनुष्यता जलबिन्दुवत् वारिबिम्बवत् लोलचपलम् अतिशयचपलं जीवनम् आयुः फेनोपमं फेनसदृशम् । अतः यो जनः निश्चलमतिः स्थिरबुद्धिः सन् स्वर्गार्गलोद्घाटनं स्वर्ग-द्वारप्रवेशकं धर्मं न करोति अनुतिष्ठति स जनः जरापरिणतः जरया-शिथिलीकृताङ्गः तथा पश्चात्तापहतः अनुतापाक्रान्तचित्तः सन् शोका-ग्निना शोकदहनेन दह्यते अन्तर्ज्वाल्यते ।

(२०६) उपार्जितानामिति । उपार्जितानां लब्धानां वित्तानां त्यागः सत्पात्रे विनियोगः एव रक्षणं, क इव तड़ागोदरसंस्थानां सरो-वरमध्यस्थितानाम् अम्भसां जलानां परीवाहः जलोच्छ्वास इव । यथा गभीरसरोवरनिहितस्य जलस्य उच्छ्वासेन विपुलता दृश्यते तद्वत् सत्पात्रनिहितस्यापि धनस्य रक्षणमिति भावः ।

(२०७) यदिति । मितं परिमितं पचतीति मितम्पचः आत्मम्भरिः कृपण इत्यर्थः क्षितौ भूतले अधोऽधः अतीव भूमेरधस्तात् यत् वित्तं धनं निचखान निहितवान् तत् धनम् अग्रतः प्रथममेव अधोनिलयं गन्तुम् अध एव विलीनं भवितुं पन्थानं चक्रे तदध एव विलीनं सत् न कस्याप्युपकाराय भवतीत्यर्थः ।

(२०८) निजेति । यो जनः निजस्य सौख्यं निजसौख्यं स्वकीयं

तथा चोक्तम्,

दानोपभोगहीनेन धनेन धनिनो यदि ।
पृथ्वीखातनिखातेन धनेन धनिनो वयम् ॥ २०९ ॥

दानभोगविहीनाश्च दिवसा यान्ति यस्य वै ।
स कर्मकारभस्त्रेव श्वसन्नपि न जीवति ॥ २१० ॥

धनेन किं ? यन्न ददाति नाश्नुते,
बलेन किं ? यन्न रिपून् न बाधते ।
श्रुतेन किं ? यन्न च धर्ममाचरेत्
किमात्मना ? यो न जितेन्द्रियो भवेत् ॥ २११ ॥

---

सुखजातं निरुन्धानः निरुन्धन् आत्मानं क्लेशयित्वेत्यर्थः धनार्जनं धनसञ्चयम् इच्छति अभिलषति स परार्थं परनिमित्तं भारवाही भारोद्वहनशीलः वृषभः इव क्लेशस्यैव न तूपभोगस्येति भावः, भाजनम् आस्पदं भवतीति शेषः ।

(२०९) दानेति । यदि नराः दानोपभोगहीनेन धनेन अर्थेन धनिनो भवन्ति तदा पृथ्वीखातनिखातेन भूगर्भस्थितेन धनेन अपिरत्नादिना वयं धनिनः धनवन्तः ।

(२१०) दानेति । यस्य जनस्य दिवसाः दिनानि दानेन वितरणेन उपभोगेन भक्ष्यविलासव्ययेन च हीनाः वर्जिताः यान्ति गच्छन्ति सः कर्मकारस्य भस्त्रा वायुपूरणयन्त्रविशेष इव श्वसन् निश्वसन् अपि न जीवति जीवन्मृत इवेत्यर्थः ।

(२११) धनेनेति । यत् धनं न ददाति सत्पात्रे प्रतिपादयति न च अश्नुते उपभुनक्ति तादृशेन धनेन किम् ? किं फलम् । यत् बलम् रिपून् शत्रून् न बाधते पराजयते तेन बलेन विक्रमेण किम् ? यत् श्रुतं शास्त्रज्ञानं धर्मं न आचरेत् अनुतिष्ठेत् तेन श्रुतेन किम् ? य आत्मा न जितेन्द्रियः भवेत् तेन आत्मना वा किम् ? किं प्रयोजनमित्यर्थः ।

अन्यच्च, असम्भोगेन सामान्यं कृपणस्य धनं परैः।
अस्येदमिति सम्बन्धो हानौ दुःखेन गम्यते ॥२१२॥

अपि च, न देवाय न विप्राय न बन्धुभ्यो न चात्मने।
कृपणस्य धनं याति वह्नितस्करपार्थिवैः ॥२१३॥

अन्यच्च, दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥११४॥

तथा चोक्तम्,
दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम्।
त्यागसहितं च वित्तं दुर्लभमेतच्चतुर्भद्रम् ॥२१५॥

---

(२१२) असम्भोगेति। कृपणस्य व्ययकुण्ठस्य धनम् असम्भोगेन उपभोगविरहेण अनुपभुक्तत्वादित्यर्थः परैः धनस्वामिभिन्नैः पुरुषैः सामान्यं समम् उभयोरपि भोगाभावादिति भावः। हानौ चौरादिभिरपहरणे सति दुःखेन कृपणस्य धनस्वामिनः क्लेशेन अस्य इदं धनं कृपणस्वामिकमिदमिति गम्यते ज्ञायते नान्यथेत्यर्थः।

(२१३) नेति। कृपणस्य उचितव्ययकुण्ठस्य धनं देवाय देवप्रीत्यर्थं यागाद्यनुष्ठानाय न, विप्राय ब्राह्मणाय न, बन्धुभ्यो बन्धूनामुपकारार्थं न, आत्मने आत्मनः भोज्यविलासार्थञ्च न याति व्ययितं भवति अपि तु वह्नितस्करपार्थिवैः अग्निचोरनृपैः सह याति तैर्नीयते इत्यर्थः।

(२१४) दानमिति। वित्तस्य धनस्य दानं सत्पात्रे वितरणं, भोगः, भोज्यविलासद्रव्यक्रयेण उपभोगः, नाशः क्षयः चौर्य्यादिभिरिति यावत्, इति तिस्रः गतयः अवस्थाः भवन्ति। यः न ददाति वितरति न च भुङ्क्ते उपभुनक्ति तस्य तृतीया नाशरूपा गतिर्दशा भवति।

(२१५) दानमिति। प्रियवाक्सहितं मधुरवाक्ययुक्तं दानं वितरणम्, अगर्वम् अहङ्काररहितं ज्ञानं पाण्डित्यं, क्षमान्वितं सहिष्णुता-

उक्तञ्च, कर्त्तव्यः सञ्चयो नित्यं कर्त्तव्यो नातिसञ्चयः।
पश्य सञ्चयशीलोऽसौ धनुषा जम्बुको हतः" ॥२१६॥

हिरण्यकोऽब्रवीत्, कथमेतत्? मन्थरः कथयति। आसीत् (ङ) कल्याणकटकवास्तव्यो भैरवो नाम व्याधः। स चैकदा मांसलुब्धः धनुरादाय विन्ध्याटवीमध्यं गतः। तत्र तेन मृग एको व्यापादितः। मृगमादाय गच्छता तेन (ज) घोराकृतिः शूकरो दृष्टः। ततस्तेन मृगं भूमौ निधाय शूकरः शरेण हतः। शूकरेणाप्यागत्य (झ) प्रलयघनघोरगर्जनं कुर्वाणेन स व्याधो मुष्कदेशे हतश्छिन्नद्रुम (ञ) इव पपात।

---

सहितं शौर्यं शूरता, त्यागसहितं सत्पात्रविनियोगयुक्तं वित्तं धनं, एतत् पूर्वोक्तं चतुर्णां भद्राणां मङ्गलानां समाहारः चतुर्भद्रं दुःदुःखेन लभ्यते यत् तद्दुर्लभं दुष्प्रापं, कदाचित् कुत्रचित् दृश्यते इति भावः।

(२१६) कर्तव्य इति। नित्यं प्रत्यहं सञ्चयः धनसंग्रहः कर्तव्यः विधेयः, अतिसञ्चयः आत्मानं क्लेशयित्वापि सञ्चयः इत्यर्थः न कर्तव्यः। असौ सञ्चयशीलः अतिसञ्चयं कुर्वाणः जम्बूकः शृगालः धनुषा हतः नाशितं पश्य जानीहि।

(ङ) कल्याणकटकवास्तव्यः—कल्याणकटकं तदाख्यं स्थानं वास्तव्यं वसतिः यस्य सः, कल्याणकटकवासीत्यर्थः।

(ज) घोराकृतिः—घोरा भीषणा आकृतिराकारो यस्य सः, दृढकायः।

(झ) प्रलयघनघोरगर्जनम्—प्रलये प्रलयकाले यो घनः मेघः तद्वत् घोरं भयङ्करं गर्जनं नादम्।

(ञ) छिन्नद्रुम इव—उन्मूलितवृक्ष इवेत्यर्थः।

यतः, जलमग्निर्विषं शस्त्रं क्षुद्व्याधिः पतनं गिरेः।
निमित्तं किञ्चिदासाद्य देही प्राणैर्विमुच्यते॥ २१७॥

अथ तयोः पादास्फालनेन सर्पोऽपि मृतः। अत्रान्तरे दीर्घरावो नाम जम्बूकः परिभ्रमन्नाहारार्थी तान् मृतान् मृगव्याधसर्पशूकरान् अपश्यत्। आलोक्याचिन्तयदसौ "अहो भाग्यं, (ट) महद्भोज्यं समुपस्थितम्।

अथवा, अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम्।
सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते॥ २१८॥

भवतु, एषां मांसैर्मासत्रयं (ठ) समधिकं भोजनं मे भविष्यति।

मासमेकं नरो याति द्वौ मासौ मृगशूकरौ।
अहिरेकं दिनं याति अद्य भक्ष्यो धनुर्गुणः॥ २१९॥

---

(२१७) जलमिति। देही शरीरी जलम् अग्निः विषं शस्त्रं क्षुत् क्षुधा अन्नाभावः दुर्भिक्षमित्यर्थः, व्याधिः रोगः गिरेः पतनम् उच्चस्थानात् पतनं किञ्चित् एतेषां किमपि निमित्तं मरणहेतुमासाद्य प्राप्य प्राणैर्विमुच्यते वियुज्यते म्रियते इत्यर्थः।

(ट) महत् भोज्यम्—प्रचुरं भोज्यम्।

(२१८) अचिन्तितानीति। यथा येन प्रकारेण देहिनां शरीरिणाम् अचिन्तितानि अभावनीयानि दुःखानि आयान्ति उपतिष्ठन्ति तथा सुखानि अपि आयान्तीति शेषः। अत्र विषये दैवं विधिः अतिरिच्यते प्रबलं भवति।

(ठ) समधिकम्—अत्यधिकं प्रचुरमिति यावत्।

(२१९) मासमिति। नरः व्याधः एकं मासं व्याप्य याति भक्ष्यतां गच्छति, मृगशूकरौ द्वौ मासौ, अहिः सर्पः एकं दिनं व्याप्य

ततः (ड) प्रथमबुभुक्षायामिदं निःस्वादु (ढ) कोदण्डाटनीलग्नं स्नायुबन्धनं खादामि।" इत्युक्त्वा तथा अकरोत्। ततश्छिन्ने (ण) स्नायुबन्धने द्रुतम् उत्पतितेन धनुषा हृदि (त) भिन्नः स दीर्घरावः पञ्चत्वं गतः। अतोऽहं ब्रवीमि कर्त्तव्यः, सञ्चयो नित्यम् इत्यादि।

तथाच, यद् ददाति यदश्नाति तदेव धनिनो धनम्।
अन्ये मृतस्य क्रीड़न्ति दारैरपि धनैरपि॥ २२०॥

किञ्च, यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने।
तत्ते वित्तमहं मन्ये शेषं कस्यापि रक्षसि॥२२१

---

याति भक्ष्यत्वं प्राप्नोति, अद्य अस्मिन्नहनि धनुर्गुणः धनुषो मौर्वी भक्ष्यः भक्षणीयः। सञ्चयी नावसीदतीति भावः।

(ड) प्रथमबुभुक्षायाम्—प्रथमक्षुधाया उद्रेके।

(ढ) कोदण्डाटनीलग्नं—धनुष्कोटीस्थितम्।

(ण) स्नायुबन्धने—स्नायुभिः देहान्तर्वर्त्तिनाड़ीविशेषैः बन्धनं ग्रन्थिः तस्मिन्।

(त) भिन्नः—विदारितः।

(२२०) यदिति। यत् धनं ददाति वितरति यत् अश्नाति भुङ्क्ते तदेव धनिनः धनस्वामिनः धनं वित्तम्, अन्ये जनाः मृतस्य धनिनः दारैरपि धनैर्वित्तैरपि क्रीड़न्ति, कृपणा धनिनः धनं सञ्चित्य अनुपभुज्य च म्रियन्ते अपरे तद्धनदारान् उपभुञ्जते इत्यर्थः।

(२२१) यदिति। यत् धनं विशिष्टेभ्यः सत्पात्रेभ्यः ददासि यच्छसि, यच्च दिने दिने प्रतिदिनम् अश्नासि उपभोगादिना व्ययं करोषि, तत् वित्तं ते तव अहं मन्ये जानामि, रक्षसि सञ्चिनोषि यदिति शेषः तत् कस्यापि त्वदन्ते अन्यस्य कस्यापि शेषं सेवनीयं भविष्यतीति शेषः।

तदिदानीं यातु किमतिक्रान्तोपवर्णनेन (ख) ।

यतः, नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्स्वपि न मुह्यन्ति नराः पण्डितबुद्धयः ॥२२२॥

तत् सखे ! सर्वदा त्वया सोत्साहेन भवितव्यम् ।

यतः, शास्त्राण्यधीत्यापि भवन्ति मूर्खा
यस्तु क्रियावान् पुरुषः स विद्वान् ।
सुचिन्तितं चौषधमातुराणां
न नाममात्रेण करोत्यरोगम् ॥ २२३ ॥

अन्यच्च,

न स्वल्पमप्यध्यवसायभीरोः करोति विज्ञानविधिर्गुणं हि ।

---

(ख) अतिक्रान्तोपवर्णनेन—अतिक्रान्तस्य अतीतस्य उपवर्णनं प्रस्तावक्रमेण कथनं तेन ।

(२२२) नेति । पण्डितबुद्धयः पण्डितसदृशाः विवेकधीसम्पन्ना इत्यर्थः नराः मनुष्याः अप्राप्यं दुर्लभं वस्तु न अभिवाञ्छन्ति प्रार्थयन्ते नष्टं अपगतं च शोचितुं तदर्थं शोकं कर्तुम् न इच्छन्ति अभिलषन्ति आपत्स्वपि आपत्कालेषु अपि न मुह्यन्ति मोहमाप्नुवन्ति ।

(२२३) शास्त्राणीति । शास्त्राणि वेदादीनि अधीत्यापि श्रुतशीला अपि मूर्खाः विवेकहीनाः अनुष्ठानरहिता इति भावः, भवन्ति । यस्तु पुरुषः क्रियावान् शास्त्राणि अनुसृत्य यागश्राद्धादीनामनुष्ठानवान् स एव विद्वान् पण्डितः । अनुष्ठानं विना धर्मशास्त्रपाठमात्रं न मूर्खत्वपरिहारहेतुरित्यर्थः । सुचिन्तितम् अविचारितं रोगानुगुणमिति यावत् अपि औषधं भेषजं नाममात्रेण नामोल्लेखमात्रेण न आतुराणां रोगिणाम् अरोगं रोगशान्तिं करोति ।

अन्धस्य किं हस्ततलस्थितोऽपि प्रकाशयत्यर्थमिह प्रदीपः २२४

तदत्र सखे ! (द) दशातिशेषेण शान्तिः करणीया ।

सुखमापतितं सेवेत् दुःखमापतितं तथा ।

चक्रवत् परिवर्त्तन्ते दुःखानि च सुखानि च ॥२२५॥

अपरञ्च, निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः ।

सोद्योगं नरमायान्ति, विवशाः सर्वसम्पदः ॥२२६

अपिच, उत्साहसम्पन्नमदीर्घसूत्रं

क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।

---

(२२४) नेति । विज्ञानविधिः विज्ञामशास्त्रम् अध्यवसाये शास्त्रार्थालोचने भीरोः पराङ्मुखस्य निरुद्योगिन इत्यर्थः स्वल्पमपि स्तोकमपि न गुणम् उपकारं करोति । इह भूतले हस्ततलस्थितोऽपि करतलगतोऽपि प्रदीपः वर्तिका अन्धस्य सम्बन्धे किं प्रकाशयति उद्दीपयति न किमपीत्यर्थः ।

(द) दशातिशेषेण—दशायाः अवस्थायाः अतिशेषः अतिक्रमणं तेन, अवस्थायाः परिवर्तनशीलतां विविच्येत्यर्थः ।

(२२५) सुखमिति । आपतितम् उपस्थितं सुखं सेवेत् सेवेत (भक्ताकर्विधिमयत्वात् परस्मैपदं ) तथा आपतितम् उपस्थितं दुःखञ्च सेवेत् यथागतं सुखदुःखमनुभवेदित्यर्थः । दुःखानि सुखानि च चक्रवत् चक्राःशीय परिवर्तन्ते भ्राम्यन्ति ।

(२२६) निपानमिति । सर्वसम्पदः सर्वाः सम्पत्तयः विवशाः गुणानुरागेण वशीभूताः सन्तः मण्डूकाः भेकाः निपानं कूपमिव अण्डजाः पक्षिणः पूर्णं प्रभूतजलं सर इव सोद्योगम् उद्योगिनं नरं पुरुषम् आयान्ति आश्रयन्ति ।

शूरं कृतज्ञं दृढसौहृदञ्च
लक्ष्मीः स्वयं याति निवासहेतोः ॥ २२७ ॥

विशेषतश्च, विनाप्यर्थैर्धीरः स्पृशति बहुमानोन्नतिपदं,
समायुक्तोऽप्यर्थैः परिभवपदं याति कृपणः ।
स्वभावादुद्भूतां गुणसमुदयावाप्तिविषयां
द्युतिं सैंहीं किं श्वा धृतकनकमालोऽपि लभते ? ॥२२८॥

किञ्च,

धनवानिति हि मदस्ते किं गतविभवो विषादमुपयासि ? ।
करनिहितकन्दुकसमाः पातोत्पाता मनुष्याणाम् ॥ २२९ ॥

---

(२२७) उत्साहेति । लक्ष्मीः सम्पदधिष्ठात्री देवी निवासहेतोः अवस्थानार्थम् उत्साहसम्पन्नम् उद्योगिनम् अदीर्घसूत्रं यथागतं कार्य्यं प्रवर्त्तमानं चिरक्रियतारहितमिति यावत्, क्रियाविधिज्ञम् अनुष्ठान-नियमविदं व्यसनेषु द्यूतपानादिषु असक्तम् अनासक्तं शूरं साहसिकं कृतज्ञं पूर्व्वोपकारिणं प्रति उपकुर्वन्तं दृढसौहृदम् अकृत्रिमप्रणय-शालिनं जनं स्वयम् आत्मनैव याति आश्रयति ।

(२२८) विनेति । धीरः पण्डितो जनः अर्थैर्विनापि धनं विनापि बहुमानोन्नतिपदं बहुसम्मानोच्चपदं स्पृशति लभते धनहीनोऽपि माननीयः उन्नतश्च भवतीत्यर्थः । कृपणः अर्थैः धनैः समायुक्तः धन-वानपि परिभवपदं निन्दास्पदत्वं याति प्राप्नोति । श्वा कुक्कुरः धृत-कनकमालः सुवर्णमालया विभूषितोऽपि स्वभावात् निसर्गतः उद्भूतां प्रकाशमानां गुणसमुदयावाप्तिविषयां समग्रगुणप्राप्तिसूचिकां सैंहीं सिंहसम्बन्धिनीं द्युतिं किं लभते अधिगच्छति ।

(२२९) धनवानिति । धनवान् धनशाली इति ते तव को मदः

अपरञ्च, अभ्रच्छाया, खलप्रीतिर्नवशस्यानि, योषितः ।
किञ्चित्कालोपभोग्यानि यौवनानि धनानि च ॥२३०॥

अन्यच्च, वृत्त्यर्थं नातिचेष्टेत सा हि धात्रैव निर्मिता ।
गर्भादुत्पतिते जन्तौ मातुः प्रस्रवतः स्तनौ ॥ २३१ ॥

सखे ! शृणु, येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः ।
मयूराश्चित्रिता येन स ते वृत्तिं विधास्यति ॥२३२॥

अपरञ्च सतां रहस्यं शृणु, मित्र !

---

गर्वः गतविभवः निर्धनः सन् किं विषादं दुःखम् उपयासि प्राप्नोषि । मनुष्याणां पातोत्पाताः उन्नत्यवनतयः करनिहित कन्दुकसमाः हस्तस्थितक्रीडनकसदृशाः । यथा करस्थितकन्दुकः ऊर्द्धमुत्पतति अधः पतति च तथैव नरा उन्नतिमवनतिञ्च लभन्ते इत्यर्थः । अतो दुःखं माकार्षीरिति भावः ।

(२३०) अभ्रेति । खलप्रीतिः खलेन सह प्रणयः अभ्रच्छाया मेघच्छाया नव शस्यानि माषमुद्गकलायादीनि योषितः स्त्रियः यौवनानि धनानि किञ्चित्कालोपभोग्यानि अल्पक्षणमुपभोक्तुं योग्यानि न चिरभोग्यानीत्यर्थः ।

(२३१) वृत्त्यर्थमिति । वृत्त्यर्थं जीविकानिर्वर्तनार्थं न अतिचेष्टेत अत्यर्थं यत्नं न कुर्वीत, सा हि वृत्तिः धात्रैव स्रष्ट्रैव निर्मिता निर्द्धारिता । तथाहि गर्भात् उत्पतिते उत्पन्ने जन्तौ विषये मातुः जनन्याः स्तनौ प्रस्रवतः क्षरतः ।

(२३२) येनेति । येन विधात्रा हंसाः शुक्लीकृताः शुभ्रवर्णाः कृताः शुकाश्च हरितीकृताः हरिद्वर्णाः कृताः । येन च विधात्रा मयूराः शिखण्डिनः चित्रिताः विचित्रवर्णाः कृताः स विधाता ते तव वृत्तिं जीविकां विधास्यति योजयिष्यति ।

(ध) सतां रहस्यं—साधूनां गूढमन्त्रणा ।

जनयन्त्यर्जने दुःखं तापयन्ति विपत्तिषु ।
मोहयन्ति च सम्पत्तौ कथमर्थाः सुखावहाः ? ॥२२३॥

अपरञ्च, धर्म्मार्थं यस्य वित्तेहा वरं तस्य निरीहता ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ २२४ ॥

यतः, यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि ।
भक्ष्यते सलिले मत्स्यैस्तथा सर्वत्र वित्तवान् ॥२२५॥

अन्यच्च, राजतः सलिलादग्नेश्चौरतः स्वजनादपि ।
भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ २२६ ॥

---

(२२३) जनयन्तीति । अर्जने उपार्जने दुःखं क्लेशं जनयन्ति उत्पादयन्ति विपत्तिषु नाशेषु चौर्य्यादिषु इति यावत् तापयन्ति क्लिश्नन्ति सम्पत्तौ सञ्चये च मोहयन्ति मोहं जनयन्ति मादयन्तीति यावत् अर्थाः धनानि कथं सुखावहाः सुखकराः अपि तु सर्वथा दुःखावहा एवेत्यर्थः ।

(२२४) धर्मार्थमिति । धर्मार्थं धर्मकर्मसम्पादनार्थं केवलं यागाद्यनुष्ठानार्थं यस्य जनस्य वित्तेहा धनलाभचेष्टा तस्य जनस्य निरीहता निर्नास्ति ईहा चेष्टा यस्य तस्य भावस्तत्ता निश्चेष्टता अर्जनविमुखतेत्यर्थः वरं श्रेयसी । पङ्कस्य प्रक्षालनात् गात्रे विलिप्य क्षालनात् दूरादस्पर्शनं वरं श्रेयः ।

(२२५) यथेति । यथा पक्षिभिः खगैः आकाशे गगने श्वापदैः व्याघ्रादिभिः हिंस्रैः भुवि भूतले तथा मत्स्यैर्मीनैः सलिले जले आमिषं लक्ष्यं भक्ष्यते तथा सर्वत्र सर्वस्मिन् स्थाने वित्तवान् धनवान् जनः प्रतारकैरिति शेषः धनवान् सर्वत्र सर्वेषामेव दस्युतस्करादीनामामिषमिति भावः ।

(२२६) राजत इति । प्राणभृतां प्राणिनां मृत्योरिव मरणादिव

तथाहि,

जन्मनि क्लेशबहुले किन्नु दुःखमतः परम्।
इच्छासम्पद् यतो नास्ति यच्चेच्छा न निवर्त्तते ॥२२७॥

अन्यच्च भ्रातः! शृणु,

धनं तावदसुलभं लब्धं कृच्छ्रेण पाल्यते।
लब्धनाशो यथा मृत्युस्तस्मादेतन्न चिन्तयेत् ॥ २२८ ॥

सा तृष्णा चेत् परित्यक्ता को दरिद्रः? क ईश्वरः?
तस्याश्चेत् प्रसरो दत्तो दास्यञ्च शिरसि स्थितम् ॥ २२९ ॥

---

अर्थवतां धनशालिनां जनानां राजतः भूपतेः सलिलात् जलात् अग्नेः वह्नेः चौरतः तस्करात् स्वजनात् आत्मीयादपि भयं विद्यते इति शेषः।

(२२७) जन्मनीति। क्लेशबहुले विपत्क्लेशावहे जन्मनि शरीरग्रहणे तु भोः अतःपरम् अस्मादधिकं किं दुःखं क्लेशः यत्र यस्मिन् जन्मनि इच्छासम्पत् इच्छाधीना सम्पत्तिः आशानुरूपमैश्वर्य्यं नास्ति न विद्यते यत्र च इच्छा पूर्णा सतीत्यर्थः न निवर्त्तते न विरमति।

(२२८) धनमिति। प्रथमतः तावत् धनम् असुलभं दुर्लभं द्वितीयतः लब्धम् उपार्जितं सत् कृच्छ्रेण क्लेशेन आयासेनेति यावत् पाल्यते चौरादिभ्यो रक्ष्यते लोकैरिति शेषः। यथा मृत्युः मृत्युरिव लब्धस्य नाशः अपचयः अवश्यं भवितेति शेषः तस्मात् नियतनाशत्वात् एतत् धनं न चिन्तयेत् न भावयेत् तदर्थं न क्लिश्येदित्यर्थः।

(२२९) सेति। सा तृष्णा धनलालसा परित्यक्ता सन्त्यक्ता चेत् यदि तदा दरिद्रः अकिञ्चनः कः? ईश्वरः प्रभुश्च कः? सञ्जातवैराग्यस्य दारिद्र्यमैश्वर्य्यमुभयमपि सममित्यर्थः। तस्याः तृष्णायाः प्रसरः प्रश्रय-

अपरञ्च, यद् यदैव वाञ्छेत ततो वाञ्छा प्रवर्त्तते ।
　　प्राप्त एवार्थतः सोऽर्थो यतो वाञ्छा निवर्त्तते ॥२४०॥

किं बहुना, विस्रम्भालापैः मयैव सह अत्र कालो (न) नीयताम् ।

यतः, आमरणान्ताः प्रणयाः, कोपास्तत्क्षणभङ्गुराः ।
　　परित्यागाय निःसङ्गा भवन्ति हि महात्मनाम्" ॥२४१॥

इति श्रुत्वा लघुपतनको ब्रूते, (प) धन्योऽसि मन्थर ! सर्वदा (फ) आश्रयणीयोऽसि ।

---

कायः दत्तश्चेत् यदि तदा दास्यं दासत्वं शिरसि मस्तके ललाटे इत्यर्थः स्थितं स्थिरं लिखितमिति, लुब्धस्य दासत्वं नियतमेवेत्यर्थः ।

(२४०) यदिति । यदा यस्मिन् काले यत् वस्तु वाञ्छेत अभिलषेत् ततः तस्मिन् वस्तुनि वाञ्छा आशा प्रवर्त्तते प्रसरति । यतश्च वस्तुनो वाञ्छा निवर्त्तते निवृत्ता विरतेति यावत् । सः अर्थः वाञ्छनीयं वस्तु अर्थतः उपायान्तरेणेत्यर्थः प्राप्त एव अन्यथा कथं वाञ्छाया निवृत्तिरिति भावः ।

(न) नीयताम्—अतिवाह्यताम ।

(२४१) आमरणेति । महात्मनाम् उदारचेतसां प्रणयाः सौहार्दानि आमरणान्ताः आमरणं मरणकालपर्य्यन्तम् अन्तः अवधिर्येषां ते मृत्युपर्य्यन्तस्थायिनः कोपाः क्रोधास्तत्क्षणभङ्गुराः उत्पत्त्यनन्तरमेव ध्वंसिनः परित्यागाय वियोगाय निःसङ्गाः सङ्गरहिताः अनुरागमात्रवर्जिताः न तु अनिष्टाचरणहेतुभूता इति भावः भवन्ति वर्त्तन्ते ।

(प) धन्यः—श्लाघ्यः प्रशंसनीयः ।

(फ) आश्रयणीयः—शरण्यः ।

यतः, सन्त एव सतां नित्यमापदुद्धरणक्षमाः ।
गजानां पङ्कमग्नानां गजा एव धुरन्धराः ॥ २४२ ॥

तथाच,
गुणिनि गुणज्ञो रमते नागुणशीलस्य गुणिनि परितोषः ।
अलिरेति वनात् कमलं न हि भेकस्त्वेकवासोऽपि ॥ २४३ ॥

अपरञ्च, श्लाघ्यः स एको भुवि मानवानां
स उत्तमः सत्पुरुषः स धन्यः ।
यस्यार्थिनो वा शरणागता वा
नाशाविभिन्ना विमुखाः प्रयान्ति ॥" २४४ ॥

---

(२४२) सन्त इति । सन्तः साधवः एव सतां साधूनाम् आपदुद्धरणक्षमाः विपत्प्रतीकारसमर्थाः । तथाहि, पङ्कमग्नानां कर्दमनिमग्नानां गजानां करिणां गजा एव धुरं भरतीति धुरन्धराः भारवहनक्षमाः कर्दमात् उद्धर्तुं समर्थाः भवन्तीति शेषः नान्ये इत्यर्थः ।

(२४३) गुणिनीति । गुणज्ञः गुणग्राही जनः गुणिनि गुणवति जने रमते तेन सह आलापादिना परितुष्यति । अगुणशीलस्य निर्गुणस्य गुणिनि न परितोषः प्रीतिर्भवतीति शेषः । अत्रोदाहरणमाह, अलिर्भ्रमरः वनात् दूरादपीति भावः कमलं पद्मम् एति अभियाति तु किन्तु भेकः मण्डूकः एकः एकस्थानं वासो यस्य सः एकस्मिन् जलाशये स्थितोऽपि न हि कमलमेतीत्यन्वयः ।

(२४४) श्लाघ्य इति । यस्य पुरुषस्य अर्थिनः याचकाः वा अथवा शरणागताः आश्रयकाङ्क्षिणो वा नाशाविभिन्नाः आशाभिन्नाः हताशा इति यावत् सन्तः विमुखाः पराङ्मुखाः न प्रयान्ति गच्छन्ति स भुवि भूतले मानवानां मनुष्याणां मध्ये एकः अद्वितीयः अनुपमः

तदेवं ते (व) स्वेच्छाहारविहारं कुर्वाणाः सन्तुष्टाः सुखं निवसन्ति स्म । अथ कदाचिच्चित्राङ्गनामा मृगः केनापि त्रासितस्तत्रागत्य मिलितः । ततः पश्चादायान्तं भयहेतुं सम्भाव्य मन्थरो जलं प्रविष्टो मूषिकश्च विवरं गतः । उड्डीयमानः काको वृक्षाग्रमारूढः । ततो लघुपतनकेन सुदूरं निरूप्य भयहेतुर्न कोऽप्यवलोकितः, पश्चादागत्य पुनः सर्वे मिलित्वोपविष्टाः । मन्थरेणोक्तम्, भद्र ! मृग ! कुशलं ते ? स्वेच्छया उदकाद्याहारोऽनुभूयताम् । अत्राव-स्थानेन वनमिदं (भ) सनाथीक्रियताम् । चित्राङ्गो ब्रूते, (म) "लुब्धकत्रासितोऽहं भवतां शरणमागतः ।

यतः, लोभाद्वाथ भयाद्वापि सन्त्यजेच्छरणागतम् ।
ब्रह्महत्यासमं तस्य पापमाहुर्मनीषिणः ॥ २४५ ॥

---

श्लाघ्यः प्रशंसास्पदं स उत्तमः श्रेष्ठः सत्पुरुषः पुरुषश्रेष्ठः स धन्यः सार्थकजन्मा ।

(व) स्वेच्छाहारविहारम्—आहारश्च विहारश्च आहारविहारं स्वेच्छया आहारविहारं स्वेच्छाहारविहारम् ।

(भ) सनाथीक्रियताम्—असनाथं सनाथं क्रियताम् । अत्रोषित्वा वनमिदमलङ्क्रियतामित्यर्थः ।

(म) लुब्धकत्रासितः—लुब्धकेन व्याधेन त्रासितः भीतिमापादितः ।

(२४५) लोभादिति । यः लोभात् अन्यदत्तधनादीनां प्रलोभनेन अथवा भयात् अन्येभ्यस्त्रासात् शरणागतम् आश्रितं सन्त्यजेत् जह्यात् तस्य जनस्य ब्रह्महत्यासमं ब्रह्मवधसदृशं पापं दुरितं मनीषिणः धीराः आहुः कथयन्ति ।

ततश्च भवद्भिः सह मित्रत्वमिच्छामि। "हिरण्यकोऽवदत्, मित्रत्वं तावदस्माभिः सह अयत्नेन निष्पन्नमेव (य) भवतः।

यतः, औरसं कृतसम्बन्धं तथा वंशक्रमागतम्।
रक्षकं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम्॥ २४६॥

तदत्र (र) स्वगृहनिर्विशेषेण स्थीयताम्। तच्छ्रुत्वा मृगः सानन्दः कृतस्वेच्छाहारः पानीयं पीत्वा (ल) जलासन्नतरुच्छायायामुपविष्टः।

यतः, कूपोदकं वटच्छाया श्यामा स्त्री इष्टकालयम्।
शीतकाले भवेदुष्णमुष्णकाले च शीतलम्॥ २४७॥

अथ मन्थरो ब्रूते, "सखे! मृग! केन त्रासितोऽसि, ?

---

(य) अयत्नेन निष्पन्नं—प्रयासं विनैव जातम्।

(२४६) औरसमिति। औरसं जन्मनैव सिद्धं पुत्रादिकं कृतः सम्पादितः सम्बन्धो येन तत् कृतसम्बन्धं विवाहादिसम्बन्धेन उत्पन्नं तथा वंशक्रमागतं कुलक्रमागतम् एककुलजातत्वेन निष्पन्नं तथा व्यसनेभ्यः विपद्भ्यः रक्षकं परित्रायकञ्च इति चतुर्विधं मित्रं ज्ञेयं स्मृतम्।

(र) स्वगृहनिर्विशेषेण—स्वस्य गृहात् निर्नास्ति विशेषो यस्मिन् कर्मणि तेन स्वगृहे इव स्वच्छन्दमित्यर्थः।

(ल) जलासन्नतरुच्छायायां—जलस्य आसन्नः सन्निहितो यस्तरुः तस्य छाया तस्याम्।

(२४७) कूपोदकमिति। कूपोदकं कूपस्थं जलं श्यामा श्यामात्वलक्षणोपेता स्त्री इष्टकालयम् इष्टकनिर्मितं गृहम् एतत् चतुष्टयं शीतकाले उष्णम् उष्णकाले ग्रीष्मकाले च शीतलं शीतं भवेत्।

अस्मिन् निर्जने वने कदाचित् किं व्याधाः सञ्चरन्ति ?" मृगीणोक्तम् "अस्ति (ब) कलिङ्गविषये रुक्माङ्गदो नाम नृपतिः। स च दिग्विजयक्रमेण आगत्य चन्द्रभागानदीतीरे (ग) समावेशितकटको वर्त्तते। प्रातश्च तेनात्रागत्य कर्पूरसरःसमीपे भवितव्यम्। इति व्याधानां मुखात् (घ) किंवदन्ती श्रूयते। तदत्रापि प्रातरवस्थानं भयहेतुकमित्यालोच्य यथा कार्य्यं तथारभ्यताम्।" तच्छ्रुत्वा कूर्मः सभयमाह, मित्र! जलाशयान्तरं गच्छामि। काकमृगावपि उक्तवन्तौ, "मित्र! एवमस्तु।" हिरण्यको विमृश्याब्रवीत्, "पुनर्जलाशये प्राप्ते मन्थरस्य कुशलम्। स्थले गच्छतोऽस्य (ङ) का विधा ?

यतः, अम्भांसि जलजन्तूनां दुर्गं दुर्गनिवासिनाम्।
　स्वभूमिः श्वापदादीनां राज्ञां सैन्यं परं बलम्॥२४८॥

सखे! लघुपतनक! अनेनोपदेशेन तथा भविष्यति।

---

(ब) कलिङ्गविषये—कलिङ्गदेशे।

(ग) समावेशितकटकः—समावेशितः सन्निवेशितः कटकः येन सः कृतशिविरसन्निवेशः।

(घ) किंवदन्ती—जनश्रुतिः।

(ङ) का विधा—कः प्रकारः।

(२४८) अम्भांसीति। जलजन्तूनाम् अम्भांसि दुर्गनिवासिनां दुर्गं श्वापदादीनां व्याघ्रादीनां स्वभूमिः स्वभरण्यं राज्ञां सैन्यं परं प्रधानं बलम्।

स्वयं वीक्ष्य यथा वध्वाः पीडितं स्तनकुड्मलम् ।
वणिक्पुत्त्रोऽभवद् दुःखी त्वं तथैव भविष्यसि ॥ २४९ ॥

ते ऊचुः, "कथमेतत् ?" हिरण्यकः कथयति, "अस्ति कान्यकुब्जविषये राजा वीरसेनो नाम । तेन वीरपुरनाम्नि नगरे तुङ्गबलो नाम राजपुत्त्रो युवराजः कृतः । स च महाधनस्तरुणः एकदा स्वनगरं भ्राम्यन्नतिप्रौढयौवनां लावण्यवतीं नाम वणिक्पुत्त्रवधूम् आलोकयामास । ततः स्वहर्म्यं गत्वा (ह) स्मराकुलितमतिस्तस्याः कृते दूतीं प्रेषितवान् । यतः,

सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ।

---

(२४९) स्वयमिति । यथा येन प्रकारेण वध्वाः स्वभार्य्यायाः स्तनकुड्मलं कुड्मलवत् पद्मकोरकवत् उन्नतं स्तनं पीडितं मर्द्दितं स्वयं वीक्ष्य दृष्ट्वा वणिक्सुतः दुःखी अभवत् विषादं प्राप त्वं तथैव भविष्यसि विषण्णो भविष्यसीत्यर्थः ।

(ह) स्मराकुलितमतिः—स्मरेण कामेन आकुलिता कलुषिता मतिर्यस्य सः, कामरिपोर्वशं गतः ।

(२५०) सदिति । यावत् वाशत्कालं लीलावतीनां विलासिनीनां भ्रुवौ चापाविव ताभ्यां पूर्वम् आकृष्टा पश्चात् मुक्ताः विसृष्टाः निक्षिप्ता इति यावत् । नेत्रपक्षे आकुञ्चिताः प्रसारिताश्च । श्रवणपथगताः आकर्णाकृष्टाः अन्यत्र आकर्णायताः नीलपक्ष्माणः नीलवर्णकङ्कपत्रसहिताः अन्यत्र नीलाक्षिलोमयुक्ताः धृतिं धैर्य्यं मुष्णन्ति ये ते तथोक्ताः धैर्य्यप्रच्युतिकराः उभयत्रापि समम् । दृष्टयः वाणा इव दृष्टिवाणाः

भ्रूचापाकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते
यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति॥२५०॥

सापि लावण्यवती (ख) तदवलोकनक्षणात् प्रभृति स्मर-शरप्रहारजर्ज्जरितहृदया (ग) तदेकचित्ता अभवत्।
तथा चोक्तम्, असत्यं साहसं माया मात्सर्य्यं चातिलुब्धता।
निर्गुणत्वमशौचत्वं स्त्रीणां दोषाः स्वभावजाः॥२५१॥

अथ दूतीवचनं श्रुत्वा लावण्यवती उवाच, अहं पति-व्रता परपुरुषस्पर्शमात्रमपि न करोमि।

---

दृष्टिपातशराः तीक्ष्णकटाक्षपाता इत्यर्थः हृदि मनसि न पतन्ति पुरुषाणामिति शेषः, तावत् पुरुषः सन्मार्गे सत्पथे आस्ते वर्त्तते तावत् तावत्कालम् इन्द्रियाणां चक्षुरादीनां पञ्चानां प्रभवति जितेन्द्रियो भवतीत्यर्थः। तावत् लज्जां व्रीडां विधत्ते लज्जायुक्तो भवति तावदेव तावत्कालमेव विनयं नम्रताम् अपि समालम्बते धारयति विनीतो भवतीत्यर्थः।

(ख) तदवलोकनक्षणात्—तस्य अवलोकनं दर्शनं तस्य क्षणात् तद्दर्शनमारभ्य तां दृष्ट्वेत्यर्थः।

(ग) स्मरशरप्रहारजर्जरितहृदया—स्मरस्य कन्दर्पस्य शरः वाणः तेन प्रहारः आघातस्तेन जर्जरितं विद्धं हृदयं यस्याः सा, अतीव-मदनपीड़ितेत्यर्थः।

(२५१) असत्यमिति। असत्यं मिथ्याचरणं साहसं प्राणनाशोऽपि सहसा कार्य्यारम्भः असमीक्ष्यकारिता वा माया प्रतारणा कापट्यं वा मात्सर्य्यं परोत्कर्षासहिष्णुता अतिलुब्धता अतिशयिनी लोभपरतन्त्रता निर्गुणत्वं चित्रकर्माद्यनैपुण्यम् अशौचं वहिरन्तर्मालिन्यं स्त्रीणां स्वभावजाः दोषाः।

यतः, सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रजावती ।
सा भार्य्या या पतिप्राणा सा भार्य्या या पतिव्रता ॥२५२॥
कोकिलानां स्वरो रूपं नारीरूपं पतिव्रतम् ।
विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम् ॥२५३॥
अन्यच्च, न सा भार्य्येति वक्तव्या यस्यां भर्त्ता न तुष्यति ।
अग्निसाक्षिकमर्य्यादो भर्त्ता हि शरणं स्त्रियाः ॥२५४॥

ततो यद्यदादिशति मे प्राणेश्वरस्तदेवाहमविचारितं(ख) करोमि ।" दूत्या उक्तम्, "सत्यमेतत् । लावण्यवत्युवाच, सत्यमेवैतत् । ततः सर्व्वमेव लावण्यवत्या यथाभिहितं

---

(२५२) सेति । या भार्य्या स्त्री गृहे गृहकर्म्मणि दक्षा निपुणा सा भार्य्या प्रशस्ता पत्नी, या प्रजावती पुत्रवती सा भार्य्या, या पतिप्राणा पतिरेव प्राणाः जीवनं यस्याः पतिगतजीवना सा भार्य्या, या च पतिव्रता साध्वी सा भार्य्या ।

(२५३) कोकिलानामिति । कोकिलानां पिकानां कृष्णवर्णानामिति भावः स्वरः कण्ठराग एव रूपं सौन्दर्य्यं पतिव्रतं पतिव्रतात्वमेव नारीरूपं, कुरूपाणां कुत्सितरूपवतां विद्या रूपं, तपस्विनां तापसानां सांसारिकेषु भोगेषु वीतस्पृहाणामिति यावत् क्षमा शान्तिरेव रूपम्, एते एतैरेव गुणैः शोभन्ते इत्यर्थः ।

(२५४) नेति । यस्यां भार्य्यायां भर्त्ता पतिर्न तुष्यति सा भार्य्येति न वक्तव्या न भार्य्यात्वेन परिगणनीया, अग्निः साक्षी साक्षात् द्रष्टा यस्याः तादृशी मर्य्यादा परिणयबन्धनं यस्य प्रजापतिनिबद्धः भर्त्ता पतिः स्त्रियाः नार्य्याः शरणं रक्षिता ।

(ख) अविचारितम्—अवितर्क्येत्यर्थः ।

दूत्या गत्वा तुङ्गबलस्याग्रे (ग) निवेदितम्। तच्छ्रुत्वा तुङ्गबलोऽवदत्, (घ) "विषमेषुणा व्यथितहृदयस्तां विना कथमहं जीविष्यामि?" कुट्टिन्याह, स्वामिना आनीय समर्पयितव्येति। स प्राह, "कथमेतच्छक्यम्?" कुट्टिन्याह, उपायः क्रियताम्। तथा चोक्तम्,

उपायेन हि यच्छक्यं, न तच्छक्यं पराक्रमैः।
शृगालेन हतो हस्ती गच्छता पङ्कवर्त्मना ॥ २५५ ॥

राजपुत्रः पृच्छति, कथमेतत्? सा कथयति, "अस्ति ब्रह्मारण्ये कर्पूरतिलको नाम हस्ती। तमवलोक्य सर्वे शृगालाश्चिन्तयन्ति स्म, "यद्ययं केनाप्युपायेन म्रियेत तदास्माकमेतद्देहेन (ङ) मासचतुष्टयस्य स्वेच्छाभोजनं (च) भवेत्।" ततस्तन्मध्यादेकेन वृद्धशृगालेन प्रतिज्ञा कृता, "मया बुद्धिप्रभावादस्य मरणं साधयितव्यम्।" अनन्तरं स वञ्चकः कर्पूरतिलकसमीपं गत्वा

---

(ग) अग्रे—समीपे।

(घ) विषमेषुणा व्यथितहृदयः—विषमः अतिनिदारुणः इषुः कन्दर्पवाणः तेन व्यथितं सञ्जातव्यथं विद्धमिति यावत् हृदयं यस्य सः।

(२५५) उपायेनेति। हि निश्चितम् उपायेन कौशलेन यत् शक्यम् अनुष्ठातुं साध्यं तत् पराक्रमैः तेजोबलैः शक्यं न साधयितुं पार्य्यम्। पङ्कवर्त्मना कर्दममार्गेण गच्छता शृगालेन जम्बूकेन हस्ती हतः विनाशितः।

(ङ) एतद्देहेन—एतस्य हस्तिनः कायेन।

(च) स्वेच्छाभोजनं—प्रचुर आहारः।

साष्टाङ्गपातं प्रणम्योवाच, "देव! दृष्टिप्रसादं (क) कुरु।
हस्ती ब्रूते, "कस्त्वं, कुतः समायातः? सोऽवदत् "जम्बुकोऽहम्, सर्वैर्वनवासिभिः पशुभिर्मिलित्वा भवत्सकाशं प्रस्थापितः (ज)। यद्विना राज्ञा स्थातुं न युक्तम्। तदत्राटवीराज्येऽभिषेक्तुं भवान् (झ) सर्वस्वामिगुणोपेतो (ञ) निरूपितः।

यतः, कुलाचारजनाचारैरतिशुद्धः प्रतापवान्।
धार्मिको नीतिकुशलः स स्वामी युज्यते भुवि ॥२५६॥

अपरञ्च पश्य,

राजानं प्रथमं विन्देत् ततो भार्य्यां ततो धनम्।
राजन्यसति लोकेऽस्मिन् कुतो भार्य्या कुतो धनम् ॥२५७॥

---

(क) दृष्टिप्रसादं कुरु—दृष्टिपातेन मामनुगृहाण।

(ज) प्रस्थापितः—प्रेरितः।

(झ) सर्वस्वामिगुणोपेतः—सर्वे स्वामिनः गुणाः प्रभूचिताः शौर्य्यगाम्भीर्य्यदयादाक्षिण्यादयश्च गुणाः तैरुपेतः युक्तः।

(ञ) निरूपितः—निर्द्धारितः स्थिरीकृतः।

(२५६) कुलेति। यः भुवि भूतले कुलाचारजनाचारैः कुलाचाराः कुलागतरीतयः जनाचाराः लोकाचाराः तैः अतिशुद्धः अतिपूतः रीतिनिन्दारहितः प्रतापवान् प्रभावशाली धार्मिकः धर्मवित् नीतिकुशलः नीतिशास्त्रनिपुणः स स्वामी प्रभुर्युज्यते, स एव राज्यस्यार्ह इत्यर्थः।

(२५७) राजानमिति। प्रथमं सर्वादौ राजानं विन्देत् लभेत, ततः भार्य्यां, ततः तदनन्तरं धनं वित्तम्, अस्मिन् लोके भुवने राजनि असति अविद्यमाने सति अराजके राज्ये कुतः भार्य्या कुतः धनं रक्षणीयमिति शेषः।

अन्यच्च, पर्जन्य इव भूतानामाधारः पृथिवीपतिः ।
विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥२५८॥

किञ्च, नियतविषयवर्त्ती प्रायशो दण्डयोगात्
जगति परवशेऽस्मिन् दुर्लभः साधुवृत्तः ।
कृशमपि विकलं वा व्याधितं वाऽधनं वा
पतिमपि कुलनारी दण्डभीत्याभ्युपैति ॥ २५९ ॥

तद् यथा (ट) लग्नवेला (ठ) न चलति, तथा त्वरा सत्वरमागम्यतां देवेन ।" इत्युक्त्वा उत्थाय चलितः । ततोऽसौ

---

(२५८) पर्जन्य इति । पृथिव्याः पतिः पृथिवीपतिः राजा पर्जन्यः मेघ इव भूतानां प्राणिनाम् आधारः जीवनमूलम् । यथा पर्जन्ये वर्षति सति शस्यमुत्पद्यते तेन च लोको जीवति तद्वत् राजनि रक्षितरि प्रजाः सुखेन तिष्ठन्तीत्यर्थः । पर्जन्ये मेघे विकलेऽपि अनुदिते उदिते चावर्षत्यपि जीव्यते स्थीयते लोकैरिति शेषः । तु किन्तु भूपतौ राजनि विकले सतीत्यर्थः न जीव्यते इति शेषः। दृष्ट्यभावेऽपि प्रजा यदि कदाचित् जीवितुं शक्नुयुः अराजके तु राज्ये न कथमपीत्यर्थः।

(२५९) नियतेति । परवशे पराधीने राजाधिष्ठिते इत्यर्थः अस्मिन् जगति प्रायशः प्रायेण दण्डयोगात् शासनभयात् लोकः नियतविषयवर्त्ती नियते नियमिते विषये व्यापारे वर्तते यः स तथाभूतः सत्पथप्रवृत्त इत्यर्थः भवतीति शेषः । साधु दोषलेशशून्यं वृत्तं चरितं यस्य सः प्रकृत्या सदाचाररतः दुर्लभः दुष्प्रापः । तथाहि, कुलनारी कुलवधूः कृशं दुर्बलम् अपि विकलं विकलाङ्गं वा व्याधितं पीड़ितं वा अधनं निर्धनं वा पतिमपि स्वभर्त्तारमपि दण्डभीत्या राजशासनभयेन अभ्युपैति अभिगच्छति ।

(ट) लग्नवेला—अभिषेकार्थं निरूपितः समयः ।

(ठ) न चलति—नातीत्य गच्छति ।

राज्यलोभाकृष्टः कर्पूरतिलकः शृगालदर्शितवर्त्मना धावन् महापङ्के निमग्नः। हस्तिनोक्तम्, "सखे शृगाल! किमधुना विधेयम्? महापङ्के पतितोऽहम्।" शृगालेन विहस्योक्तम्, "देव! मम पुच्छाग्रे हस्तं दत्त्वोत्तिष्ठ। यस्मात् मद्विधस्य (ड) वचसि त्वया विश्वासः कृतस्तस्य फलमेतत् (ढ)। तथा चोक्तम्,

यदाऽसत्सङ्गरहितो भविष्यसि भविष्यसि।
यदाऽसज्जनगोष्ठीषु पतिष्यसि पतिष्यसि॥ २६०॥

ततो महापङ्के निमग्नो हस्ती शृगालैर्भक्षितः। अतोऽहं ब्रवीमि, उपायेन हि यच्छक्यमित्यादि।" ततः कुट्टिन्युपदेशेन तं चारुदत्त नामानं वणिक्पुत्रं स राजपुत्रः सेवकं चकार। ततोऽसौ तेन सर्वविश्वासकार्येषु नियोजितः। एकदा कुट्टिन्युपदेशेन तेन राजपुत्रेण (ण) स्नातानुलिप्तेन (त) कनकालङ्कारधारिणोक्तम्, चारु-

---

(ड) मद्विधस्य—मादृशस्य धूर्त्तस्येत्यर्थः।

(ढ) फलमेतत्—परिणतिरियम्।

(२६०) यदेति। यदा यस्मिन् समये असताम् असाधूनां मादृशानां धूर्त्तानामिति भावः, सङ्गरहितः संसर्गहीनः भविष्यसि तदा भविष्यसि स्थास्यसि जीवनं धारयिष्यसि इति भावः। यदा च असज्जनगोष्ठीषु असतां संसर्गेषु पतिष्यसि तदा पतिष्यसि अधःपातितो भविष्यसि विपद्ग्रस्तो भविष्यसीत्यर्थः।

(ण) स्नातानुलिप्तेन—पूर्वं स्नातः पश्चादनुलिप्तः चन्दनादिदिग्धदेहः तेन।

(त) कनकालङ्कारधारिणा—सुवर्णभूषणविभूषितेन।

दत्त! मया मासमेकं यावच्चौरीव्रतं कर्त्तव्यम्। तदद्या-रभ्य प्रतिरात्रमेकां कुलीनां युवतीमानीय समर्पय। सा मया (थ) यथोचितेन विधिना पूजयितव्या। ततः स चारुदत्तस्तथाविधां (द) तरुणीमानीय समर्पयति। पश्चात् प्रच्छन्नः किमयं करोतीति निरूपयति। स च तुङ्गबलस्तां युवतीमस्पृशन्नेव दूरादस्त्रालङ्कारगन्धचन्दनैः सम्पूज्य रक्षकं दत्त्वा तत्क्षणमेव प्रस्थापयति। अथ तेन वणिक्-पुत्रेण तद् दृष्ट्वा (ध) उपजातविश्वासेन लोभाकृष्टमनसा (न) स्ववधूः समानीय समर्पिता। स च तुङ्गबलस्तां हृदयप्रियां लावण्यवतीं विज्ञाय ससम्भ्रममुत्थाय (प) निर्दयमालिङ्ग्य आनन्दोन्मीलितलोचनः (फ) प्रहृष्टमना बहुविधामनङ्गक्रीडां विधाय पर्य्यङ्के तया सह सुष्वाप। तदवलोक्य वणिक्पुत्र-श्चित्रलिखित इव इतिकर्त्तव्यतामूढ़ः परं विषादमुपागत इति। तथा त्वयापि भवितव्यमिति"। ततस्तद्वचनमवधार्य्य महता भयेन मन्थरो जलाशयमुत्सृज्य प्रचलितः। तेऽपि

---

(थ) यथोचितेन विधिना—यथाशास्त्रेण अनुष्ठानेन।

(द) तरुणीं—यौवनवतीम्।

(ध) उपजातविश्वासेन—उपजातः उत्पन्नः विश्वासः राज्ञो विशुद्धचरिते प्रत्ययः यस्य तेन, राजचरिते कृतप्रत्ययेन।

(न) लोभाकृष्टमनसा—वस्त्रालङ्कारादिप्राप्त्यर्थं लोभविमोहित-चित्तेन।

(प) निर्दयं— गाढ़म्।

(फ) आनन्दोन्मीलितलोचनः—आनन्दविस्फारितनयनः।

हिरण्यकादयस्तमनुजग्मुः। ततः स्थले गच्छन् केनापि व्याधेन वनं पर्य्यटता स मन्थरः प्राप्तः (ब)। स च तं गृहीत्वा उत्थाप्य धनुषि बद्ध्वा धन्योऽस्मीत्यभिधाय स्वगृहाभिमुखं प्रयातः। अथ ते मृगवायसमूषिकाः परं विषादमुपगतास्तमनुगच्छन्ति स्म। ततो हिरण्यको विलपति,

एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य।
तावद्द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति ॥२६१

स्वभावजं तु यन्मित्रं भाग्येनैवाभिजायते।
तदकृत्रिमसौहार्दमापत्स्वपि न मुञ्चति ॥ २६२ ॥

अपि च, न मातरि न दारेषु न सोदर्य्ये न चात्मजे।
विश्वासस्तादृशः पुंसां यादृङ्मित्रे स्वभावजे ॥२६३॥

---

(ब) प्राप्तः—आक्रान्तः।

(२६१) एकस्येति। अहम् अर्णवस्य समुद्रस्य पारम् अपरतीरमिव यावत् एकस्य दुःखस्य अन्तम् अवसानं न गच्छामि एकस्या विपदः न परित्रातोऽस्मीत्यर्थः। तावत् द्वितीयं मन्थरस्य व्याधकराधिगमनरूपम् अन्यत् दुःखं समुपस्थितम् उपागतम् अनर्थाः अमङ्गलानि छिद्रेषु रन्ध्रेषु प्रवेशावकाशेष्वित्यर्थः अतस्तु अमङ्गला बहुला भवन्ति बहुलीभवन्ति। विपत् विपदमनुगच्छन्तीति भावः।

(२६२) स्वभावेति। यत् स्वभावजं प्रकृत्या निष्पन्नं मित्रम् अकृत्रिममिति यावत्, बन्धुः भाग्येन बहुपुण्यफलेन अभिजायते निष्पद्यते तत् अकृत्रिमं स्वाभाविकं सौहार्दं यस्य तत् मित्रम् आपत्स्वपि विपत्तौ अपि न मुञ्चति त्यजति। तादृशो हि बन्धुः सुखे सुखी दुःखे च दुःखी भवतीत्यर्थः।

(२६३) नेति। पुंसां पुरुषाणां स्वभावजे स्वाभाविके अकृत्रिमे इति यावत् मित्रे बन्धौ यादृक् यादृशः विश्वासः प्रत्ययः भवति तादृशः

इति (भ) मुहुर्विचिन्त्य, अहो मे (म) दुर्दैवम्, यतः ।

स्वकर्मसन्तानविचेष्टितानि कालान्तरावर्त्तिशुभाशुभानि ।
इहैव दृष्टानि मयैव तानि जन्मान्तराणीव दशान्तराणि ॥ २६४ ॥

अथवा (य) इत्थमेवैतत्,

कायः सन्निहितापायः सम्पदः पदमापदाम् ।
समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥ २६५ ॥

पुनर्विमृश्याह,

शोकारातिभयत्राणं प्रीतिविश्रम्भभाजनम् ।

---

तादृक् विश्वासः मातरि न, दारेषु स्त्रियां न, सोदर्ये सहोदरे भ्रातरि न, आत्मनः जायते यः सः आत्मजे पुत्रे च न भवतीति शेषः ।

(भ) मुहुः—वारंवारम् ।

(म) दुर्दैवं भाग्यविपर्य्यासः ।

(२६४) स्वेति । इह संसारे एव मया भाग्यैनैवेत्यर्थः स्वस्य कर्म पापपुण्यं तस्य सन्तानः समूहः तस्य विचेष्टितानि स्वकीयपापपुण्यकृतानि अन्यः कालः कालान्तरं तस्य आवृत्त्या परिवर्त्तनेन शुभाशुभानि समयपरिवर्त्तनसहचरितपरिवर्त्तनशीलानि सुखदुःखानीत्यर्थः तानि नियतानि जन्मान्तराणि प्राक्तनानि दशान्तराणि अवस्थान्तराणि इव पूर्वजन्मकृतपापपुण्यफलानीवेत्यर्थः दृष्टानि अनुभूतानि ।

(य) इत्थमेवैतत्—ईदृश्येव संसारस्य परिवर्त्तनशीलता ।

(२६५) काय इति । कायः शरीरं सन्निहितः निकटवर्त्ती अपायः नाशः यस्य सः आसन्नध्वंसः जातस्य मरणं प्रकृतिरित्यर्थः । सम्पदः सम्पत्तयः आपदां विपदां पदं स्थानं सम्पत्स्वेव चौर्य्याद्युपद्रवो घटते इत्यर्थः । समागमाः संयोगाः सापगमाः सवियोगाः यत्र सौहार्दं तत्रैव तद्वियोगसम्भावनेत्यर्थः, उत्पद्यते जायते यत् तत् उत्पादि उत्पन्नं सर्वं भङ्गुरं ध्वंसि । जन्यवस्तुमात्रमेव ध्वंसते ।

केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ २६६ ॥

किञ्च, मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः
पात्रं यत् सुखदुःखयोः सह भवेन्मित्रेण तद् दुर्लभम् ।
ये चान्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाकुला-
स्ते सर्वत्र मिलन्ति तत्त्वनिकषग्रावा तु तेषां विपत् ॥"२६७॥

इति बहु विलप्य हिरण्यकश्चित्राङ्गलघुपतनकावाह,
"यावदयं व्याधो वनान्न (र) निःसरति तावन्मन्थरं मोचयितुं यत्नः क्रियताम् ।" तावूचतुः, "सत्वरं यथाकार्य्यमुपदिश ।" हिरण्यको ब्रूते, चित्राङ्गो जलसमीपं गत्वा मृतमिव आत्मानं निश्चेष्टं (ल) दर्शयतु । काकश्च तस्योपरि स्थित्वा

---

(२६६) शकेति । शोकः पुत्रादिवियोगजनितं दुःखम् अरातिः शत्रुः भयं भीतिस्तेभ्यस्त्राणम् उद्धारः यस्मात् तत् प्रीतिः मनःप्रसादः विस्रम्भः विश्वासः तयोर्भाजनं पात्रं मित्रमिति अक्षरद्वयम् अक्षरद्वय-युक्तम् इदं रत्नं पृथिव्याः सारभूतम् अमूल्यं वस्तु केन सृष्टम् ।

(२६७) मित्रमिति । यत् मित्रं बन्धुः नयनयोः चक्षुषोः प्रीतिरसायनं प्रीतिकरं स्निग्धरसाञ्जनं चेतसः हृदयस्य आनन्दनम् आनन्दजनकं मित्रेण सह सुखदुःखयोः सम्पद्विपदोः पात्रं भाजनं सुखे सुखितं दुःखे च दुःखितं भवेत् तत् तादृशं मित्रं दुर्लभं दुर्घटम् । समृद्धिसमये सम्पत्काले द्रव्याभिलाषाकुलाः धनलोलुपाः ये च अन्ये सुहृदः बन्धवस्ते सर्वत्र सर्वस्मिन् स्थाने मिलन्ति तिष्ठन्ति तादृशानि मित्राणि न दुर्लभानीत्यर्थः । तु किन्तु तेषां विपत् विपत्तिकाल एव तत्त्वनिकषग्रावा तत्त्वनिर्णायकप्रस्तरः निकषोपलम् ।

(र) निःसरति—निःसरतीति यावद्योगे भविष्यदर्थे लट् ।

(ल) निश्चेष्टं— चेष्टारहितं स्पन्दनादिशून्यमित्यर्थः ।

पश्चात् किमपि लिखतु। नूनमनेन लुब्धकेन मृगमांसार्थिना तत्र कच्छपं परित्यज्य सत्वरं गन्तव्यम्। ततोऽहं मन्थरस्य बन्धनं छेत्स्यामि।" ततश्चित्राङ्गलघुपतनकाभ्यां शीघ्रं गत्वा तथानुष्ठिते सति स व्याधः परिश्रान्तः पानीयं पीत्वा तरोरधस्तादुपविष्टः सन् (व) तथाविधं मृगमवलोक्य कच्छपं जलसमीपे निधाय (श) कर्तरिकामादाय प्रहृष्टमना मृगान्तिकं चलितः। अत्रान्तरे हिरण्यकेनागत्य (ष) छिन्नबन्धनः स कूर्मः सत्वरं जलाशयं प्रविष्टः। स च मृगः आसन्नं तं व्याधं विलोक्य उत्थाय द्रुतं पलायितः। प्रत्यावृत्य लुब्धको यावत् तरुतलमायाति, तावत् कूर्ममपश्यन्नचिन्तयत्, उचितमेवैतत् मम असमीक्ष्यकारिणः (स)।

यतः, यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव हि ॥ २६८ ॥

ततोऽसौ (ह) स्वकर्मवशान्निराशः (क) कटकं (ख) प्रविष्टः।

---

(व) तथाविधं—मृतमिव निश्चेष्टम्।

(श) कर्तरिकां—छुरिकाम्।

(ष) छिन्नबन्धनः—छिन्नं बन्धनं यस्य सः।

(स) असमीक्ष्यकारिणः—विवेकधीशून्यस्य।

(२६८) य इति। यः जनः ध्रुवाणि निश्चितानि परित्यज्य विहाय अध्रुवाणि अनिश्चितानि निषेवते आश्रयति अवलम्बते तस्य ध्रुवाणि निश्चितानि नश्यन्ति अध्रुवं अनिश्चितं नष्टमेव अनधिगतमेवेत्यर्थः।

(ह) स्वकर्मवशात्—स्वकीयदुर्भाग्यवशतः।

(क) निराशः—हताशः।

(ख) कटकं—शिबिरम्।

मन्थराद्दयश्च सर्वे मुक्तापदः (ग) स्वस्थानं गत्वा यथासुखमास्थिताः।" अथ राजपुत्रैः सानन्दमुक्तम्, सर्वं श्रुतवन्तः सुखिनो वयम्। सिद्धं नः समीहितम् (घ)।" विष्णुशर्मोवाच, एतावद्भवतामभिलषितं सम्पन्नम् (ङ)। अपरमपीदमस्तु।

मित्रं प्राप्नुत सज्जना जनपदैः लक्ष्मीः समालभ्यतां
भूपालाः परिपालयन्तु वसुधां शश्वत् स्वधर्मे स्थिताः।
आस्तां मानसतुष्टये सुकृतिनां नीतिर्नवोढेव वः
कल्याणं कुरुतां जनस्य भगवांश्चन्द्रार्द्धचूडामणिः॥२६८॥

इति विष्णुशर्मसङ्गृहीते हितोपदेशे मित्रलाभो नाम प्रथमः कथासंग्रहः।

---

(ग) मुक्तापद—मुक्ता अतिक्रान्ता आपत् यैस्ते, अतिक्रान्तविपत्तयः।

(घ) समीहितं—मनोरथः।

(ङ) सम्पन्नं—सिद्धम्।

(२६८) मित्रमिति। सज्जनाः साधवः मित्रं बन्धुं प्राप्नुत प्राप्नुवन्तु (महाकविनिबद्धत्वात् मध्यमपुरुषप्रयोगः) जनपदैः लक्षणया जनपदवासिभिरित्यर्थः लक्ष्मीः ऐश्वर्य्यं समालभ्यतां प्राप्यतां (सर्वत्र आशंसायां लोट्) भूपालाः स्वधर्मे प्रजारक्षणादौ स्थिताः अनुरक्ताः शश्वत् नित्यकालं वसुधां पृथ्वीं पालयन्तु रक्षन्तु। यः युष्माकं नीतिः नवोढ़ेव नवविवाहिता वधूरिव सुकृतिनां विदुषां मानसतुष्टये मनःप्रीत्यर्थम् आस्तां भूयात्। भगवान् षडैश्वर्य्यसम्पन्नः चन्द्रार्द्धचूडामणिः अर्द्धचन्द्रमौलिः शिवः जनस्य कल्याणं कुरुतां वितरतु।

---

## अथ सुहृद्भेदः ।

—००—

अथ राजपुत्रा ऊचुः "आर्य्य ! मित्रलाभः श्रुतस्ताव-दस्माभिः । इदानीं (क) सुहृद्भेदं श्रोतुमिच्छामो वयम् ।" विष्णुशर्मोवाच, "सुहृद्भेदं शृणुत, यस्यायमाद्यः श्लोकः,

वर्द्धमानो महास्नेहो मृगेन्द्रवृषयोर्वने ।

पिशुनेनातिलुब्धेन जम्बुकेन विनाशितः" ॥ १ ॥

राजपुत्रैरुक्तम्, कथमेतत् ? विष्णुशर्मा कथयति ।

"अस्ति (ख) दक्षिणापथे सुवर्णवती नाम नगरी । तत्र वर्द्धमानो नाम वाणिजो महाधनः प्रतिवसति स्म । तस्य प्रभूतेऽपि (ग) वित्तेऽपरान् बन्धूनतिसमृद्धान् (घ) विलोक्य पुनरर्थवृद्धिः करणीयेति मतिर्बभूव ।

---

(क) सुहृद्भेदं—सुहृदां बन्धूनां भेदः विच्छेदः यस्मिन् अध्याये तं सुहृद्भेदविषयकं मित्रलाभः सुहृद्भेदो विग्रहः सन्धिश्चेति हितोपदेशग्रन्थस्य भागचतुष्टयस्यैकं भागम् ।

(१) वर्द्धमान इति । वने पश्वसमाकुदुर्गमारण्ये मृगेषु इन्द्रः मृगेन्द्रः पशुराजः सिंहः स च वृषश्च तयोः वर्द्धमानः प्रतिदिवसमुपचीयमानः महास्नेहः दृढबन्धनः प्रणयः अतिलुब्धेन लोभाक्रान्तचित्तेन पिशुनेन धूर्त्तेन जम्बुकेन विनाशितः भेदं प्रापितः ।

(ख) दक्षिणापथे—दक्षिणस्यां दिशि ।

(ग) प्रभूतेऽपि—प्रचुरेऽपि असंख्येऽपीति यावत् ।

(घ) अतिसमृद्धान्—स्वापेक्षया अधिकधनशालिनः ।

यतः, अधोऽधः पश्यतः कस्य महिमा नोपचीयते।
उपर्य्युपरि पश्यन्तः सर्वं एव दरिद्रति ॥ २ ॥

अपरञ्च, ब्रह्महाऽपि नरः पूज्यो यस्यास्ति विपुलं धनम्।
शशिनस्तुल्यवंशोऽपि निर्धनः परिभूयते ॥ ३ ॥

अन्यच्च, अव्यवसायिनमलसं दैवपरं साहसाच्च परिहीनम्।
प्रमदेव हि वृद्धपतिं नेच्छत्युपगूहितुं लक्ष्मीः ॥ ४ ॥

किञ्च, आलस्यं स्त्रीसेवा सरोगता जन्मभूमिवात्सल्यम्।
सन्तोषो भीरुत्वं षड् व्याघाता महत्त्वस्य ॥ ५ ॥

---

(२) अध इति। अधः अधः क्रमशः निम्नम् आत्मापेक्षया हीनं पश्यन् अवलोकयन् हीनतरेण सह आत्मतुलनां कुर्वन इत्यर्थः कस्य जनस्य महिमा प्राधान्याभिमानं न उपचीयते वर्द्धते अपितु सर्व्वस्यैवेत्यर्थः। उपरि उपरि पश्यन्तः धनवत्तरेण सह आत्मतुलनां कुर्व्वन्तः सर्व्व एव लोकाः दरिद्रति आत्मानं दरिद्रं मन्यन्ते।

(३) ब्रह्महापीति। ब्रह्माणं हतवानिति ब्रह्महा ब्रह्मघ्नोऽपि नरः पूज्यः पूजार्हो भवति, यस्य नरस्य विपुलं धनम् अस्ति विद्यते महापापग्रस्तोऽपि प्रभूतधनवान् सर्व्वेषां सम्मानार्ह इत्यर्थः, शशिनश्चन्द्रस्य तुल्यः वंशो यस्य सः निर्म्मलवंशजातोऽपि निर्धनः धनहीनः परिभूयते अपमन्यते लोकैरिति शेषः। वंशमर्य्यादायाः धनमर्य्यादा गरीयसी इति भावः।

(४) अव्यवसायिनमिति। लक्ष्मीः सम्पदधिष्ठात्री देवी अव्यवसायिनम् उद्योगशून्यम् अव्यवसायरहितमित्यर्थः, अलसं निश्चेष्टं दैवपरं दैवमात्रावलम्बिनं साहसात् परिहीनं साहसरहितं जनं प्रमदा युवती वृद्धपतिमिव उपगूहितुमालिङ्गितुं नेच्छति न कामयते, एतादृशो हि पुरुषः सम्पदं नाधिगच्छतीत्यर्थः।

(५) आलस्यमिति। आलस्यं निरुद्यमत्वं, स्त्रीसेवा स्त्रीसम्भोग·

यतः, सम्पदा सुस्थितम्मन्यो भवति स्वल्पयापि यः।
कृतकृत्यो विधिर्मन्ये न वर्द्धयति तस्य ताम्॥ ६॥
अपरञ्च, निरुत्साहं निरानन्दं निर्वीर्य्यमरिनन्दनम्।
मास्म सीमन्तिनी काचित् जनयेत् पुत्रमीदृशम्॥ ७॥
तथाह्युक्तम्, अलब्धं चैव लिप्सेत लब्धं रक्षेदपेक्षया।
रक्षितं वर्द्धयेत् सम्यक् वृद्धं तीर्थेषु निक्षिपेत्॥ ८॥
(ङ) अवर्द्धमानश्चार्थः कालेन स्वल्पव्ययेऽप्यञ्जनवत् (च)

---

पराधीनता, अरोगता, चिररोगिता जन्मभूमिवात्सल्यं विदेशगमनविमुखता, सन्तोषः क्षीणावस्थायामपि चित्तप्रसादः, भीरुत्वं कार्य्यसम्पादनादौ संशयाकुलचित्तता, एतानि षट् मनुष्यस्य उन्नतेः व्याघाताः प्रत्यूहाः।

(६) सम्पदेति। यो जनः स्वल्पयापि अत्यल्पयापि सम्पदा ऐश्वर्य्येण सुस्थितम्मन्यः आत्मानं सुस्थितं मन्यतेऽसौ तथोक्तः सुखी भवति विधिर्विधाता कृतकृत्यः सम्पादितस्वकर्त्तव्यः सन् तस्य जनस्य तां स्वल्पां सम्पदं न वर्द्धयति वृद्धिं न गमयति, उन्नतिमप्रार्थयमानस्य न स्यादेव उन्नतेः सम्भावनेति भावः।

(७) निरुत्साहमिति। निरुत्साहम् उद्योगशून्यं निरानन्दम् असन्तुष्टं निर्वीर्य्यं पराक्रमशून्यम् अतएव अरिनन्दनं शत्रूणाम् आनन्दवर्द्धनम् ईदृशं पुत्रं काचित् सीमन्तिनी मास्म जनयेत् उत्पादयेत्।

(८) अलब्धमिति। अलब्धम् अनधिगतं धनं लिप्सेत् लब्धुम् इच्छेत् लब्धं प्राप्तम् अपक्षयात् नाशात् चौर्य्यादेरित्यर्थः रक्षेत् रक्षितं सञ्चितं सम्यक् अतिशयेन वर्द्धयेत् कुसीदप्रयोगादिना वृद्धिं गमयेत् वृद्धं वृद्धिं प्रापितं धनं तीर्थेषु दानयोग्येषु पात्रेषु निक्षिपेत् दद्यात्।

(ङ) अवर्द्धमानः—वृद्धिमप्राप्नुवन्।

(च) अञ्जनवत्—कज्जलवत् अनुपलक्षितमिति भावः।

चयमेति। (छ) अनुपभुज्यमानस्य निष्प्रयोजन एव।

तथाह्युक्तम्, "अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य च सञ्चयम्।
अवन्ध्यं दिवसं कुर्य्यात् दानाध्ययनकर्म्मभिः॥ ९॥

यतः, जलविन्दुनिपातेन क्रमशः पूर्य्यते घटः।
स हेतुः सर्व्वविद्यानां धर्म्मस्य च धनस्य च॥" १०॥

इति सञ्चिन्त्य वर्द्धमानः सञ्जीवकनन्दकनामानौ द्वौ वृषभौ (ज) धुरि नियोज्य शकटं (झ) नानाविधद्रव्यपूर्णं कृत्वा वाणिज्येन काश्मीरं प्रति चलितः।

यतः, कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम्।
को विदेशः सविद्यानां कः परः प्रियवादिनाम्॥ ११॥

---

(छ) अनुपभुज्यमानः — अक्रियमाणभोगः।

(९) अञ्जनस्येति। अञ्जनस्य कज्जलस्य क्षयं क्रमशः विलुप्ततां वल्मीकस्य तदाख्यकीटविशेषस्य च सञ्चयं दृष्ट्वा उभाभ्याम् उभयविधं क्षयसञ्चयोपदेशं लब्ध्वा इत्यर्थः, दानं सत्पात्रप्रतिपादनम् अध्ययनं श्रुतिपाठः कर्म श्रुतिस्मृतिविहितं कार्य्यं तैः दिवसं अवन्ध्यं सफलं कुर्य्यात्।

(१०) जलेति। जलविन्दुनिपातेन वारिविन्दुनिपातनेन घटः क्रमशः क्रमेण पूर्य्यते पूरितो भवति। स क्रमनिपातः सर्व्वविद्यानां श्रुत्यादिसर्व्वशास्त्राणां धर्म्मस्य धनस्य च हेतुः कारणं विद्याधर्म्मधनानामुपार्ज्जनं क्रमसाध्यमित्यर्थः।

(ज) धुरि — भारवहने।

(झ) नानाविधद्रव्यपूर्णं — बहुविधवाणिज्यद्रव्यपूर्णम्।

(११) क इति। समर्थानां बलवताम् अतिभारः दुर्वहो भारः कः व्यवसायिनां वाणिज्येन धनमुपार्ज्जयितुकामानां किं दूरं सविद्यानां विद्यावतां विदेशः कः प्रियवादिनां मधुरभाषिणां परः शत्रुः कः।

अथ गच्छतस्तस्य दुर्गमनाम्नि महारण्ये (ञ) भग्नजानुः सञ्जीवको निपतितः । एतदालोक्य वर्द्धमानोऽचिन्तयत्,

"करोतु नाम नीतिज्ञो व्यवसायमितस्ततः ।
फलं पुनस्तदेव स्याद् यद्विधेर्मनसि स्थितम् ॥ १२ ॥

किन्तु, विस्मयः सर्वथा हेयः प्रत्यूहः सर्वकर्मणाम् ।
तस्माद्विस्मयमुत्सृज्य साध्यसिद्धिर्विधीयते" ॥ १३ ॥

इति सञ्चिन्त्य सञ्जीवकं तत्र परित्यज्य वर्द्धमानश्चलितः । सञ्जीवकोऽपि (ट) कथं कथमपि खुरत्रये भरं कुर्वंस्तत्रैव वने स्थितः ।

यतः, निमग्नस्य पयोराशौ पर्वतात् पतितस्य च ।
तक्षकेणापि दष्टस्य आयुर्मर्माणि रक्षति ॥ १४ ॥

---

(ञ) भग्नजानुः—भग्ने जानुनी यस्य सः, भग्नपादः ।

(१२) करोत्विति । नीतिज्ञः नीतिविद् जनः इतस्ततः समन्तात् व्यवसायं करोतु नाम पुनः किन्तु फलं व्यवसायस्य लाभः तदेव स्यात् भवेत् यत् विधेः विधातुर्मनसि स्थितं विद्यते । न कोऽपि दैवमतिक्रमितुं समर्थ इति भावः ।

(१३) विस्मय इति । सर्वकर्मणां सर्वकार्य्याणां प्रत्यूहः अन्तरायः विस्मयः आश्चर्य्यं किंकर्त्तव्यविमूढ़तेति यावत् हेयः त्यक्तव्यः । तस्मात् कारणात् विस्मयम् उत्सृज्य त्यक्त्वा साध्यसिद्धिः अभीष्टसाधनं विधीयते क्रियते जनेनेति शेषः ।

(ट) कथं कथमपि—अतिकृच्छ्रेण ।

(१४) निमग्नस्येति । पयोराशौ समुद्रे निमग्नस्य समुद्रगर्भे पतितस्य पर्वतात् पर्वताद्युच्चस्थानात् पतितस्य तक्षकेण तीव्रविषेण सर्पेणापि दष्टस्य क्षतस्य आयुः विधिनियमितो जीवनकालः मर्माणि जीवनानि रक्षति, नाकाले म्रियते जन्तुः प्राप्तकालो न जीवतीति भावः ।

अपरञ्च, नाकाले म्रियते जन्तुर्विद्धः शरशतैरपि ।
कुशाग्रेणैव संस्पृष्टः प्राप्तकालो न जीवति ॥१५॥

यतः, अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे न जीवति ॥ १६ ॥

ततो दिनेषु गच्छत्सु सञ्जीवकः (ठ) स्वेच्छाहारादिलाभेन तामरण्यानीं परिभ्रमन् (ड) हृष्टपुष्टाङ्गो (ढ) बलवन्ननाद । तस्मिन् वने पिङ्गलकनामा सिंहः (ण) स्वभुजोपार्जितराज्यसुखमनुभवन्नास्ते ।

---

(१५) नेति । जन्तुः प्राणी शरशतैः बहुसंख्यकैः बाणैः विद्धः आहतः सन्नपि अकाले अनियतकाले न म्रियते प्राणैर्विमुच्यते, प्राप्तकालः विधिनियमितकालः जन्तुः कुशाग्रेणैव संस्पृष्टः कुशविद्धः सन्नपि न जीवति न प्राणिति ।

(१६) अरक्षितमिति । अरक्षितं चौर्य्यादेरिति शेषः धनं दैवरक्षितं सत् तिष्ठति न नश्यति । सुरक्षितमपि दैवहतं विनश्यति क्षयं गच्छति । तथाहि वने विसर्जितः त्यक्तः अनाथोऽपि हिंस्रेभ्यः अरक्षितोऽपि जीवति प्राणिति । गृहे कृतप्रयत्नः बन्धुसाहाय्यं लभमानोऽपि न जीवति म्रियते एव । अतो विधिरेव बलवानिति भावः ।

(ठ) स्वेच्छाहारादिलाभेन—स्वेच्छया शष्पादिकमुपभुज्य ।

(ड) हृष्टपुष्टाङ्गः—हृष्टं स्फूर्त्तिमापन्नं पुष्टं मांसलञ्च अङ्गं यस्य सः । प्रफुल्लस्थूलकलेवरः ।

(ढ) बलवत्—अत्युच्चैः । ननाद—जगर्ज ।

(ण) स्वभुजोपार्जितराज्यसुखं—स्वकीयबाहुबललब्धराज्यभोगसुखम् ।

यथोक्तम्, नाभिषेको न संस्कारः सिंहस्य क्रियते मृगैः ।
विक्रमार्जितराज्यस्य स्वयमेव मृगेन्द्रता ॥ १७ ॥

स चैकदा (त) पिपासाकुलितः पानीयं पातुं (थ) यमुनाकच्छमगमत् । तेन च तत्र सिंहेनाननुभूतपूर्वकं (द) (ध) प्रलयघनगर्जितमिव सञ्जीवकनर्दितमश्रावि । तच्छ्रुत्वासौ पानीयमपीत्वा सचकितं परिवृत्य स्वस्थानमागत्य किमिदमित्यालोच्य तूष्णीं स्थितः । स च तथाविधः करटकदमनकाभ्यां तन्मन्त्रिपुत्राभ्यां शृगालाभ्यां दृष्टः । तं तथाविधं दृष्ट्वा दमनकः करटकमाह, सखे करटक ! "किमित्ययमुदकार्थी (न) स्वामी पानीयमपीत्वा मन्दं मन्दमवतिष्ठते ?" करटको ब्रूते, मित्र दमनक ! "अस्म-

(१७) नाभिषेक इति । मृगैः पशुभिः सिंहस्य न अभिषेकः यथाविधि राज्याभिषेचनं न संस्कारः अभिषेकेण पूतता च क्रियते सम्पाद्यते । तर्हि कथमस्य राजत्वमित्याह, विक्रमार्जितराज्यस्य स्वभुजोपार्जितराष्ट्रस्य सम्बन्धे स्वयमेव अन्यसाहाय्यमनपेक्ष्यैव मृगेन्द्रता भवतीति भावः ।

(त) पिपासाकुलितः—पिपासया जलं पातुमिच्छया आकुलितः कातरः ।

(थ) यमुनाकच्छं—यमुनातीरम् ।

(द) अननुभूतपूर्वकं—पूर्वमनुभूतमनुभूतपूर्वं तन्न भवतीत्यननुभूतपूर्वम् अश्रुतपूर्वम् ।

(ध) प्रलयघनगर्जितमिव—प्रलये प्रलयकाले ये घनाः मेघाः तेषां गर्जितं ध्वनिरिव, अतिभीषणमित्यर्थः ।

(न) उदकार्थी—उदकं जलम् अर्थयते पातुमभिलषति यः सः ।

अतेनास्य सेवैव न क्रियते । तत् किमस्य (प) चेष्टानिरूपणेन ? यतश्चानेन राज्ञा विनापराधेन चिरदिवसं (फ) अवधीरिताभ्यामावाभ्यां दुःखमनुभूतम् ।

सेवया धनमिच्छद्भिः सेवकैः पश्य यत् कृतम् ।
स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम् ॥१८॥

अपरञ्च, शीतवातातपक्लेशान् सहन्ते ये पराश्रिताः ।
तदंशेनापि मेधावी तपस्तप्त्वा सुखी भवेत् ॥ १९ ॥

अन्यच्च, एतावज्जन्मसाफल्यं यदनायत्तवृत्तिता ।
ये पराधीनतां यातास्ते वै जीवन्ति के मृताः ? ॥२०॥

---

(प) चेष्टानिरूपणेन—तूष्णीमवस्थानादिक्रियानुसन्धानेन ।

(फ) अवधीरिताभ्याम्—अवज्ञाताभ्याम् ( अवधीर+क्त )

(१८) सेवयेति । सेवया प्रभुशुश्रूषया धनम् इच्छद्भिः अभिलषद्भिः सेवकैर्यत् कृतं पश्य तदिति शेषः । मूढैः मूर्खैः सेवकैः शरीरस्य कायस्य यत् स्वातन्त्र्यं स्वाधीनता तदपि स्वातन्त्र्यमपि हारितं विलोपितम् ।

(१९) शीतेति । पराश्रिताः पराधीनाः ये जनाः शीतवातातपक्लेशान् शीतं शैत्यं वातो वायुः आतपं सूर्यकिरणस्तेभ्यः ये क्लेशास्तान् सहन्ते भुञ्जते मेधावी बुद्धिमान् जनः तस्य क्लेशस्य अर्द्धेनापि तपः तप्त्वा ब्रह्माराधनां कृत्वा सुखी भवेत् ।

(२०) एतावदिति । यत् यस्मात् अनायत्तवृत्तिता अनायत्ता स्वाधीना वृत्तिर्येषां ते तेषां भावः स्वाधीनता एतावत् एतदेव जन्मसाफल्यं जन्मनः सार्थकता । एवं सति ये पराधीनतां परतन्त्रतां याताः प्राप्तास्ते जीवन्ति चेत् के जनाः मृताः ? पराधीना जीवन्तोऽपि मृता इवेति भावः ।

अपरञ्च, एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर।
एवमाशाग्रहग्रस्तैः क्रीड़न्ति धनिनोऽर्थिभिः॥२१॥

किञ्च अबुधैरर्थलाभाय पण्यस्त्रीभिरिव स्वयम्।
आत्मा संस्कृत्य संस्कृत्य परोपकरणीकृतः॥ २२॥

अन्यच्च, या प्रकृत्यैव चपला निपतत्यशुचावपि।
स्वामिनो बहु मन्यन्ते दृष्टिं तामपि सेवकाः॥२३॥

विशेषतश्च,

प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान्।
दुःखीयति सुखहेतोः को मूढ़ः सेवकादन्यः? ॥२४॥

---

(२१) एहीति। धनिनो धनशालिनो जनाः आशा धनलाभार्थ-मुत्कटेच्छैव ग्रहः प्रतिकूलदैवमित्यर्थः तेन ग्रस्तैः आक्रान्तैः अर्थिभिः याचकैः करणैः एहि आगच्छ, गच्छ याहि, पत निम्नमाश्रय, उत्तिष्ठ अर्द्धमुपविश, वद कथय, मौनं समाचर तूष्णीं भव, एवम् इत्थं क्रीड़न्ति क्रीड़नकवत् स्वेच्छया भ्रामयन्तीत्यर्थः।

(२२) अबुधैरिति। अबुधैः मूढैः अर्थलाभाय अर्थमुपार्जयितुं पण्यस्त्रीभिः वाराङ्गनाभिरिव आत्मा देहः संस्कृत्य संस्कृत्य एकत्र वेष-भूषणैर्गन्धादिविलेपनैश्च अन्यत्र कर्म कृत्वा परोपकरणीकृतः परोप-कारार्थम् उपस्थापितः।

(२३) येति। या प्रकृत्या स्वभावतश्चपला चञ्चला दृष्टिः अशुचौ अपवित्रे वस्तुनि अप्रियेऽपि वा निपतति तामेव स्वामिनः प्रभोः दृष्टिम् अवलोकनं सेवकाः अधीनाः पुरुषाः बहु मन्यन्ते सदयं दृष्टि-पातं जानन्ति।

(२४) प्रणमतीति। उन्नतिहेतोः उन्नतिनिमित्तं प्रणमति आत्मानं नतं करोति, जीवितहेतोः जीवनरक्षार्थं वर्त्तनादिना जीवि-कानिर्वाहार्थमिति यावत् प्राणान् जीवनं उज्झति त्यजति, सुखहेतोः

अपरञ्च, मौनान्मूर्खः, प्रवचनपटुर्वातुलो जल्पको वा,
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः ।
धृष्टः पार्श्वे वसति नियतं दूरतश्च प्रगल्भः
सेवाधर्म्मः परमगहनो योगिनामप्यगम्यः ॥ २५ ॥

दमनकोऽब्रवीत्, “मित्र ! सर्वथा मनसापि नैतत् (ब) कर्त्तव्यम् ।

कथं नाम न सेव्यन्ते यत्नतः परमेश्वराः ? ।
अचिरेणैव ये तुष्टाः पूरयन्ति मनोरथान् ॥ २६ ॥

अन्यच्च, कुतः ? सेवाविहीनानां चामरोद्धूतसम्पदः ।

---

सुखी भवितुं दुःखीवति क्लेशं सहते, एवं स्थिते सेवकादन्यः अपरः मूढः मूर्खः कः ?

(२५) मौनादिति । मौनात् वाङ्नियमने सति मूर्खः, प्रवचनपटुः वाग्मी चेत् वातुलः उन्मत्तः जल्पकः बहुभाषी वा, क्षान्त्या क्षमया चेत् भीरुः भीतः, यदि न सहते सहिष्णुर्भवति तदा प्रायशः भूम्ना नाभिजातः अविनीतः निकृष्टो वा, नियतं सततं पार्श्वे वसति चेत् धृष्टः उद्धतः दूरतः दूरे स्थितश्च प्रगल्भः गर्व्वितश्च सेवाधर्मः भृत्यभावः योगिनामपि वीतरागाणाम् ईश्वरसेवकानामिति भावः अगम्यः दुर्बोधः । ईश्वरसेवाया अपि प्रभुसेवा सुकठिनेत्यर्थः ।

(ब) एतत्—प्रभुसेवोपेक्षणम् ।

(२६) कथमिति । परमेश्वराः स्वामिनः कथं नाम कथं न यत्नतः यत्नेन सेव्यन्ते आराध्यन्ते प्रत्युत सर्वथा सेवनीया एवेत्यर्थः । ये परमेश्वराः सन्तुष्टाः सेवया प्रीतिमापादिताः अचिरेणैव अनतिविलम्बेनैव मनोरथान् अभिलाषान् पूरयन्ति सफलीकुर्वन्ति ।

उद्दण्डधवलच्छत्रवाजिवारणवाहिनी" ॥ २७ ॥

करटको ब्रूते, "तथापि किमनेन (भ) अव्यापारेणास्माकम् ? अव्यापारेषु व्यापारः सर्वथा परिहरणीयः (म)। पश्य, अव्यापारेषु व्यापारं यो नरः कर्त्तुमिच्छति।

स भूमौ निहतः शेते कीलोत्पाटीव वानरः" ॥२८॥

दमनकः पृच्छति, "कथमेतत्?" करटकः कथयति, "अस्ति मगधदेशे धर्मारण्यसन्निहितवसुधायां (य) शुभदत्तनाम्ना कायस्थेन विहारः कारयितुमारब्धः। तत्र करपत्रविदार्य्यमाणकाष्ठस्तम्भस्य (र) कियद्दूरविदीर्णखण्ड-

---

(२७) कुत इति। सेवाविहीनानां प्रभुसेवापराङ्मुखानां चामरोद्धूतसम्पदः चामरेण राजचिह्नेन उद्धूताः प्रकाशिताः सम्पदः ऐश्वर्य्याणि कुतः ? राजसेवाया अन्यथा स्यादित्यर्थः। उद्दण्डम् ऊर्द्ध्वमुत्थापितः दण्डो यस्य तत् धवलं शुभ्रं छत्रं वाजिनः अश्वाः वारणाः गजाश्च यस्यां तथोक्ता वाहिनी सेना च कुतः ? राजसेवामन्तरेण न कथमपीदृशी सम्पत् लभ्येतेति भावः।

(भ) अव्यापारेण—पराधिकारचर्च्चया।

(म) परिहरणीयः—त्यक्तव्यः।

(२८) अव्यापारेति। यो नरः अव्यापारेषु स्वकर्त्तव्यान्यकार्य्येषु व्यापारं क्रियां कर्त्तुम् इच्छति अभिलषति स जनः कीलोत्पाटी कीलं विदार्य्यमाणकाष्ठस्य अन्तररक्षार्थं काष्ठखण्डम् उत्पाटयतीति तथोक्तः वानर इव भूमौ निहतः आहतः सः शेते म्रियते इत्यर्थः।

(य) धर्मारण्यसन्निहितवसुधायां—धर्मारण्यनिकटवर्त्तिनि स्थाने।

(र) करपत्रविदार्य्यमाणकाष्ठस्तम्भस्य—करपत्रेण काष्ठभेदकास्त्रविशेषेण विदार्य्यमाणः भेदयितुमारभ्यमाणः यः काष्ठस्तम्भः स्तम्भः तस्य।

द्वयस्य (ल) मध्ये कीलकः सूत्रधारेण निहितः (व)। तत्र च वनवासी महान् वानरयूथः (श) क्रीडनार्थमायातः। तेष्वेको वानरः कालदण्डप्रेरित(ष) इव तं कीलकं हस्ताभ्यां धृत्वोपविष्टः। ततस्तस्य मुष्कद्वयं लम्बमानं काष्ठद्वयाभ्यन्तरे प्रविष्टम्। अनन्तरं सहजचपलतया महता प्रयत्नेन कीलकमाकृष्टवान्। आकृष्टे सति काष्ठाभ्यां चूर्णिताण्डद्वयं पञ्चत्वं गतः। अतोऽहं ब्रवीमि। अव्यापारेषु व्यापारमित्यादि"। दमनको ब्रूते, "तथापि स्वामिचेष्टानिरूपणं सेवकैः कर्त्तव्यम्"। करटको ब्रूते, "यः (स) सर्वाधिकारे नियुक्तः प्रधानमन्त्री स करोतु। यतोऽनुजीविना (ह) पराधिकारचर्चा न कर्त्तव्या।

पश्य, पराधिकारचर्चां यः कुर्य्यात् स्वामिहितेच्छया।
स विषीदति चीत्कारात् ताड़ितो गर्द्दभो यथा" ॥२६॥

---

(ल) कियद्दूरविदीर्णस्तम्भद्वयस्य—कियद्दूरपर्य्यन्तं द्विधा विदीर्य्यमाणस्य स्तम्भस्य अंशद्वयमध्ये।

(व) निहितः—प्रोथितः अभ्यन्तररक्षार्थं स्थापितः।

(श) वानरयूथः—वानरसमूहः।

(ष) कालदण्डप्रेरितः—नियतिनोदितः।

(स) सर्वाधिकारे—सर्वकार्य्यपर्य्यवेक्षणे।

(ह) पराधिकारचर्च्चा—अन्येषां कर्त्तव्यकर्म्मानुशीलनम्।

(२६) परेति। यः स्वामिहितेच्छया प्रभोर्हितं कर्त्तुमित्यर्थः पराधिकारचर्चां परकर्त्तव्यकर्म्मणः आलोचनां परकर्त्तव्यं सम्पादयितुमिच्छां कुर्य्यात् स चीत्कारात् हेतोः ताड़ितः आहतः गर्द्दभो यथा गर्द्दभ इव विषीदति विषादमाप्नोति।

दमनकः पृच्छति, "कथमेतत्?" करटकः कथयति, "आसीत् वाराणस्यां कर्पूरपटो नाम रजकः। सः चैकदाभिनववयस्कया भार्य्यया सह चिरात् केलिं (च) कृत्वा निर्भरं प्रसुप्तः। तदनन्तरं द्रव्याणि हर्त्तुं तद्गृहे चौरः प्रविष्टः। तस्य प्राङ्गणे गर्दभो (क) बद्धस्तिष्ठति। कुक्कुरश्चोपविष्टः। तं चौरमवलोक्य गर्दभः श्वानमाह, "भवतोऽयं व्यापारः। तत् किमिति त्वमुच्चैः शब्दं कृत्वा स्वामिनं न जागरयसि?" कुक्कुरो ब्रूते, "नियोगस्यास्य (ख) चिन्ता त्वया न कार्य्या। त्वमेव जानासि यथाऽहमस्य गृहरक्षां करोमि। यतोऽयं चिरान्निर्वृतो (ग) ममोपयोगं न जानाति। तेनाधुना ममाहारदानेऽपि मन्दादरः। विना विधुरदर्शनं (घ) स्वामिनोऽनुजीविषु मन्दादरा भवन्ति"। गर्दभो ब्रूते, "शृणु रे वर्वर !

याचते कार्य्यकाले यः स किं भृत्यः स किं सुहृत्?"

कुक्कुरो ब्रूते,

"यो न सम्भावयेद् भृत्यान् कार्य्यकाले स किं प्रभुः? ॥२०॥

---

(च) केलिं—क्रीड़ां विहारं वा। निर्भरं—गाढ़म्।

(क) बद्धः—रज्जुना बद्धः।

(ख) अस्य नियोगस्य—मत्कर्त्तव्यकर्मण इत्यर्थः।

(ग) निर्वृतः—चौर्य्याद्युपद्रवरहितः।

(घ) विधुरदर्शनम्—अनिष्टदर्शनम्।

(२०) याचते इति। यो जनः कार्य्यकाले याचते स्वामिनम् अर्थादिकं प्रार्थयते सः किं भृत्यः निन्दनीयसेवकः, स किं सुहृत् निन्द-

किञ्च, आश्रितानां भृतौ स्वामिसेवायां धर्मसेवने ।
पुत्रस्योत्पादने चैव न सन्ति प्रतिहस्तकाः" ॥ ३१ ॥

ततो गर्दभः सकोपमाह, "आः ! (छ) पापीयांस्त्वं, यः स्वामिकार्य्योपेक्षां करोषि । भवतु, यथा स्वामी आगच्छति तथा मया कर्त्तव्यम् ।

यतः, पृष्ठतः सेवयेदर्कं जठरेण हुताशनम् ।
स्वामिनं सर्वभावेन परलोकममायया" ॥ ३२ ॥

इत्युक्त्वा स अतीव चीत्कारं कृतवान् । ततः स रजकस्तेन चीत्कारेण प्रबुद्धो (च) निद्राविमर्दकोपादुत्थाय गर्दभं लगुडेन ताडयामास । ततस्तेन ताडनेन गर्दभः पञ्चत्वं

---

नीचबन्धुः । कार्य्यकाले यः भृत्यान् सेवकान् न सम्भावयेत् धनमानाभ्यामाद्रियते स किं प्रभुः निन्दनीयस्वामी ।

(३१) आश्रितानामिति । आश्रितानां सेवकादीनामधीनानां भृतौ भरणे स्वामिसेवायां प्रभुसेवायां धर्मसेवने धर्मकर्मानुष्ठाने पुत्रस्य उत्पादने च विषये प्रतिहस्तकाः प्रतिनिधयः नैव सन्ति विद्यन्ते । नैतानि प्रतिनिधिभिः सम्पादनीयानि ।

(छ) पापीयान्—कर्त्तव्यानुष्ठाने विमुखत्वात् पापकर्मरतः ।

(३२) पृष्ठत इति । अर्कं सूर्य्यं सूर्य्यकिरणमित्यर्थः पृष्ठतः पृष्ठे सेवयेत्, हुताशनं वह्निं जठरेण उदरेण, स्वामिनं प्रभुं सर्वभावेन सर्वासु अवस्थासु, परलोकं पारलौकिकं धर्मानुष्ठानम् अमायया अकापट्येन आश्रयेतेत्यर्थः, सर्वत्र सेवयेदित्यनेनान्वयः ।

(च) निद्राविमर्दकोपात्—निद्रायाः विमर्दः व्याघातः तस्मात् कोपस्तस्मात् ।

गतः। अतोऽहं ब्रवीमि, पराधिकारचर्चामित्यादि। पश्य पशूनामन्वेषणमस्माकं नियोगः। अतः स्वनियोगस्यैव चर्चा क्रियताम्”। विमृश्य। “किन्त्वद्य तथापि चर्वया न प्रयोजनम्। यतः, आवयोर्भक्षितशेषाहारः प्रचुरस्ति-ष्ठति” दमनकः सरोषमाह, “कथमाहारमात्रार्थी (क) भवान् नृपं सेवते? सेवकस्य एतदयुक्तमुक्तम्।

यतः, सुहृदामुपकारकारणात् द्विषतामप्यपकारकारणात्।
नृपसंश्रय इष्यते बुधैर्जठरं को न बिभर्त्ति केवलम्॥३३
जीविते यस्य जीवन्ति विप्रा मित्राणि बान्धवाः।
सफलं जीवितं तस्य आत्मार्थे को न जीवति? ॥३४॥
अपिच, यस्मिन् जीवति जीवन्ति बहवः स तु जीवतु।
काकोऽपि किं न कुरुते चञ्च्वा स्वोदरपूरणम्॥३५॥

---

(क) आहारमात्रार्थी—आहारमात्रम् अर्थयते यः सः। स्वोदर-पूरणार्थी।

(३३) सुहृदामिति। सुहृदां बन्धूनाम् उपकारकारणात् उप-कारार्थं हितं कर्तुमित्यर्थः, द्विषतां शत्रूणामपि अपकारकारणात् वैरनिर्यातनार्थं बुधैः पण्डितैः नृपसंश्रयः राजाश्रयः इष्यते, को जनः केवलं जठरं न बिभर्त्ति? केवलम् उदरपूरणार्थं मूढैरेव नृपसेवा क्रियते इति भावः।

(३४) जीविते इति। यस्य जीविते प्राणेषु विप्राः ब्राह्मणाः मित्राणि बान्धवाः जीवन्ति तस्य जीवितं जीवनं सफलं सार्थकं स एव सफलजन्मा आत्मार्थे को जनः न जीवति?

(३५) यस्मिन्निति। यस्मिन् जने जीवति सति बहवः जीवन्ति

पश्य, पञ्चभिर्याति दासत्वं पुराणैः कोऽपि मानवः ।
कोऽपि लक्षैः कृतः कोऽपि लक्षैरपि न लभ्यते ॥२६॥

यतः, मनुष्यजातौ तुल्यायां भृत्यत्वमतिगर्हितम् ।
प्रथमो यो, न तत्रापि सोऽपि जीवत्सु गण्यते ॥२७॥

तथाचोक्तम्, वाजिवारणलोहानां काष्ठपाषाणवाससाम् ।
नारीपुरुषतोयानामन्तरं महदन्तरम् ॥ २८ ॥

तथाहि, अल्पस्नायुवसावशेषमलिनं निर्मांसमप्यस्थिकं
श्वा लब्ध्वा परितोषमेति न च तत्तस्य क्षुधाशान्तये ।
सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम् ॥२९॥

---

यमाश्रित्य अनेके जीविकां निर्वाहयन्ति स तु जीवतु । काकोऽपि किं चञ्चा चञ्चूसाहाय्येन स्वोदरपूरणं न कुरुते ?

(२६) पञ्चभिरिति । पञ्चभिः पुराणैः मुद्राविशेषैः कोऽपि दासत्वं स्वीकरोतीत्यर्थः । कोऽपि लक्षैः लक्षसंख्यकाभिः मुद्राभिः कृतः दासः कृतः । कोऽपि लक्षैरपि न लभ्यते प्राप्यते ।

(२७) मनुष्यजाताविति । मनुष्यजातौ तुल्यायां सत्यामपि भृत्यत्वं भृत्यभावः अतिगर्हितम् अतिनिन्दनीयम् । तत्र तेषु भृत्येषु मध्ये यः प्रथमः सर्वश्रेष्ठः न भवतीति शेषः सोऽपि जीवत्सु मध्ये गण्यते परिगणितो भवति किम् ?

(२८) वाजीति । वाजिनः अश्वाः वारणाः हस्तिनः लौहः धातुविशेषः तेषां काष्ठं पाषाणः प्रस्तरः वासः वस्त्रं तेषां नार्यः स्त्रियः पुरुषाः तोयानि जलानि च तेषाम् अन्तरं प्रभेदं महदन्तरं महान् प्रभेदः ।

(२९) अल्पेति । श्वा कुक्कुरः अल्पस्नायुवसावशेषमलिनम् अल्पाः

अपरञ्च, पश्य सेव्यसेवकयोरन्तरम् । (ज) ।

लाङ्गूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनं च ।
श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ ४० ॥

किञ्च, यज्जीव्यते क्षणमपि प्रथितं मनुष्यै-
र्विज्ञानविक्रमयशोभिरभज्यमानम् ।
तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥४१॥

---

स्नायवः देहान्तर्गतिनाडीविशेषः वसाश्च तासाम् अवशेषः अवशिष्टांशः तेन मलिनं निर्मांसं मांसहीनम् अपि अस्थिकं लब्ध्वा आसाद्य परितोषं तृप्तिम् एति गच्छति तत् अस्थि तस्य क्षुधाशान्तये न भवति, इति शेषः । सिंहः अङ्क क्रोडम् आगतं निकटस्थम् अपि जम्बुकं शृगालं त्यक्त्वा द्विपाय द्विपं हस्तिनं निहन्ति । सर्वो जनः कृच्छ्रगतो-ऽपि कष्टं भुञ्जानोऽपि सत्त्वानुरूपं फलं वाञ्छति प्रार्थयते ।

(ज) अन्तरं—प्रभेदः ।

(४०) लाङ्गूलेति । लाङ्गूलस्य चालनं सञ्चालनम् अधः अधोभागे चरणयोः अवपातः क्षेपणं भूमौ भूतले निपत्य पतित्वा वदनोदरदर्शनञ्च तस्य पिण्डदस्य अन्नदातुः समीपे कुरुते गजपुङ्गवः गजेन्द्रस्तु धीरं गभीरं विलोकयति पिण्डदमिति शेषः चाटुशतैः बहुविधैः प्रियवचनैः भुङ्क्ते भोज्य वस्तूनि इति शेषः ।

(४१) यदिति । विज्ञानविक्रमयशोभिः विज्ञानं दर्शनशास्त्राभि-ज्ञता विक्रमः पराक्रमः यशः कीर्तिः तैः अभज्यमानम् अभिद्यमानं

अपरञ्च, अहितहितविचारशून्यबुद्धेः

श्रुतिविषयैर्बहुभिर्बहिष्कृतस्य ।

उदरभरणमात्रकेवलेच्छोः

पुरुषपशोश्च पशोश्च को विशेषः" ? ॥ ४२ ॥

करटको ब्रूते, "आवां तावदप्रधानौ तदावयोः किमनया विचारणया ?" (झ) । दमनकः पुनराह, "कियता कालेन (ञ) अमात्यः (ट) प्रधानतामप्रधानतां वा लभेत ?

---

तैराम्नातम् इत्यर्थः । अतएव प्रथितं विख्यातं सत् मनुष्यैर्यत् जीव्यते तदेव तत् जीवनमेव इह जगति तज्ज्ञाः विज्ञानादिविदः पण्डिताः जीवनं प्रशस्तजीवनं प्रवदन्ति कथयन्ति । काकोऽपि जीवति प्राणिति चिराय यावज्जीवं बलिम् आहारञ्च भुङ्क्ते खादति । आहारमात्रं न जीवनफलमिति भावः ।

(४२) अहितेति । अहितञ्च हितञ्च अहितहिते सदसती तयोः विचारे विवेके शून्या हीना बुद्धिर्यस्य हिताहितविवेकशून्यस्य बहुभिः बहुविधैः श्रुतिविषयैः शास्त्रज्ञानैः बहिष्कृतस्य रहितस्य उदरभरणमात्रकेवलेच्छोः केवलम् उदरपूरणपरायणस्य पुरुषपशोः पशुवत् पुरुषस्य पशोश्च छागादेश्च विशेषः कः विशेषः प्रभेदः । शास्त्रज्ञानविहीनः उदरभरणमात्रार्थी पुरुषः पशुरेवेत्यर्थः ।

(झ) अनया विचारणया—अनेन नीतिशास्त्रानुयायिना स्वामिचेष्टानिरूपणेन ।

(ञ) कियता कालेन—कियन्तं कालं यावत् प्रभुसेवां कृत्वेत्यर्थः ।

(ट) प्रधानतामप्रधानतां वा लभेत—अमात्यानां प्राधान्यलाभः बहुकालसेवासाध्य इत्यर्थः ।

यतः,

न कस्यचित् कश्चिदिह स्वभावाद्भवत्युदारोऽभिमतः खलो वा।
लोके गुरुत्वं विपरीततां वा स्वचेष्टितान्येव नरं नयन्ति ॥ ४३ ॥

किञ्च, आरोप्यते शिला शैले यत्नेन महता यथा।
निपात्यते क्षणेनाधस्तथात्मा गुणदोषयोः ॥ ४४ ॥

तद्भद्र ! (ठ) स्वयत्नायत्ता हि आत्मा सर्वस्य।
यात्यधोऽधो व्रजत्युच्चैर्नरः स्वैरेव कर्म्मभिः।
कूपस्य खनिता यद्वत् प्राकारस्येव कारकः ॥ ४५ ॥

---

(४३) नेति। इह जगति कश्चित् जनः कस्यचित् जनस्य स्वभावात् जन्मनैव न उदारः औदार्य्यगुणयुक्तः अभिमतः प्रियः खलः क्रूरो वा भवति। लोके जगति स्वचेष्टितानि स्वव्यापारा एव नरं गुरुत्वं श्रेष्ठत्वं वा अथवा विपरीततां लघुत्वं नयन्ति प्रापयन्ति। स्वकार्य्यानुसारेणैव नराः प्राधान्यम् अप्राधान्यं वा लभन्ते इत्यर्थः।

(४४) आरोप्यत इति। यथा येन प्रकारेण शिला प्रस्तरः महता यत्नेन बह्वायासेन शैले पर्वते आरोप्यते उत्थाप्यते क्षणेन अल्पकालेन अनायासेनेत्यर्थः अधः निम्ने निपात्यते तथा आत्मा मानवचित्तवृत्तिः गुणदोषयोः आरोप्यते निपात्यते च। आत्मनः उन्नतिरायाससाध्या अवनतिश्च क्षणादेव भवतीत्यर्थः।

(ठ) स्वयत्नायत्तः—स्वस्य यत्नः चेष्टा तस्य आयत्तः अधीनः। स्वचेष्टानुसारेणैव आत्मनः उन्नतिरवनतिर्वा भवति इत्यर्थः।

(४५) यातीति। नरः मनुष्यः स्वैः स्वकीयैरेव कर्म्मभिः चेष्टाभिः अधोऽधः क्रमशः निम्नं याति गच्छति उच्चैः उन्नतिं वा व्रजति लभते। क इवेत्याह, कूपस्य खनिता यद्वत् यथा यथा वा प्राकारस्य प्राचीरस्य कारकः निर्म्माणकारी इव।

करटको वदति, (ड) "अथ भवान् किं ब्रवीति?" दमनक आह, "अयं तावत् स्वामी पिङ्गलकः पानीयमपीत्वा (ढ) कुतोऽपि भयात् सचकितं परिवृत्त्योपविष्टः"। करटको ब्रूते, "किं तत्त्वं जानासि?" दमनको वदति, "किं (ण) प्रज्ञावतामविदितमस्ति? (त)।

उक्तञ्च, उदीरितोऽर्थः पशुनाऽपि गृह्यते

हयाश्च नागाश्च वहन्ति देशिताः।

अनुक्तमप्यूहति पण्डितो जनः

परेङ्गितज्ञानफला हि बुद्धयः॥ ४६॥

अपिच, आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च।

नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मनः॥ ४७॥

---

(ड) अथ—प्रश्ने।

(ढ) कुतोऽपि भयात्—कस्मादपि जन्तोर्भयेन।

(ण) प्रज्ञावतां—बुद्धिमतां।

(त) अविदितम्—अपरिज्ञातम्।

(४६) उदीरितः सम्यक् बोधितः अर्थः पशुनापि अज्ञानेनापि गृह्यते बुध्यते हयाः अश्वाः नागाः हस्तिनश्च देशिताः आदेशिताः चालिता इति यावत् चालकेनेति शेषः वहन्ति नयन्ति भारमिति शेषः। पण्डितो जनः विद्वान् जनः अनुक्तम् अकथितम् अपि ऊहतमपि भावमित्यर्थः ऊहति तर्केण जानाति। हि तथाहि बुद्धयः मतयः परेषाम् इङ्गितं हृद्गतो भावः तस्य ज्ञानम् अवबोधः तदेव फलं यासां ताः। येन बुद्धिः प्रशस्ता, यया अन्येषां मनोगतं परिज्ञातुं शक्यते इति भावः।

(४७) आकारैरिति। आकारैः मुखरागादिभिः इङ्गितैः हृदयस्थितभावैः गत्या गमनेन चेष्टया व्यापारेण भाषणेन च कथनेन च

तदत्र (थ) भयप्रस्तावेऽहमेनं (द) प्रज्ञाबलेनात्मीयं (ध) करिष्यामि।

यतः, प्रस्तावसदृशं वाक्यं सद्भावसदृशं प्रियम्।
आत्मशक्तिसमं कोपं यो जानाति स पण्डितः ॥४८॥

करटको वदति, "सखे! त्वं (न) सेवानभिज्ञः।

पश्य, अनाहूतो विशेद्यस्तु अपृष्टो बहु भाषते।
आत्मना मन्यते प्रीतो भूपालो वै स दुर्मतिः ॥४९॥

दमनको ब्रूते, "भद्र! कथमहं सेवानभिज्ञः?

पश्य, किमप्यस्ति स्वभावेन सुन्दरं वाप्यसुन्दरम्।
यदेव रोचते यस्मै भवेत् तत्तस्य सुन्दरम् ॥५०॥

---

नेत्रस्य वक्त्रस्य तयोर्विकारः तेन दृष्टिपातप्रकारात् मुखभङ्ग्या च अन्तर्गतं मनः अन्येषां हृदयस्थितः भावः लक्ष्यते ज्ञायते।

(थ) भयप्रस्तावे—भीतिप्रसङ्गे उपस्थितभयविषये।

(द) प्रज्ञाबलेन—बुद्धिप्रभावेण।

(ध) आत्मीयम्—स्वायत्तं मद्वश्यतापन्नम्।

(४८) प्रस्तावेति। यो जनः प्रस्तावसदृशं प्रसङ्गानुरूपं वाक्यं वचनं सद्भावसदृशं प्रणयानुरूपं प्रियं सुहृदं येन यादृशः प्रणयः तं तादृशं न तस्मादधिकं न्यूनं वेत्यर्थः। आत्मनः शक्त्या सामर्थ्येन समं सदृशं कोपं क्रोधं जानाति अवगच्छति स पण्डितः विद्वान् प्राज्ञ इति यावत्।

(न) सेवानभिज्ञः—स्वामिसेवां कर्त्तुं न जानासीत्यर्थः।

(४९) स जनः दुर्मतिः दुर्भाग्यशाली भवेत् यः अनाहूतः अनाकारितः सन् भूपालस्य सभायां विशेत् तथा अपृष्टः अजिज्ञासितः सन् बहु अनर्थकं यथा तथा भाषते। तथा आत्मना स्वेन भूपालः नरपतिः प्रीतः प्रसन्नतामापन्नः मन्यते बुध्यते।

(५०) किमिति। किमपि किञ्चिदपि वस्तु स्वभावेन प्रकृत्या सुन्दरं

अपरञ्च, यस्य यस्य हि यो भावस्तेन तेन हि तं नरम् ।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ ५१ ॥
अन्यच्च, कोऽत्रेत्यहमिति ब्रूयात् सम्यगादेशयेति च ।
आज्ञामवितथां कुर्य्यात् यथाशक्ति महीपतेः ॥५२॥
किञ्च, अल्पेच्छुर्धृतिमान् प्राज्ञश्छायेवानुगतः सदा ।
आदिष्टो न विकल्पेत स राजवसतिं वसेत्" ॥५३॥
करटको ब्रूते, "कदाचित् (च) त्वामनवसरप्रवेशाद्व·

---

मनोरमं वा अथवा असुन्दरम् अप्रीतिकरम् अपि अस्ति । यद्येव वस्तु यस्मै रोचते यत् यं प्रीणयति तत् वस्तु तस्य जनस्य सुन्दरं कुत्सितमपि मनोहरं भवेत् । भिन्नरुचिर्हि लोक इति भावः ।

(५१) यस्येति । यस्य यस्य जनस्य यो यादृशः भावः अभिप्रायः तेन तेन भावेन हि निश्चितं तं नरम् अनुप्रविश्य तस्य मानसं परिज्ञायेत्यर्थः, मेधावी बुद्धिमान् जनः आत्मवशं स्वायत्तं नयेत् प्रापयेत् चित्तानुयायिकार्य्यकरणेन वशं कुर्य्यादित्यर्थः ।

(५२) क इति । अत्र स्थाने कः तिष्ठतीति शेषः इति पृष्टः सन्निति अर्थः अहमिति, अहमस्मीति सम्यक् समीचीनम् आदेशय आदेशं कुरु समादिशेति च ब्रूयात् कथयेत् सेवक इति शेषः । यथाशक्ति साध्यानुसारेण महीपतेः राज्ञः आज्ञां नियोगम् अवितथां सफलां कुर्य्यात् आदेशानन्तरमेव कार्य्यं साधयेत् इत्यर्थः। एष एव सेवकधर्म इति भावः।

(५३) अल्पेति । यः अल्पेच्छुः अलुब्धः धृतिमान् धैर्य्यशीलः प्राज्ञः बुद्धिमान् छाया इव स्वप्रतिबिम्बमिव सदा नित्यम् अनुगतः अनुगामी आदिष्टः किमपि कार्य्यं साधयितुमाज्ञप्तः सन् न विकल्पेत वितर्कयेत् अवितर्क्यैव आदेशप्रतिपालने तत्परः स तादृशः सेवकः राजवसतिं राजाश्रयं वसेत् । ईदृश एव जनः राजसन्निधौ स्थातुमर्हतीत्यर्थः ।

(च) अनवसरप्रवेशात्—असमये समीपगमनात् ।

मन्यते स्वामी"। दमनक आह, "अस्त्वेवम्। (फ) तथाप्यनुजीविना (ब) सान्निध्यमवश्यं करणीयम्।

यतः, दोषभीतेरनारम्भः कापुरुषस्य लक्षणम्।

कैरजीर्णभयाद् भ्रातः! भोजनं परिहीयते ॥५४॥

पश्य, आसन्नमेव नृपतिर्भजते मनुष्यं

विद्याविहीनमकुलीनमसङ्गतं वा।

प्रायेण भूमिपतयः प्रमदा लताश्च

यः पार्श्वतो वसति तं परिवेष्टयन्ति" ॥५५॥

करटको ब्रूते, "अथ तत्र गत्वा किं वक्ष्यसि ?" दमनक आह, "शृणु किमनुरक्तो विरक्तो वा मयि स्वामीति ?

---

(फ) तथापि—स्वामिसकाशाद्‌पमानाशङ्कायां सत्यामपि।

(ब) सान्निध्यम्—सन्निधौ अवस्थानम्।

(५४) दोष इति। दोषभीतेः अकृतकार्य्यतायाः भयात् अनारम्भः कार्य्ये अनुद्योगः कापुरुषस्य पुरुषकारहीनस्य लक्षणं चिह्नं कापुरुषा एव दोषमाशङ्क्य कार्य्यसाधने विमुखा भवन्तीत्यर्थः। हे भ्रातः! करटक! अजीर्णभयात् खाद्यमिदं पच्यते न वेति भयेन कैर्जनैः भोजनम् आहारः परिहीयते त्यज्यते न कैरपीत्यर्थः।

(५५) आसन्नेति। नृपतिः राजा आसन्नं सदा पार्श्ववर्त्तिनम् एव विद्याहीनं मूर्खम् अकुलीनम् असद्वंशजातम् असङ्गतं विद्वेषभाजं वा मनुष्यं नरं भजते आश्रयति प्रसन्नेन चेतसा आद्रियते अनुगृह्णातीति यावत्। भूमिपतयः राजानः प्रमदाः नार्य्यः लताश्च प्रायेण भूम्ना बाहुल्येनेति यावत् यः पार्श्वतः पार्श्वे वसति तिष्ठति तं जनं परिवेष्टयन्ति अवलम्बन्ते अतः सर्वथा राजसान्निध्यं कर्त्तव्यमिति भावः।

ज्ञास्यते तावत्"। करटको ब्रूते, "किं (भ) तज्ज्ञानलक्षणम्?" दमनको ब्रूते, "शृणु,

दूरादवेक्षणं हासः सम्प्रश्ने सादरो भृशम्।
परोक्षेऽपि गुणश्लाघा स्मरणं प्रियवस्तुषु॥ ५६॥
तत्सेवकेऽनुरक्तिश्च दानं प्रीतिविवर्द्धनम्।
सुरक्तेश्वरचिह्नानि दोषेऽपि गुणसंग्रहः॥ ५७॥
कालयापनमाशानां वर्द्धनं फलखण्डनम्।
विरक्तेश्वरचिह्नानि जानीयान्मतिमान् नरः॥ ५८॥

---

(भ) तज्ज्ञानलक्षणम्—तयोरनुरागविरागयोः ज्ञानं बोधः तस्य लक्षणं चिह्नम्।

(५६) दूरादिति। दूरात् अनुरक्ते दूरवर्त्तिनि सति अवेक्षणं साभिलाषो दृष्टिपातः हासः हास्यं संप्रश्ने शुभवार्त्ता जिज्ञासायां समीपस्थे इति भावः भृशम् अतिशयः आदरः आग्रहप्रकाशनं परोक्षेऽपि असङ्गेऽपि गुणश्लाघा गुणप्रशंसा प्रियवस्तुषु अभिमतवस्तुषु दृष्टेष्वित्यर्थः। स्मरणं स्मृतिः अनुरक्तस्येति शेषः।

(५७) तदिति। तत्सेवके तस्मिन् सेवके अनुरक्तिः अनुरागः आनुकूल्यमिति यावत् दानं धनादीनां वितरणं प्रीतिविवर्द्धनं सन्तोषवृद्धिः दोषेऽपि गुणसंग्रहः गुणग्रहणम् एतानि सुरक्तेश्वरचिह्नानि अनुरक्तस्य प्रभोः लक्षणानि।

(५८) कालयापनमिति। कालयापनम् अनुग्रहप्रदर्शने समयातिपातः आशानां वर्द्धनं तदनुयायि कार्य्यमकृत्वा प्रत्यहमाशाप्रदानमित्यर्थः। फलखण्डनम् आशानुगतस्य वस्तुनः अप्रदानम् एतानि मतिमान् बुद्धिमान् जनः विरक्तेश्वरचिह्नानि विरक्तस्य विद्वेषभावापन्नस्य स्वामिनः लक्षणानि जानीयात् बुध्येत।

एतज्ज्ञात्वा(म)यथा चायं ममायत्तो भविष्यति, तद्वक्ष्यामि।
यथा, अपायसन्दर्शनजां विपत्तिमुपायसन्दर्शनजां च सिद्धिम्।
मेधाविनो नीतिविधिप्रयुक्तां पुरः स्फुरन्तीमिव दर्शयन्ति॥ ५९

अपरञ्च,

दोषा गुणा, गुणा दोषा, दोषा दोषा, गुणा गुणाः।
रक्ते, विरक्ते मध्यस्थे, स्वामिनि त्रिविधा गुणाः" ॥६०॥

करटको ब्रूते, "तथाप्यप्राप्ते प्रस्तावे(य) न वक्तुमर्हसि।

---

(म) यथा चायं ममायत्तो भविष्यति—यथा येन प्रकारेण अयं स्वामी मम आयत्तः अधीनः भविष्यति मद्वचनमनुसृत्यैव सर्वं कार्य्यम् अनुष्ठास्यतीत्यर्थः।

(५९) अपायमिति। मेधाविनः पण्डिताः नीतिविधिप्रयुक्तां नीतिशास्त्रोक्ताम् अपायस्य अनिष्टस्य दर्शनात् संघटनात् जायते या तां तथोक्तां कुपथावलम्बनेन अनिष्टजन्यामित्यर्थः विपत्तिं विपदम् उपायसन्दर्शनजां प्रतीकारसङ्घटनजां सिद्धिं कार्य्यसाधनं पुरः समीपे नेत्रोपरीत्यर्थः स्फुरन्तीमिव आविर्भवन्तीमिव दर्शयन्ति प्रमाणयन्ति।

(६०) दोषा इति। स्वामिनि प्रभौ रक्ते अनुरागवति विरक्ते असन्तुष्टे मध्यस्थे अपक्षपातिनि नापि विरक्ते नाप्यनुरक्ते इत्यर्थः त्रिविधाः त्रिप्रकाराः गुणाः भावाः भवन्ति इति शेषः कीदृशास्ते इत्याह दोषाः सर्वत्र अपीत्यर्थः गुणाः गुणवत् प्रतीताः गुणाः विद्यायत्नादयः दोषाः दोषसमानाः दोषाः दोषा एव गुणाः गुणा एव यथाक्रमेण जायन्ते अनुरक्ते दोषा अपि गुणाः विरक्ते गुणा एव दोषाः इति स्वामिनः त्रिविधास्तु व्यवस्थासु त्रिविधं भृत्यस्य दोषगुणयोस्तारतम्यं भवेदित्यर्थः।

(य) अप्राप्ते प्रस्तावे—अनुपस्थिते प्रसङ्गे वचनावसरे अनुपस्थिते सतीत्यर्थः।

यतः, अप्राप्तकालवचनं बृहस्पतिरपि ब्रुवन् ।
प्राप्नुयाद् बुद्ध्यवज्ञानमपमानं च शाश्वतम्" ॥६१॥

दमनको ब्रूते, "मित्र ! मा भैषीः नाहमप्राप्ताव-सरवचनं वक्ष्यामि ।

यतः आपद्युन्मार्गगमने कार्य्यकालात्ययेषु च ।
अपृष्टेनापि वक्तव्यं भृत्येन हितमिच्छता ॥६२॥

यदि च (र) प्राप्तावसरोऽपि मन्त्रो मया न वक्तव्यस्तदा मन्त्रित्वमेव मम (ल) अनुपपन्नम् ।

यतः, कल्पयति येन वृत्तं येन च लोके प्रशस्यते सद्भिः ।
स गुणस्तेन च गुणिना रक्ष्यः संवर्द्धनीयश्च ॥६३॥

---

(६०) अप्राप्तेति । अप्राप्तः अनुपस्थितः कालः अवसरः यस्य तत् तादृशं वचनं ब्रुवन् कथयन् बृहस्पतिः देवगुरुः अपि नीतिशास्त्र-प्रणेतापीत्यर्थः बुद्ध्यवज्ञानं बुद्धिनाशशङ्काकृपामवमाननां शाश्वतं नित्यं चिरायेत्यर्थः अपमानञ्च अवसरानभिज्ञत्वदोषञ्च प्राप्नुयात् लभेत ।

(६२) आपदिति । आपदि विपत्तिकाले उन्मार्गगमने असत्पथाव-लम्बने कार्य्यकालस्य कार्य्यसमयस्य अत्ययेषु नाशेषु च हितम् इच्छता स्वामिशुभकामेन भृत्येन अपृष्टेनापि अजिज्ञासितेनापि अनवसरेऽपि इत्यर्थः वक्तव्यं हितमिति शेषः ।

(र) प्राप्तावसरः—प्राप्तकालः ।

(ल) अनुपपन्नम्—अनुपयुक्तं विफलमित्यर्थः ।

(६३) कल्पयतीति । येन गुणेन वृत्तं चरितं कल्पयति जानाति येन च गुणेन लोके जगति सद्भिः साधुभिः प्रशस्यते समाद्रियते लोक इति कर्मपदमूह्यम् । स तादृशः एव गुणः गुणत्वेन परिगणितः तेन हेतुना गुणिना गुणवता जनेन स गुणः रक्ष्यः सर्वप्रयत्नेन रक्षणीयः संवर्द्धनीयश्च वृद्धिं प्रापणीयश्च ।

भद्र ! अनुजानीहि पिङ्गलकसमीपमहं गच्छामि"।
करटको ब्रूते, "शुभमस्तु (व) यथाभिप्रेतमनुष्ठीयताम् ।

गम्यतामर्थलाभाय क्षेमाय विजयाय च ।
शत्रुपक्षविनाशाय पुनरागमनाय च" ॥ ६४ ॥

ततो दमनको (श) विस्मित इव पिङ्गलकसमीपं गतः ।
अथ दूरादेव राज्ञा दृष्टः सादरं प्रवेशितस्तं साष्टाङ्गं प्रणम्योपविष्टः । राजाह च "चिराद्दृष्टोऽसि"। दमनको ब्रूते, "यद्यपि मया सेवकेन श्रीमद्देवपादानां न किञ्चित् प्रयोजनमस्ति, तथापि (स) प्राप्तकाले (ह) अनुजीविना (क) सान्निध्यमवश्यं कर्त्तव्यमित्यागतोऽस्मि ।

दन्तस्य निर्घर्षणकेन राजन् कर्णस्य कण्डूयनकेन वाऽपि ।
तृणेन कार्य्यं भवतीश्वराणां किमङ्गवाक्पाणिमता नरेण॥६५

---

(व) यथाभिप्रेतम् अनुष्ठीयतां—यथाभिलषितं विधीयताम् ।

(६४) गम्यतामिति । अर्थलाभाय धनसंग्रहार्थं क्षेमाय श्रेयसे विजयाय कार्य्यसिद्धये शत्रुपक्षविनाशाय शत्रुपक्षपराभवार्थं पुनरागमनाय इहैव स्थाने पुनः प्रत्यागमनाय च गम्यतां त्वयेति शेषः । सर्वथा तेऽभीष्टसिद्धिर्भवतु इत्यर्थः ।

(श) विस्मित इव—विस्मयाविष्ट इव ।

(ष) चिरात्—बहोः कालात् परम् ।

(स) प्राप्तकाले—सान्निध्योचितसमये ।

(ह) अनुजीविना—अनु जीवितुम् आश्रयितुं शीलमस्य । अनु + जीव + णिनि । सेवकेन भृत्येन ।

(क) सान्निध्यं—सन्निधौ अवस्थानम् ।

(६५) दन्तस्येति । हे राजन् ! दन्तस्य निर्घर्षणकेन दन्तघर्षणार्थं

यद्यपि स्वामिना (ख) चिरावधीरितस्य मे बुद्धिविनाशः शङ्क्यते तदपि न ।

मणिर्लुठति पादेषु काचः शिरसि धार्य्यते ।
क्रयविक्रयवेलायां काचः काचो मणिर्मणिः ॥ ६६ ॥

अन्यच्च, कदर्थितस्यापि च धैर्य्यवृत्ते-
बुद्धेर्विनाशो न हि शङ्कनीयः ।
अधः कृतस्यापि तनूनपातो
नाधःशिखो याति कदाचिदेव ॥ ६७ ॥

---

काष्ठेन कर्णस्य श्रवणस्य कण्डूयनकेन कण्डूतिनिवृत्त्यर्थं व्यवहृतेन तृणेन खड़िकादिनापि ईश्वराणां प्रभूणां कार्य्यं भवति अङ्गवाक्-पाणिमता अविकलाङ्गेन वाक्शक्तियुक्तेन हस्तवता च नरेण किं किमु वक्तव्यं ? कार्य्यं भवत्येवेत्यर्थः ।

(ख) चिरावधीरितस्य—बहुदिनं यावत् नीचपदे संस्थाप्य अवमानितस्य ।

(६६) मणिरिति । मणिः पादेषु लुठति पादाभरणेषु दीयते इत्यर्थः । काचः शिरसि धार्य्यते शिरोभूषणेषु व्यवह्रियते किन्तु क्रयविक्रयवेलायां क्रयस्य मूल्यदानपूर्वकग्रहणस्य विक्रयस्य मूल्यदानपूर्वकार्पणस्य समये उपस्थिते सतीत्यर्थः, काचः काचः काचोचितमूल्यवान् मणिः मणिः रत्नोचितमूल्यवानित्यर्थः । काचः काचत्वेन मणिः मणित्वेन गृह्यते इति भावः ।

(६७) कदर्थीति । कदर्थितस्य अवज्ञातस्यापि धैर्य्यवृत्तेः धैर्य्यशीलस्य स्वामिकृतमपमानमुपेक्षमाणस्य बुद्धेर्विनाशः बुद्धिहानिः न हि निश्चितं न शङ्कनीयः अनुमातव्यः । तथाहि अधःकृतस्य अधोमुखतस्यापि तनूनपातः वह्नेः [ तनूं न पातयति । पत+णिच्+क्विप् । ] अग्नौ,

देव ! सर्वथा (ग) विशेषज्ञेन स्वामिना भवितव्यम्।
यतः, निर्विशेषं यदा राजा समं सर्वेषु वर्त्तते।
तदोद्यमसमर्थानामुत्साहः परिहन्यते ॥ ६८ ॥
किञ्च, त्रिविधाः पुरुषा राजन् ! उत्तमाधममध्यमाः।
नियोजयेत् तथैवैतांस्त्रिविधेष्वेव कर्मसु ॥ ६९ ॥
यतः, स्थान एव हि युज्यन्ते भृत्याश्चाभरणानि च।
न हि चूड़ामणिः पादे नूपुरो न च मूर्द्धनि ॥ ७० ॥

---

जठरस्थोऽपि भुक्तान्नपाचनादस्य देहापातकत्वम् सिद्धम्। शिखा ज्वाला कदाचिदेव कर्हिचिदेव न कथमपीत्यर्थः। अधो याति अधो गच्छति। प्रत्युत ऊर्द्ध मुज्ज्वलतीत्यर्थः।

(ग) विशेषज्ञेन—गुणपक्षपातिना।

(६८) निर्विशेषमिति। यदा यस्मिन् समये राजा निर्विशेषम् अन्यूनातिरिक्तं यथा तथा गुणागुणाविचार्य्येत्यर्थः, सर्वेषु जनेषु समं समानं वर्त्तते आचरति तदा उद्यमसमर्थानां कार्य्यक्षमाणाम् उत्साहः यत्नः परिहन्यते व्याहन्यते विनाश्यते इति यावत् गुणेषु गौरवाभावादिति भावः।

(६९) त्रिविधा इति। हे राजन् ! उत्तमाधममध्यमाः त्रिविधाः त्रिप्रकाराः पुरुषाः सन्ति तथैव उत्तमाधममध्यमत्वविचारेणैव एतान् त्रिविधान् पुरुषान् त्रिविधेषु त्रिप्रकारेषु उत्तमाधममध्यमेषु कर्मसु कार्य्येषु नियोजयेत् स्थापयेत्।

(७०) स्थान इति। भृत्याः सेवकाः आभरणानि रत्नादीनि अलङ्करणानि च हि निश्चितं स्थान एव यथोचितस्थाने विन्यस्तान्येव युज्यन्ते शोभन्ते। हि तथाहि चूड़ामणिः शिरोभूषणं मुकुटादि पादे

अपिच, कनकभूषणसंग्रहणोचितो
यदि मणिस्त्रपुणि प्रणिधीयते ।
न स विरौति न चापि स शोभते
भवति योजयितुर्वचनीयता ॥ ७१ ॥

अन्यच, मुकुटे रोपितः काचश्चरणाभरणे मणिः ।
न हि दोषो मणेरस्ति किन्तु साधोरविज्ञता ॥७२॥

यथ, बुद्धिमाननुरक्तोऽयमिहोभयगुणो जनः ।
इति भृत्यविचारज्ञो भृत्यैरापूर्य्यते नृपः ॥ ७३ ॥

---

चरणे न नूपुरः चरणाभरणविशेषः मूर्द्धनि मस्तके विन्यस्तः सन्नित्यर्थः न च शोभते ।

(७१) कनकेति । कनकभूषणसंग्रहणोचितः कनकभूषणे सुवर्णाभरणे संग्रहणं विन्यासः तस्मिन् उचितः युक्तः मणिः रत्नं यदि त्रपुणि सीसधातौ प्रणिधीयते संश्लिष्यते अलङ्कारकर्त्तृभिरिति शेषः तदा स मणिः न विरौति शब्दायते न चापि शोभते दर्शनीयो भवति प्रत्युत योजयितुः सीसधातौ निधापयितुरलङ्कारकर्त्तुः वचनीयता निन्दा भवति ।

(७२) मुकुटे इति । मुकुटे यदि काचः रोपितः निधापितः स्यात् चरणाभरणे पादभूषणे च यदि मणिः आरोपितः स्यात् तदा मणेः रत्नस्य दोषः निन्दा नास्ति किन्तु साधोः आरोपयितुः अविज्ञता अलङ्करणानभिज्ञता जायते इति शेषः ।

(७३) बुद्धिमानिति । इह जगति अयं जनः बुद्धिमान् प्राज्ञः अयम् अनुरक्तः प्रभुपरायणः अयम् उभयगुणः उभयौ बुद्धिमत्तानुरक्तत्वे गुणौ यस्य सः बुद्धिमान् अनुरक्तश्चेत्यर्थः इति एवं भृत्यविचा-

तथाहि, अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च ।
प्राप्य मनुष्यविशेषं भवन्ति योग्या अयोग्याश्च ॥७४॥

अन्यच्च, किं भक्तेनासमर्थेन किं शक्तेनापकारिणा ।
भक्तं शक्तं च मां राजन् ! नावज्ञातुं त्वमर्हसि ॥७५॥

यतः, अवज्ञानाद्राज्ञो भवति मतिहीनः परिजन-
स्ततस्तत्प्राधान्याद्भवति न समीपे बुधजनः ।
बुधैस्त्यक्ते राज्ये न हि भवति नीतिर्गुणवती
विपन्नायां नीतौ सकलमवशं सीदति जगत् ॥७६॥

---

रज्ञः भृत्यगुणागुणविचारे निपुणः नृपः भृत्यैः गुणवद्भिरिति भावः आपूर्य्यते आकीर्य्यते परिवार्य्यते इति यावत्, अनेके तादृशं प्रभुं सेवितुमिच्छन्तीत्यर्थः ।

(७४) अश्व इति । अश्वः घोटकः वाहन इत्यर्थः शस्त्रं तरवारादि शास्त्रं स्मृत्यादि वीणा वाद्यविशेषः वादनयन्त्रम् इत्यर्थः वाणी वाक्यं नरश्च नारी च एते पूर्वोक्ताः सप्त मनुष्यविशेषं गुणवन्तमगुणवन्तमाश्रयं प्राप्य योग्याः कार्य्यक्षमाः अयोग्याः कार्य्याक्षमाः अपि भवन्ति ।

(७५) किमिति । असमर्थेन अशक्तेन भक्तेन प्रभुपरायणेन जने । किं किं प्रयोजनम् अनुरक्तिमात्रेण न कार्य्यसिद्धिर्जायते इत्यर्थः अपकारिणा विद्वेषवता शक्तेन कार्य्यदक्षेण वा किं किं प्रयोजनम् । हे राजन् ! त्वं भक्तम् अनुरक्तं शक्तं कार्य्यसाधननिपुणं माम् अवज्ञातुम् अवधीरितुं न अर्हसि ।

(७६) अवज्ञानादिति । राज्ञः नृपतेः अवज्ञानात् अवधीरणया परिजनः तदाश्रितो लोकः मतिहीनः बुद्धिभ्रष्टः भवति । ततः अनन्तरं तत्प्राधान्यात् मूर्खस्य प्राधान्यलाभेन बुधजनः पण्डितः समीपे समक्षे न भवति तिष्ठति बुधैः पण्डितैस्त्यक्ते परिहीने राज्ये राष्ट्रे

अपरञ्च देव !

जनं जनपदा नित्यमर्चयन्ति नृपार्चितम् ।
नृपेणावमतो यस्तु स सर्वैरवमन्यते ॥ ७७ ॥

किञ्च, बालादपि ग्रहीतव्यं युक्तमुक्तं मनीषिभिः ।
रवेरविषये किं न प्रदीपस्य प्रकाशनम्” ? ॥ ७८ ॥

पिङ्गलको ब्रूते, “भद्र ! दमनक ! किमेतत् ? त्वमस्माकं प्रधानामात्यपुत्रः सुधीरियत्कालं नीत्वा (घ) कुतोऽपि (ङ)पिशुनवचनादागतोऽसि ? इदानीं यथाभिमतं ब्रूहि ।” दमनको ब्रूते, “देव ! पृच्छामि, किञ्चिदुच्यताम् । उदकार्थी स्वामी पानीयमपीत्वा किमिति विस्मित इवावतिष्ठते ?” पिङ्गलकोऽवदत्, “भद्रमुक्तं त्वया, किन्तु एतद्रहस्यं वक्तुमस्माकं विश्वासभूमिरस्ति न कोऽपि ? त्वं तु (च) तद्विधस्ततः

---

गुणवतो गुणयुक्ता निर्दोषेति यावत् नीतिर्नयः न हि भवति नीतौ राजनियमे विपन्नायां सत्यां सकलं जगत् सीदति अवसन्नं भवति ।

(७७) जनमिति । जनपदाः जनपदवासिनो लोकाः नित्यं सर्वदा नृपार्चितं नृपसम्मानितं जनम् अर्च्चयन्ति संमन्यन्ते । यस्तु जनः नृपेण अवमतः स जनः सर्वैः अवमन्यते अवज्ञायते ।

(७८) बालादिति । मनीषिभिः स्थिरधीभिः विद्वद्भिरिति यावत् बालादपि बालकादपि युक्तं युक्तियुक्तम् उक्तं वचः ग्रहीतव्यं ग्रहणीयम् । अत्र दृष्टान्तमाह, रवेः सूर्य्यस्य उदये प्रकाशे सति प्रदीपस्य किं न प्रकाशनं दीप्तिर्भवतीति शेषः ।

(घ) इयत्कालं नीत्वा—एतावन्तं कालं ममाश्रये स्थित्वा ।

(ङ) पिशुनवचनात्—खलस्य परामर्शेन ।

(च) तद्विधः—विश्वासभूमिः ।

शृणु कथयामि, "सम्प्रति वनमिदमपूर्वसत्त्वाधिष्ठितम्, (छ) अतोऽस्माकं त्याज्यम्। तथाच श्रुतस्तथाप्यपूर्वः (ज) शब्दो महान्, शब्दानुरूपेण च तस्य प्राणिनो बलेनापि सुमहता भवितव्यम्"। दमनको ब्रूते, "देव! अस्ति तावदयं महान् भयहेतुः, शब्दोऽस्माभिरप्याकर्णितः। किन्तु स किं मन्त्री यः प्रथमं मन्त्राभावेन भूपतिं परित्यागं युद्धोद्यमं वोपदिशति? अपरं च देव! अस्मिन् कार्य्यसन्देहे (झ) भृत्यानामुपयोग (ञ) एव ज्ञातव्यः।
यतः, बन्धुस्त्रीभृत्यवर्गस्य बुद्धेः सत्त्वस्य चात्मनः।

आपन्निकषपाषाणे नरो जानाति सारताम्" ॥७९॥

सिंहो ब्रूते, "भद्र! महती शङ्का मां बाधते" (ट)। दमनकः स्वगतमाह, अन्यथा राज्यसुखं परित्यज्य

---

(छ) अपूर्वसत्त्वाधिष्ठितम्—अपूर्वम् अश्रुतपूर्वम् अदृष्टपूर्वञ्च यत् सत्त्वं जन्तुः तेन अधिष्ठितम् अधिकृतम्।

(ज) अपूर्वः—अश्रुतपूर्वः।

(झ) कार्य्यसन्देहे—कर्त्तव्यावधारणसंशये।

(ञ) उपयोगः—कार्य्यसाधननैपुण्यम्।

(७९) बन्धुस्त्रीति। बन्धवः मित्राणि स्त्रियः नार्य्यः भृत्याः अनुजीविनः तेषां वर्गः समूहस्तस्य आत्मनः स्वस्य बुद्धेः बोधशक्तेः सत्त्वस्य बलस्य च सारताम् उत्कर्षं नरः आपन्निकषपाषाणे आपद्रूपपरीक्षणप्रस्तरे जानाति परीक्षते, आपद्येव एषाम् अनुरक्तत्वं विरक्तत्वं बुध्यते इत्यर्थः।

(ट) महती शङ्का मां बाधते—अत्यर्थं भयकातरोऽस्मीत्यर्थः।

स्थानान्तरं गन्तुं कथं मां सम्भाषसे? प्रकाशं ब्रूते, "देव! यावदहं जीवामि, तावद्भयं न कर्त्तव्यम्। किन्तु करटकादयोऽपि समाश्वास्यन्ताम्। यस्मादापत्प्रतीकाराय दुर्लभः पुरुषसमवायः (ठ)।" ततस्तौ दमनककरटकौ राज्ञा महाप्रसादेन पूजितौ भयप्रतीकारं प्रतिज्ञाय चलितौ। करटको गच्छन् दमनकमाह, "सखे! किं (ड) शक्यप्रतीकारोऽयं भयहेतुरशक्यप्रतीकारो वेति न ज्ञात्वा भयोपशमं प्रतिज्ञाय कथमयं महाप्रसादो (ढ) गृहीतः? यतोऽनुपकुर्वाणो (ण) न कस्यापि उपायनं गृह्णीयात्, विशेषतो राज्ञः।

पश्य, यस्य प्रसादे पद्मास्ते विजयश्च पराक्रमे।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः॥ ८०॥
यथाहि, बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।

---

(ठ) पुरुषसमवायः—सहायपुरुषसंहतिः सहायसंपद् इत्यर्थः।

(ड) शक्यप्रतीकारः—शक्यः कर्त्तुं पार्य्यः प्रतीकारः प्रतिविधानं यस्य सः।

(ढ) महाप्रसादः—सविशेष पुरस्कारः।

(ण) अनुपकुर्वाणः—उपकारमकृत्वेत्यर्थः।

(८०) यस्येति। यस्य राज्ञः प्रसादे अनुग्रहे पद्मा लक्ष्मीः आस्ते वसति पराक्रमे शौर्य्ये च विजयः जयलाभः क्रोधे मृत्युः मरणं वसति स्थिरः सः हि निश्चितं सर्वतेजोमयः सर्वतेजःसम्पन्नः। अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृप इति स्मरणादिति भावः।

(८१) बाल इति। बालोऽपि शिशुरपि भूमिपः राजा मनुष्य

महती देवता ह्येषा नररूपेण तिष्ठति" ॥ ८१ ॥

दमनको विहस्याह, "मित्र ! तूष्णीमास्यतां, ज्ञातं मया भयकारणं, बलीवर्द्देन नर्दितम् । वृषभाश्चास्माकं भक्ष्याः, किं पुनः सिंहस्य ?" करटको ब्रूते, "यद्येवं, तदा स्वामित्रासस्तत्रैव किं नापनीतः ? दमनकोऽवदत् यदि स्वामित्रासापनयनार्थं तत्रैवमुच्यते, तदा कथमयं मह्या-प्रसादलाभः स्यात् ?

अपरञ्च,

निरपेक्षो न कर्त्तव्यो भृत्यैः स्वामी कदाचन ।
निरपेक्षं प्रभुं कृत्वा भृत्यः स्याद्दधिकर्णवत् ॥ ८२ ॥

करटकः पृच्छति, कथमेतत् ? दमनकः कथयति, अस्त्युत्तरापथे (त) अर्बुदशिखरनाम्नि पर्वते महाविक्रमो नाम सिंहः । तस्य पर्वतकन्दरमधिशयानस्य केशराग्रं मूषिकः कश्चित् छिनत्ति । स सिंहः केशराग्रं लूनं (थ)

---

इति मनुष्यबोधेन न अवमन्तव्यः अवज्ञातव्यः । एषा राजरूपा महती प्रधाना देवता नररूपेण तिष्ठति पृथिवीं शास्ति, सुरेन्द्रमात्रा-श्रितत्वादिति भावः ।

(८२) निरपेक्षेति । भृत्यैः अनुजीविभिः स्वामी प्रभुः कदाचन कदाचिदपि निरपेक्षः भृत्यसाहाय्यानपेक्षी न कर्त्तव्यः न विधेयः । भृत्यः प्रभुं निरपेक्षं कृत्वा दधिकर्णवत् दधिकर्णनामा बिड़ाल इव स्यात् भवेत् ।

(त) उत्तरापथे—उत्तरस्यां दिशि ।

(थ) लूनं—छिन्नम् ।

बुद्धा कुपितो विवरान्तर्गतं मूषिकं (द) अलभमानोऽचिन्तयत्, किं विधेयमत्र ? भवत्येवं श्रूयते,

क्षुद्रशत्रुर्भवेद्यस्तु विक्रमान्नैव लभ्यते ।
तमाहर्तुं पुरस्कार्य्यः सदृशस्तस्य सैनिकः" ॥ ८३ ॥

इत्यालोच्य तेन ग्रामं गत्वा दधिकर्णनामा विड़ालो मांसाद्याहारेण सन्तोष्य प्रयत्नादानीय स्वकन्दरे धृतः । ततस्तद्भयान्मूषिको वहिर्न निःसरति । तेनासौ सिंहोऽक्षतकेशरः (ध) सुखं स्वपिति । मूषिकशब्दं यदा यदा शृणोति, तदा तदा सविशेषं तं विड़ालं मांसाहारदानेन संवर्धयति (न) । अथैकदा स मूषिकः क्षुधापीड़ितो वहिः सञ्चरंस्तेन मार्जारेण प्राप्तो व्यापादितः खादितश्च । अनन्तरं स सिंहो यदा कदाचिदपि मूषिकशब्दं न शुश्राव । तदोपयोगाभावात् (प) तस्य विड़ालस्याहारदाने मन्दादरो बभूव । अतोऽहं ब्रवीमि, निरपेक्षो न कर्त्तव्य इत्यादि" । ततो दमनककरटकौ सञ्जी-

---

(द) अलभमानः—आक्रमितुमसमर्थः ।

(८३) क्षुद्रेति । यस्य क्षुद्रशत्रुः मूषिकादिवत् क्षुद्रप्राणी शत्रुः भवेत् विक्रमात् विक्रममयलम्बय नैव लभ्यते प्राप्यते आक्रम्यते इति यावत्, तम् आहर्त्तुं वशीकर्त्तुं तस्य सदृशः सैनिकः सेनापुरुषः पुरस्कार्य्यः कार्य्यक्षमत्वेन नियोक्तव्यः ।

(ध) अक्षतकेशरः—अच्छिन्नसटः । (न) संवर्द्धयति—आद्रियते ।

(प) उपयोगाभावात्—उपकारिता विरहात् ।

वकसमीपं गतौ । तत्र करटकस्तरुतले (फ) साटोप-मुपविष्टः । दमनकः सञ्जीवकसमीपं गत्वाऽब्रवीत् । अरे वृषभ ! एषोऽहं राज्ञा पिङ्गलकेन अरण्यरक्षार्थं नियुक्तः । सेनापतिः करटकः समाज्ञापयति, सत्वरमागच्छ नो चेद-स्मादरण्याद्दूरमपसर (ब) । अन्यथा ते विरुद्धं फलं भवि-ष्यति । न जाने क्रुद्धः स्वामी किं विधास्यति ? (भ) ततो देशव्यवहारानभिज्ञः (म) सञ्जीवकः सभयमुपसृत्य साष्टाङ्ग-पातं (य) करटकं प्रणतवान् ।

तथा चोक्तम्,

मतिरेव बलाद्गरीयसी यदभावे करिणामियं दशा ।
इति घोषयतीव डिण्डिमः करिणो हस्तिपकाहतः क्वणन् ८४

अथ सञ्जीवकः सशङ्कमाह । सेनापते ! किं मया कर्त्तव्यं तदभिधीयताम्" । करटको ब्रूते, "वृषभ !

---

(फ) साटोपं—सगर्वं । (ब) दूरमपसर—स्थानान्तरं गच्छ ।

(भ) किं विधास्यति—किंविधं शासनं करिष्यति ।

(म) देशव्यवहारानभिज्ञः—अविदितदेशाचारः ।

(य) साष्टाङ्गपातम्—अष्टानाम् अङ्गानां पातः तेन सह वर्त्त-मानं यथा तथा । तत्र अष्टाङ्गप्रणामः । यथा,

"जानुभ्याञ्च तथा पद्भ्यां पाणिभ्यामुरसा धिया ।
शिरसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरितः ॥"

(८४) मतिरिति । बलात् मतिः बुद्धिरेव गरीयसी श्रेष्ठतरा, यदभावे यस्याः मतेरभावे करिणां हस्तिनाम् इयम् ईदृशी पराधीन-तारूपा दशा अवस्था । इति हस्तिपकाहतः हस्तिचालकताड़ितः डिण्डिमः वाद्यविशेषः घोषयतीव प्रचारयतीव ।

यद्यत्र कानने स्थातुमिच्छा वर्त्तते, तदा देवपादारविन्दं गत्वा प्रणम"। सञ्जीवको वदति, "तदभयवाचं प्रयच्छ आगच्छामि"। करटकेनोक्तम्, शृणु रे बलीवर्द्द ! अलमनया शङ्कया।

यतः, प्रतिवाचमदत्त केशवः शपमानाय न चेदिभूभृते।
अनुहुङ्कुरुते घनध्वनिं, न हि गोमायुरुतानि केशरी ॥८५

अपरञ्च, तृणानि नोन्मूलयति प्रभञ्जनो
मृदूनि नीचैः प्रणतानि सर्वतः।
समुच्छ्रितानेव तरून् प्रबाधते
महान् महत्येव करोति विक्रमम् ॥ ८६ ॥

ततस्तौ सञ्जीवकं नातिदूरे संस्थाप्य पिङ्गलकसमीपं गतौ, ततो राज्ञा सादरमालोकितौ प्रणम्योपविष्टौ। राजाह, "स दृष्टः ?" दमनको ब्रूते, "देव ! दृष्टः यद्देवे-

---

(८५) प्रतिवाचमिति। केशवः शपमानाय आक्रोशते चेदिभूभृते चेदिपतये न प्रतिवाचम् अदत्त ददौ।। केशरी सिंहः घनध्वनिं मेघरुतं अनुहुङ्कुरुते अनुकरोति गोमायुरुतानि शृगालरवान् न अनुहुङ्कुरुते इति शेषः।

(८६) तृणानीति। प्रभञ्जनो प्रबलो वायुः सर्वतः प्रणतानि नम्राणि नीचैः क्षुद्राणि मृदूनि कोमलानि तृणानि न उन्मूलयति न उत्पाटयति किन्तु समुच्छ्रितान् समुन्नतान् एव तरून् वृक्षान् वटादीन् प्रबाधते पीडयति उन्मूलयतीत्यर्थः। महान् महति जने एव विक्रमं करोति प्रदर्शयति।

नाकर्णितं तत्तथैव। महाबलोऽसौ देवं द्रष्टुमिच्छति। (र) सज्जीभूयोपविश्यताम्। किन्तु शब्दमात्रान्न भेतव्यम्।

अम्भसा भिद्यते सेतुस्तथा मन्त्रोऽप्यरक्षितः।
पैशून्याद्भिद्यते स्नेहो वाग्भिर्भिद्यो हि कातरः॥ ८७॥

तथा चोक्तम्, शब्दमात्रान्न भेतव्यमज्ञात्वा शब्दकारणम्।
शब्दहेतुं परिज्ञाय कुट्टिनी गौरवं गता"॥८८॥

राजाह, "कथमेतत्?" दमनकः कथयति। "अस्ति श्रीपर्वतमध्ये ब्रह्मपुराख्यं नगरम्। तत्र शैलशिखरे घण्टाकर्णो नाम राक्षसः प्रतिवसतीति जनप्रवादः (ल) श्रूयते। एकदा घण्टामादाय पलायमानः कश्चिच्चौरो व्याघ्रेण व्यापादितः। तत्पाणिपतिता (व) घण्टा वानरैः प्राप्ता। वानरास्तां घण्टामनुक्षणं (श) वादयन्ति। ततो नगरजनैर्म-

---

(र) सज्जीभूय—राजोचितेन उपवेशनप्रकारेणेत्यर्थः।

(८७) अम्भसेति। अम्भसा जलस्रोतसा सेतुः भिद्यते भिन्नो भवति तथा अरक्षितः अगोपितः सन् मन्त्रोऽपि भिद्यते इत्यन्वयः पैशुन्यात् खलतया स्नेहः प्रणयः भिद्यते विश्लेष्यते कातरः लघुचित्तः भीतोवा वाग्भिः वचनैः भेद्यः भेदं प्रापनीयः।

(८८) शब्दमात्रेति। शब्दकारणम् अज्ञात्वा अनिर्णीय शब्दमात्रात् शब्दमात्रं श्रुत्वा न भेतव्यं शङ्कितव्यं शब्दहेतुं शब्दकारणं परिज्ञाय विदित्वा कुट्टिनी काचित् दुष्टा दूती गौरवं राजसम्मानं लोकसम्मानञ्च गता प्राप्ता।

(ल) जनप्रवादः—जनश्रुतिः, किंवदन्ती।

(व) तत्पाणिपतिता—चौरहस्तविगलिता।

(श) अनुक्षणं—प्रतिक्षणं सर्वदैव।

नुष्यः खादितो दृष्टः प्रतिक्षणं (घ) घण्टारावश्च श्रूयते । अनन्तरं घण्टाकर्णः कुपितो मनुष्यान् खादति घण्टां च वादयति, इत्युक्त्वा जनाः सर्वे नगरात् पलायिताः । ततः करालया नाम कुट्टिन्या विमृश्य मर्कटा घण्टां वादयन्ति स्वयं विज्ञाय राजा विज्ञापितः । देव ! यदि कियद्धनापचयः(ङ) क्रियते तदाहमेनं घण्टाकर्णं साधयामि (च) ततो राज्ञा तुष्टेन तस्यै धनं दत्तम् । कुट्टिन्या च मण्डलं कृत्वा तत्र गणेशादिगौरवं (छ) दर्शयित्वा स्वयं (ज) वानरप्रियफलान्यादाय वनं प्रविश्य फलान्याकीर्णानि । ततो घण्टां परित्यज्य वानराः (झ) फलासक्ता बभूवुः । कुट्टिनी च घण्टां गृहीत्वा नगरमागता सकललोकपूज्याऽभवत् । अतोऽहं ब्रवीमि, शब्दमात्रान्न भेतव्यमिति" । ततः सञ्जीवकमानीय दर्शनं कारितवन्तौ । पश्चात् तत्रैव वने चिरमतिप्रेम्णा वसति । अथ कदाचित् तस्य सिंहस्य भ्राता स्तब्धकर्णो नाम सिंहः समागतः । तस्यातिथ्यं कृत्वोपवेश्य पिङ्गलकस्तदाहाराय पशून् हन्तुं चलितः । अत्रान्तरे सञ्जीवको वदति । देव, "अद्य हतमृगाणां मांसानि क्व ?" राजाह, दमनककरटकौ जा-

---

(घ) घण्टारावः—घण्टावादनशब्दः ।

(ङ) धनोपचयः—धनव्ययः ।

(च) साधयामि—वशीकरोमि ।

(छ) गणेशादिगौरवं—गणेशादिपूजाम् ।

(ज) वानरप्रियफलानि—रम्भाफलानि ।

(झ) फलासक्ताः—रम्भाफलानुरक्ताः ।

नीतः। सञ्जीवको ब्रूते, श्रायतां किमस्ति नास्ति वा? सिंहो विहस्याह, नास्त्येव तत्। सञ्जीवको ब्रूते, "कथमेतावन्मांसं ताभ्यां खादितम्?" राजाह, "खादितं (घ) व्ययितं (ङ) अवधीरितं (च) च। प्रत्यहमेष क्रमः (छ)।" सञ्जीवको ब्रूते, "कथं श्रीमद्देवपादानामगोचरेणैवं क्रियते?" राजाह, "मदीयागोचरेणैव क्रियते।" सञ्जीवको ब्रूते "नैतदुचितम्।

तथा चोक्तम्, नानिवेद्य प्रकुर्वीत भर्त्तुः किञ्चिदपि स्वयम्।
कार्य्यमापत्प्रतीकारादन्यत्र जगतीपतेः ॥८९॥

अन्यच्च, कमण्डलूपमोऽमात्यस्तनुत्यागो बहुग्रहः।
नृपते! किंक्षणो मूर्खो दरिद्रः किंवराटकः? ॥९०॥

---

(घ) खादितं—भक्षितम्। (ङ) व्ययितम्—अन्येभ्यो दत्तम्।

(च) अवधीरितम्—अनुपादेयत्वात् परित्यक्तम्।

(छ) क्रमः—नियमः।

(८९) नेति। जगतीपतेः भर्त्तुः सकाशे अनिवेद्य अविज्ञाप्य आपत्प्रतीकारात् विपत्तिनिवारणात् अन्यत्र अन्यत् किमपि कार्य्यं स्वयम् आत्मना न प्रकुर्वीत न कुर्य्यात्। राज्ञ आज्ञां विना आपत्प्रतीकाराय यतेत अन्यकार्य्यसम्पादने तु अवश्यमेवानुमतिरपेक्षणीयेत्यर्थः।

(९०) कमण्डल्विति। हे नृपते! राजन्! अमात्यः कमण्डलूपमः कमण्डलुसदृशः यतः तनुः स्वल्पः त्यागः एकत्र दानम् अन्यत्र जलनिर्गमः बहुग्रहः बहुसञ्चयः एकत्र संगृहीतबहुविधधनः अन्यत्र बहुपरिमाणजलः। कमण्डलुर्यथा बहुजलं गृहीत्वा स्वल्पमेव ददाति तद्वदमात्यो बहु जानन्नपि स्वल्पमेवोपदिशती-

स अमात्यः सदा श्रेयान् यः काकिन्याऽपि वर्द्धयेत् ।
कोषः कोषवतः प्राणाः प्राणाः प्राणा न भूपतेः ॥ ८१ ॥
किञ्चान्यैर्न कुलाचारैः सेव्यतामेति पूरुषः ।
धनहीनः स्वपत्न्यापि त्यज्यते किम्पुनः परैः ॥ ८२ ॥

(ञ) एतच्च राज्ये प्रधानदूषणम् । पश्य,

अतिव्ययोऽनपेक्षा च तथाऽर्जनमधर्मतः ।
मोषणं दूरसंस्थानं कोषव्यसनमुच्यते ॥ ८३ ॥

---

त्यर्थः । मूर्खः किंपचः कृतूषितसमयः समयमूल्यं न जानातीत्यर्थः, दरिद्रः निर्धनः किंवराटकः कपर्दकमूल्यं नायमच्छतीत्यर्थः ।

(८१) स इति । स हि स एव अमात्यः सदा श्रेयान् श्रेष्ठः सर्वामात्यप्रधानमित्यर्थः यः काकिन्या कपर्द्दकेन अल्पकेनापि धनेन वर्द्धयेत् कोषमिति शेषः । कोषवतः धनशालिनः भूपतेः कोषः प्राणाः प्राणतुल्यः, प्राणाः जीवनं न प्राणाः । प्राणेभ्योऽपि कोषः यत्नेन रक्षणीय इत्यर्थः । तादृशो हि अमात्यः राज्ञः प्राणभूत इति भावः ।

(८२) किञ्चेति । पूरुषः अन्यैः धनातिरिक्तैरपरैः कैरपि कुलाचारैः आभिजात्यादिभिः न सेव्यतां पूज्यतां याति लभते पूजनीयो भवतीत्यर्थः । प्रत्युत धनहीनः निर्धनः स्वपत्न्यापि आत्मनः भार्य्ययापि त्यज्यते हीयते परैः अन्यैरनुजीविप्रभृतिभिः किं पुनः तेषां त्यागे किं वैचित्र्यमित्यर्थः ।

(ञ) एतत्—वक्ष्यमाणम् ।

(८३) अतिव्ययेति । अतिव्ययः अत्यधिकधनव्ययः अनपेक्षा सञ्चये औदासीन्यं तथा अधर्मतः धर्मसम्बन्धं विना अर्जनम् उपार्जनं, मोषणम् अपहरणं, दूरसंस्थानं दूरवर्त्ति स्थाने धनरक्षणम्, एतत् सर्वं कोषव्यसनं धनागारस्य विपत्तिः उच्यते कथ्यते ।

यतः, क्षिप्रमायमनालोच्य व्ययमानः स्ववाञ्छया ।
अमणायत एवासौ धनी वैश्रवणोपमः ॥ ९४ ॥

तदाकर्ण्य स्तब्धकर्णो ब्रूते, "शृणु भ्रातः ! चिराश्रितावेतौ दमनककरटकौ (झ) सन्धिविग्रहकार्य्याधिकारिणौ। कार्य्याधिकारी न धनाधिकारे नियोक्तव्यः। अपरं च नियोगिप्रस्तावे (ञ) मया यत्किञ्चित् (ट) श्रुतं तत् कथयामि ।

ब्राह्मणः क्षत्रियो बन्धुर्नाधिकारे प्रशस्यते ।
ब्राह्मणः सिद्धमप्यर्थं कृच्छ्रेणापि न यच्छति ॥ ९५ ॥

---

(९४) क्षिप्रमिति । आयं धनागमम् अनालोच्य अविविच्य स्ववाञ्छया स्वेच्छया क्षिप्रं व्ययमानः व्ययशीलः असौ प्रसिद्धः कोऽपि वैश्रवणोपमः वैश्रवणः विश्रवस्तनयः कुबेरः उपमा यस्य सः धनी अमणायते अमण इवाचरतीति अमणायते दरिद्राति ।

(झ) सन्धिविग्रहकार्य्याधिकारिणौ—एतौ प्रति सन्धिविग्रहकार्य्यस्य भारः अर्पितः ।

(ञ) नियोगिप्रस्तावे—कस्मिन् कार्य्ये कीदृशोऽमात्यः नियोक्तव्य इति प्रसङ्गे ।

(ट) श्रुतं—परिज्ञातम् ।

(९५) ब्राह्मण इति । ब्राह्मणः द्विजः, क्षत्रियः वीरपुरुषः, बन्धुः मातुलादिः, अधिकारे राज्यकर्मणि न प्रशस्यते । नैव तेषु कार्य्यभारः अर्पणीय इत्यर्थः । कुत इत्याह, ब्राह्मणः सिद्धं सिद्धप्रायमपि अर्थं प्रयोजनं कृच्छ्रेणापि प्रभोरापद्घातिशयं ज्ञात्वापीत्यर्थः न यच्छति न साधयति ।

नियुक्तः क्षत्रियो द्रव्ये खड्गं दर्शयते ध्रुवम् ।
सर्वार्थं ग्रसते बन्धुराक्रम्य ज्ञातिभावतः ॥ ९६ ॥
अपराधेऽपि निःशङ्को नियोगी चिरसेवकः ।
स स्वामिनमवज्ञाय चरेच्च निरवग्रहः ॥ ९७ ॥
उपकर्त्ताधिकारस्थः स्वापराधं न मन्यते ।
उपकारं ध्वजीकृत्य सर्वमेव विलुम्पति ॥ ९८ ॥
उपांशुक्रीडितोऽमात्यः स्वयं राजायते यतः ।
अवज्ञा क्रियते तेन सदा परिचयात् ध्रुवम् ॥ ९९ ॥

---

(९६) नियुक्त इति । क्षत्रियः वीरपुरुषः नियुक्तः सन् द्रव्ये कार्य्यसाधनविषये अथवा धने खड्गं तरवारं ध्रुवं निश्चितं दर्शयते, राज्यग्रहणार्थं भयं प्रदर्शयति इति भावः । बन्धुः आक्रम्य सर्वकार्य्ये प्रविश्य ज्ञातिभावतः ज्ञातिवत् सर्वार्थं सर्वसम्पत्तिं ग्रसते आत्मसात् करोति ।

(९७) अपराध इति । चिरसेवकः पुरातनः सेवकः नियोगी भृत्यः अपराधेऽपि अपकारं कुर्वन्नपि निःशङ्कः निर्भयः भवतीति शेषः । स निरवग्रहः अप्रतिबद्धः सन् स्वामिनं प्रभुम् अवज्ञाय अवमन्य चरेत् आचरेत्, सर्वत्र आत्मप्रभावं दर्शयेदित्यर्थः ।

(९८) उपकर्त्ता उपकारकः अधिकारस्थः पदस्थो भृत्यः स्वापराधम् आत्मदोषं न मन्यते न जानाति । उपकारं पूर्वकृतम् आनुकूल्यं ध्वजीकृत्य अग्रे कृत्वा सर्वमेव दोषजातं विलुम्पति लोपं प्रापयति ।

(९९) उपांश्विति । उपांशुक्रीडितः सर्वरहस्यक्रीडासु अमात्यः मन्त्री कार्य्यसहायः यतः यस्मात् कारणात् स्वयं राजायते राजवत् आचरति । सर्वत्र प्रभुत्वं दर्शयति । तेन सदा सर्वदा परिचयात् सहयोगित्वात् ध्रुवं निश्चितम् अवज्ञा अवमानना प्रभोरिति शेषः, क्रियते विधीयते ।

अन्तर्दुष्टः क्षमायुक्तः सर्वानर्थकरः किल ।
शकुनिः शकटारश्च दृष्टान्तावत्र भूपते ! ॥ १०० ॥
सदायत्यामसाध्यः स्यात् समृद्धः सर्व एव हि ।
शिष्टानामयमादेश ऋद्धिश्चित्तविकारिणी ॥ १०१ ॥
प्राप्तार्थाग्रहणं द्रव्यपरिवर्त्तोऽनुरोधनम् ।
उपेक्षा बुद्धिहीनत्वं भोगोऽमात्यस्य दूषणम् ॥ १०२ ॥
नियोग्यार्थग्रहापायो राज्ञां नित्यपरीक्षणम् ।
प्रतिपत्तिप्रदानं च तथा कर्मविपर्य्ययः ॥ १०३ ॥

---

(१००) अन्तरिति । हे भूपते ! अन्तर्दुष्टः अन्तःखलः परोक्षे कार्य्यहन्तेत्यर्थः, क्षमायुक्तः समक्षे हितैषितां प्रकटयन् सचिव इति शेषः किल प्रसिद्धो सर्वानर्थकरः सर्वाशुभकरः, अत्र अस्मिन् विषये शकुनिः दुर्य्योधनमन्त्री शकटारश्च तन्नामकः नन्दराजमन्त्री च दृष्टान्तौ द्वे उदाहरणे ।

(१०१) सदेति । सर्व एव समृद्धः धनशाली जनः आयत्याम् उत्तरकाले सदा असाध्यः सदुपदेशभाजनं न स्यात् भवेत् । परिणामे स्वेच्छयैव प्रवर्त्तते इत्यर्थः । ऋद्धिः ऐश्वर्य्यं चित्तविकारिणी चित्तप्रमादविधायिनी औद्धत्यादिसम्पादिकेति यावत् अयम् ईदृशः शिष्टानां विदुषाम् आदेशः उपदेशः ।

(१०२) प्राप्तेति । प्राप्तानां लब्धानाम् अर्थानाम् अग्रहणं सञ्चयाभावः, द्रव्यपरिवर्त्तः अर्थादिग्रहणेन राजकीयवस्तुनो विनिमयः, अनुरोधनं न्यायविचारे अनुरोधरक्षा, उपेक्षा सर्वकार्य्येषु औदासीन्यं, बुद्धिहीनत्वम् अविवेकः, भोगः कामिनीसम्भोगादिः, एतत् सर्वम् अमात्यस्य मन्त्रिणः दूषणं दोषः ।

(१०३) नियोग्येति । नियोग्यस्य प्रभोः अर्थग्रहस्य अर्थसञ्चयस्य अपायः नाशः, नित्यं सर्वदा राज्ञां परीक्षणं किमयं मयि अनु-

निपीड़िता वमन्त्युच्चैरन्तःसारं महीपतेः ।
दुष्टव्रणा इव प्रायो भवन्ति हि नियोगिनः ॥ १०४ ॥
मुहुर्नियोगिनो बोध्या वसुधारा महीपतेः ।
सकृत् किं पीड़ितं स्नानवस्त्रं मुञ्चेद्बहूदकम् ॥ १०५ ॥
एतत् सर्वं ज्ञात्वा यथावसरं (ठ) व्यवहर्त्तव्यम् (ड) ।"
पिङ्गलको ब्रूते, "अस्ति तावदेवं, किन्तु एतौ सर्वथा न मम

---

रक्तो विरक्तो वेति परीक्षा अभिप्रायजिज्ञासा, प्रतिपत्तेः सन्तोष-बद्धद्रव्यस्य प्रियवस्तुन इति यावत् प्रदानम् अन्यस्मै अर्पणं तथा कर्मविपर्य्ययः कर्त्तव्यकर्मणः उपेक्षा, एतत् सचिवस्य दूषणमिति पूर्व्वेणान्वयः ।

(१०४) निपीड़ितेति । नियोगिनः नियोगकारिणः सेवकाः निपीड़िताः अत्यर्थम् आक्रष्टाः शासिताः सन्त इत्यर्थः महीपतेः राज्ञः अन्तःसारम् आन्तरिकं रहस्यं मनोगतम् उच्चैः वमन्ति सर्व्वत्र प्रकाशयन्ति अतएव प्रायः दुष्टव्रणाः इव भवन्ति । दुष्टव्रणा हि अनिष्पीड़िताः अन्तः क्लिश्नन्ति निष्पीड़िताश्च पूयादिकम् उद्गिरन्ति इति तात्पर्य्यम् ।

(१०५) मुहुरिति । नियोगिनः सेवकस्य वसुधाराः अर्थसंग्रहाः सञ्चितानि धनानीत्यर्थः महीपतेः राज्ञः कर्त्तुः मुहुः पुनः पुनः बोध्याः परीक्षणीयाः । तदधिकृतानि धनानि नेतुं पुनः पुनः यत्नः कर्त्तव्य इत्यर्थः । अत्र दृष्टान्तमाह, स्नानवस्त्रं सकृत् एकवारं पीड़ितं निष्पीड़ितं सत् किं बहूदकं प्रभूतजलं मुञ्चेत् त्यजेत् न कदापीत्यर्थः ।

(ठ) यथावसरं—यथानीति ।

(ड) व्यवहर्त्तव्यम्—आचरितव्यम् ।

वचनकरी"। स्तब्धकर्णो ब्रूते, "एतत् सर्वथाऽनुचितम्।
यतः, आज्ञाभङ्गकरान् राजा न क्षमेत सुतानपि।
विशेषः को नु राज्ञश्च राज्ञश्चित्रगतस्य च॥ १०६॥
अन्यच्च, स्तब्धस्य नश्यति यशो, विषमस्य मैत्री
नष्टेन्द्रियस्य कुलम्, अर्थपरस्य धर्मः।
विद्याफलं व्यसनिनः, कृपणस्य सौख्यं,
राज्यं प्रमत्तसचिवस्य नराधिपस्य॥ १०७॥
विशेषतश्च, तस्करेभ्यो नियुक्तेभ्यः शत्रुभ्यो नृपवल्लभात्।
नृपतिर्निजलोभाच्च प्रजा रक्षेत् पितेव हि॥ १०८॥

---

(१०६) आज्ञेति। राजा आज्ञाभङ्गकरान् आज्ञायाः अस्मदादिकान् सुतान् पुत्रानपि किमुत भृत्यान् न क्षमेत न सहेत्। एवं सति तु भो भ्रातः! राज्ञः सजीवस्येति भावः चित्रगतस्य चित्रार्पितस्य राज्ञः को विशेषः कः प्रभेदः। तादृशो हि राजा अकर्मण्य एवेत्यर्थः।

(१०७) स्तब्धस्य गर्वितस्य यशः नश्यति, विषमस्य समताशून्यस्य अव्यवस्थितचित्तस्येत्यर्थः, मैत्री मित्रता सर्वत्र नश्यतीत्यनेनान्वयः। नष्टेन्द्रियस्य इन्द्रियपरवशस्य कुलं वंशः, अर्थपरस्य अर्थलग्नोः धर्मः, व्यसनिनः व्यसनासक्तस्य विद्याफलं विद्यायाः शास्त्रज्ञानस्य फलं विनयादिकं, कृपणस्य व्ययकुण्ठस्य सौख्यं सुखजातं, प्रमत्तः अनवहितः अविवेकशाली इति यावत् सचिवः मन्त्री यस्य तस्य नराधिपस्य राज्यं राष्ट्रम् नश्यति।

(१०८) तस्करेति। नृपतिः राजा तस्करेभ्यः चौरेभ्यः नियुक्तेभ्यः विरोधिभ्यः शत्रुभ्यः द्विषद्भ्यः नृपवल्लभात् राजप्रियामा-

भ्रातः! सर्वथा मद्वचनं क्रियताम्। आहारोऽप्य-
स्माभिः कृत एव। अयं शस्यभक्षकः सञ्जीवको भोज-
नाधिकारे नियुज्यताम्। एतद्वचनात् तथानुष्ठिते सति
पिङ्गलकसञ्जीवकयोः सर्वबन्धुपरित्यागेन (ढ) महता स्नेहेन
कालोऽतिवर्त्तते। ततोऽनुजीविनामप्याहारदाने शैथिल्य-
दर्शनात् (ण) दमनककरटकावन्योऽन्यं (त) चिन्तयतः।
तदाह दमनकः, "किमत्र विधेयम् (थ)? आत्मकृतोऽयं
दोषः। स्वयं कृतेऽपि दोषे (द) परिदेवनमप्यनुचितम्।
तथा चोक्तम्, स्वर्णरेखामहं स्पृष्ट्वा बद्धात्मानञ्च दूतिका।
आदित्सुश्च मणिं साधुः स्वदोषाद् दुःखिता इमे"॥१०९॥

करटकः पृच्छति, कथमेतत्? दमनकः कथयति।
अस्ति काञ्चनपुरनाम्नि नगरे वीरविक्रमो नाम राजा। तस्य

---

त्वादेः निजलोभात् आत्मम्भरितायाश्च पिता इव जनक इव प्रजाः
लोकान् रक्षेत् प्रतिपालयेत्।

(ढ) सर्वबन्धुत्यागेन—सर्वेषां बन्धूनां त्यागो यस्मिन् स तेन।

(ण) शैथिल्यदर्शनात्—मन्दादरदर्शनात्।

(त) अन्योन्यं—परस्परम्। (थ) विधेयं—कर्त्तव्यम्।

(द) परिदेवनं—विलपनम् अनुताप इति यावत्।

(१०९) स्वर्णरेखेति। स्वर्णरेखां चित्रगतां हिरण्मयीं प्रति-
कृतिं स्पृष्ट्वा छुत्वा अहं तथा आत्मानं बद्ध्वा घ्यात्मानं रुद्धं कृत्वा
दूतिका दूती च मणिं पुत्तलिकानिहितं रत्नम् आदित्सुः आदा-
तुमिच्छुः ग्रहीतुमित्यर्थः साधुः परिव्राजकः इमे वयं त्रयः स्वदो-
षात् आत्मकृतदोषात् दुःखिताः विषादमापन्नाः।

धर्माधिकारिणा (ध) कश्चिन्नापितो (न) बध्यभूमिं नीयमानः कन्दर्पकेतुनाम्ना परिव्राजकेन साधुद्वितीयेन नायं बध्य (प) इत्युक्त्वा वस्त्राञ्चले (फ) धृतः। राजपुरुषा ऊचुः, किमिति नायं बध्यः? स आह, श्रूयताम्। स्वर्णरेखामहं स्पृष्ट्वा इत्यादि पठति। ते आहुः, "कथमेतत्?" परिव्राजकः कथयति, "अहं सिंहलद्वीपस्य भूपतेर्जीमूतकेतोः पुत्रः कन्दर्पकेतुः। अथैकदा (ब) केलिकाननावस्थितेन मया (भ) पोतवणिङ्मुखात् श्रुतं, यदत्र समुद्रमध्ये चतुर्दश्यामाविर्भूतकल्पतरुतले (म) मणिकिरणावलीकर्बुरपर्य्यङ्के (य) स्थिता सर्वालङ्कारभूषिता लक्ष्मीरिव वीणां वादयन्ती कन्या काचित् दृश्यत इति। ततोऽहं तं पोतवणिजमादाय पोतमारुह्य तत्र गतः। अनन्तरं तत्र गत्वा मया तथैव सा अवलोकिता। (र) ततस्तल्लावण्यगुणाकृष्टेन पश्चान्मयाऽपि

---

(ध) धर्माधिकारिणा—धर्माधिकरणे नियुक्तेन शासनाध्यक्षेण।

(न) बध्यभूमिं—बधसाधनस्थानम्।

(प) बध्यः—बधार्हः (अर्हार्थे यत्)।

(फ) वस्त्राञ्चले—वसनप्रान्ते।

(ब) केलिकाननावस्थितेन—क्रीड़ाकुञ्जनिषण्णेन।

(भ) पोतवणिक्—समुद्रव्यवसायी।

(म) आविर्भूतकल्पतरुतले—दृश्यमानकल्पवृक्षमूले।

(य) मणिकिरणावलीकर्बुरपर्य्यङ्के—मणिकिरणानां रत्नांशूनाम् आवली समूहः तया कर्बुरः विचित्रः पर्य्यङ्कः तस्मिन्।

(र) तल्लावण्यगुणाकृष्टेन—तस्याः कन्यायाः लावण्यं सौन्दर्य्यम् एव गुणः तेन आकृष्टः तेन। तत्सौन्दर्य्यविमोहितचित्तेन।

भ्यो दत्तः। तदनन्तरं कनकपत्तनं (ख) प्राप्य सुवर्णप्रासादे तथैव सा पर्य्यङ्कस्था विद्याधरीभिरभिनवयौवनाभिरुपास्यमाना (ग) मयावलोकिता। तथाप्यहं दूरादेव दृष्ट्वा सखीं प्रस्थाप्य सादरं सम्भाषितः। ततस्तत्सख्या च मया पृष्टया समाख्यातम् (घ)। "एषा कन्दर्पकेलिनाम्नो विद्याधरचक्रवर्त्तिनः पुत्री रत्नमञ्जरी नाम, अनया प्रतिज्ञातम्। यः कनकपत्तनं स्वचक्षुषागत्य पश्यति, स एव मां परिणेष्यतीति।" ततः तां गन्धर्वविवाहेन परिणीतवान्। अथ गन्धर्वविवाहे वृत्ते तया सहाहं रममाणश्चिरं तिष्ठामि। तत एकदा रहसि तयोक्तम्, "स्वामिन्! स्वेच्छया सर्वमिदमुपभोक्तव्यम्। किन्तु एषा चित्रगता स्वर्णरेखा नाम विद्याधरी न कदाचित् स्प्रष्टव्या। पश्चादुपजातकौतुकेन (ङ) सा स्वर्णरेखा हस्तेन मया स्पृष्टा, तया च चित्रगतयाप्यहं तथा कृत्वा चरणपद्मेनाहत (च) आगत्य स्वराष्ट्रे पतितः। अतो दुःखार्त्तोऽहं प्रव्रजितः पृथिवीं परिभ्रमन् इमां नगरीमनुप्राप्तः। अत्र चातिक्रान्ते दिवसे गोपगृहे सुप्तः सन्नपश्यम्। प्रदोषसमये स गोपो (छ) गोष्ठादागतः स्ववधूं दूत्या सह

(ख) कनकपत्तनं—सुवर्णपुरीम्।

(ग) उपास्यमाना—सेव्यमाना।

(घ) समाख्यातम्—अभिहितम्।

(ङ) उपजातकौतुकेन—उपजातं कौतुकं कुतूहलं यस्य तेन।

(च) आहतः—ताड़ितः। (छ) गोष्ठात्—गोचारणस्थानात्।

मन्त्रयन्तीमपश्यत्। ततस्तां गोपीं ताड़यित्वा स्तम्भे बद्ध्वा सुप्तः। ततोऽर्द्धरात्रेऽस्य नापितस्य वधूर्दूती पुनस्तां गोपीमुपेत्यावदत्। "तव वियोगानलदग्धोऽसौ मुमूर्षुरिव वर्त्तते महानुभावः। तदहमात्मानमत्र बद्ध्वा तिष्ठामि त्वं तत्र गत्वा तं सम्भाष्य सत्वरमागच्छ।" तथानुष्ठिते सति स गोपः प्रबुद्धोऽवदत्। "इदानीं आन्तिकं कथं न यासि। ततो यदा सा दूती न किञ्चिद् ब्रूते, तदा दर्पान्मम वचनस्योत्तरं न ददासि"। इत्युक्त्वा प्रकुप्य तस्यास्तेन नासिका छिन्ना। तथा कृत्वा पुनः सुप्तो गोपो निद्रामुपागतः। अथागता सा गोपी दूतीमपृच्छत्। "का वार्त्ता?" दूती उवाच, "पश्य मम मुखमेव वार्त्तां कथयति।" अनन्तरं सा गोपी तथैवात्मानं बद्ध्वावस्थिता। दूती छिन्ननासिकां गृहीत्वा निजगृहं प्रविश्य स्थिता। ततः प्रभाते तेन नापितेन क्षुरभाण्डं याचिता सती सा तस्मै क्षुरभाण्डमदत्त्वा क्षुरमेकं प्रादात्। पश्चादयं नापितः प्रकुपितः क्षुरं दूरादेव गृहे प्रक्षिप्तवान्। अथ (च) कृतार्त्तनादेयं "विनापराधेनानेन मम नासिका छिन्ना। इत्युक्त्वा धर्माधिकारिसमीपमेनमानीतवती। सा च गोपी तेन गोपेन पृष्टोवाच। "अरे पाप! को मां महासतीं (क) निरूपयितुं (ख) समर्थः? मम व्यवहारमष्टौ लोकपाला एव जानन्ति।

---

(च) कृतार्त्तनादेयं—कृतः आर्त्तनादः यया सा। चीत्कृतवती।

(क) महासतीं—महापतिव्रताम्। (ख) निरूपयितुं—परिमातुम्।

यतः,

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥११०

ततोऽहं यदि महासती निजस्वामिनं विहाय नान्यं मनसापि चिन्तयामि—तदा मम मुखमक्षतं (ग) भवतु ।” ततो यावदसौ गोपः प्रदीपमानीय तस्या मुखं पश्यति, तावदक्षतं मुखमवलोक्य तच्चरणयोः पतितः । योऽयमास्ते साधुरेतद्वृत्तान्तमपि शृणुत । अयं स्वगृहान्निःसृतो द्वादशभिर्वर्षैर्मलयोपकण्ठादिमां नगरीमागतः । अत्र च वेश्यागृहे सुप्तः । ततः कुट्टिन्या गृहद्वारि स्थापितकाष्ठघटितवेतालस्य (घ) मूर्ध्नि रत्नमेकमुत्कृष्टमास्ते । तद् दृष्ट्वार्थलुब्धेनानेन साधुना रात्रावुत्थाय (ङ) हस्तो दत्तः । तदैव तेन वेतालेन (च) सूत्रसञ्चारितेन बाहुभ्यां पीडितः सन्नार्त्तनादं चकार । पश्चादुत्थाय कुट्टिन्योक्तम्,

---

(११०) आदित्येति । आदित्यचन्द्रौ सूर्य्यसोमौ, अनिलः वायुः, अनलः वह्निः, द्यौः आकाशः, भूमिः पृथिवी, आपः जलं, हृदयं चित्तं, यमः अन्तकः, अहः दिनं, रात्रिश्च उभे प्रातःप्रदोषरूपे सन्ध्ये, धर्मश्च नरस्य लोकस्य वृत्तं चरितं जानाति वेति ।

(ग) अक्षतम्—अच्छिन्नम् ।

(घ) काष्ठघटितवेतालस्य—काष्ठनिर्मितपुत्तलिकायाः ।

(ङ) हस्तो दत्तः—रत्नग्रहणार्थं पुत्तलिकामस्तके हस्तः प्रसारितः ।

(च) सूत्रसञ्चारितेन—रज्जुचालितेन ।

"पुत्र! (छ) मलयोपकण्ठादागतोऽसि। तत् सर्वरत्नानि प्रयच्छास्मै, नोचेदनेन न त्यक्तव्योऽसि, इत्थमेवायं चेटकः (ज)।" ततोऽनेन सर्वरत्नानि समर्पितानि। अधुना चायमपि (झ) हृतसर्वस्वोऽस्मासु मिलितः। एतत्सर्वं श्रुत्वा राजपुरुषैर्न्यायः (ञ) प्रवर्त्तितः (ट)। नापितवधूर्मुण्डिता। गोपी शासिता। कुट्टिनी च दण्डिता। साधोर्धनानि प्रदत्तानि। अतोऽहं ब्रवीमि। स्वर्णरेखामहं स्पृष्ट्वेत्यादि। अतः स्वयं कृतोऽयं दोषः, अत्र विलपनमनुचितम्। चर्च्च विमृश्य। मित्र! सहसैव यथा अनयोः सौहार्दं मया कारितं तथा भेदोऽपि कार्य्यः।

यतः, अतथ्यान्यपि तथ्यानि दर्शयन्ति हि पेशलाः।
समे निम्नोन्नतानीव चित्रकर्मविदो जनाः॥१११॥

अपरञ्च, उत्पन्नेष्वपि कार्य्येषु मतिर्यस्य न हीयते।

---

(छ) मलयोपकण्ठात्—मलयपर्वतसमीपवर्त्तिनः प्रदेशात्।

(ज) चेटकः—दासः। इत्थमेवायम् अयमेवास्य क्रमः।

(झ) हृतसर्वस्वः—हृतं नष्टं सर्वस्वं यस्य सः। क्षयितसर्वधनः।

(ञ) न्यायः—विचारः। (ट) प्रवर्त्तितः—कृतः।

(१११) अतथ्यानीति। पेशलाः चतुराः जनाः चित्रकर्मविदः चित्रकार्य्यनिपुणाः जनाः समे समतले भूमौ आलेख्य इत्यर्थः निम्नोन्नतानि नदीपर्वतादीनि इव अतथ्यानि असत्यानि अपि तथ्यानि सत्यानि दर्शयन्ति प्रत्याययन्ति।

(११२) उत्पन्नेति। यस्य जनस्य मतिः बुद्धिः उत्पन्नेषु उपस्थितेषु अपि कार्य्येषु कार्य्यकाले उपस्थिते सतीत्यर्थः, न हीयते न हीना

स निस्तरति दुर्गाणि गोपी जारद्वयं यथा ॥११२॥

करटकः पृच्छति, कथमेतत्? दमनकः कथयति।
"अस्ति द्वारावत्यां पुर्य्यां कस्यचिद्गोपस्य वधूर्बन्धकी (ठ)।
सा च ग्रामस्य दण्डनायकेन (ड) तत्पुत्रेण च सह रमते (ढ)।
तथा चोक्तम्,

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥११३॥

अन्यच्च, न दानेन न मानेन नार्जवेन न सेवया।
न शस्त्रेण न शास्त्रेण विषमाः सर्वथा स्त्रियः॥११४॥

---

भवति तीक्ष्णा स्यात् सः जनः गोपी गोपाङ्गना जारद्वयं यथा उपपतिद्वयमिव दुर्गाणि विषमाः सङ्कटा इति यावत् अवस्थाः निस्तरति, सङ्कटे पतित्वापि उत्तिष्ठतीत्यर्थः।

(ठ) बन्धकी—कुलटा, व्यभिचारिणी।

(ड) दण्डनायकेन—ग्रामरक्षकप्रधानेन।

(ढ) रमते—सम्भोगसुखमनुभवति।

(११३) नाग्निरिति। अग्निः काष्ठानां बहुभिः इन्धनैरपीत्यर्थः न तृप्यति तृप्तिं लभते। महोदधिः महासमुद्रः आपगानां नदीनां सम्बन्धे न तृप्यतीत्यनेन सर्वत्रान्वयः। अन्तकः यमः सर्वभूतानां सर्वप्राणिनां न, वामलोचना वामे सुन्दरे लोचने नयने यस्याः सा कामिनी नारी पुंसां न। बहुभोगेऽपीति भावः।

(११४) नेति। दानेन धनप्रदानेन न वशीभूता भवेयुरिति शेषः। मानेन सम्मानेन न, आर्जवेन मृदुव्यवहारेण प्रियसम्भाषणादिनेति यावत् न, सेवया आनुगत्येन च न, शस्त्रेण प्रहर्त्तुं भीतिप्रदर्शनेन न,

यतः, गुणाश्रयं कीर्त्तियुतं च कान्तं
पतिं रतिज्ञं सधनं युवानम् ।
विहाय शीघ्रं वनिता व्रजन्ति
नरान्तिकं शीलगुणादिहीनम् ॥ ११५ ॥

अपरञ्च, न तादृशीं प्रीतिमुपैति नारी
विचित्रशय्यां शयिताऽपि कामम् ।
यथा हि दूर्वादिविकीर्णभूमौ
प्रयाति सौख्यं परकान्तसङ्गात् ॥ ११६ ॥

अथ सा कदाचित् दण्डनायकसुतेन सह रममाणा तिष्ठति। अत्रान्तरे दण्डनायकोऽप्यागतः। तं दृष्ट्वा तत्पुत्रं कुशूले (ण) धृत्वा दण्डनायकेन समं तथैव क्रीड़ि-

---

शास्त्रेण नीतिशास्त्रोपदेशेन विद्याशिक्षया ता न सर्वत्र वशीभूता भवेयुरिति शेषः। अतः स्त्रियः नार्य्यः सर्वथा विषमाः दुराराधनीयाः ।

(११५) गुणेति । गुणानाम् आश्रयं सर्वगुणान्वितं कीर्त्तियुतं यशस्विनं कान्तं सुश्रीकं रतिज्ञं विलासिनं सधनं धनवन्तं युवानं तरुणं पतिं भर्त्तारं विहाय त्यक्त्वा शीघ्रं वनिता नारी शीलगुणादिहीनं निर्गुणं निर्धनं कुत्सितञ्च परम् अपरं नरं पुरुषं व्रजन्ति गच्छन्ति ।

(११६) नेति । नारी रमणी यथा हि येन प्रकारेण हि दूर्वादिविकीर्णभूमौ तृणशय्योपरि इत्यर्थः परकान्तसङ्गात् उपपतिसम्भोगेन कामम् अतिशयं सौख्यं सुखसमूहं प्रयाति प्राप्नोति तादृशीं प्रीतिं सुखं विचित्रशय्यां मृदु मनोहरशयने शयितापि पत्या सहेति शेषः न उपैति न लभते । स्त्रियाश्चरितं दुर्बोधमिति भावः ।

(ण) कुशूले—धान्यादिरक्षार्थं स्थापिते पात्रविशेषे ।

तवती। अनन्तरं तस्या भर्त्ता गोपो गोष्ठात् समागतः। तमालोक्य गोप्योक्तम् "दण्डनायक! त्वं लगुडं गृहीत्वा कोपं दर्शयन् सत्वरं याहि"। तथानुष्ठिते सति स गोपस्तत्रागत्य भार्य्यां पृष्टवान्। केन कारणेन दण्ड-नायकः समागतोऽत्र? सा ब्रूते, अयं "केनापि कारणेन पुत्रस्योपरि क्रुद्धः। स च पलायमानोऽत्रागत्य प्रविष्टः। मया कुशूले निक्षिप्य रक्षितः। तत्पित्रा चान्विष्यता (त) गृहे न दृष्टः। अतोऽयं कुपित एव गच्छति"। ततः सा तत्पुत्रं कुशूलादवतार्य्य (थ) दर्शितवती।

तथा चोक्तम्,

आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा।
षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः॥ ११७॥

अतोऽहं ब्रवीमि। उत्पन्नेष्वपि कार्य्येषु इत्यादि।

करटको ब्रूते, "अस्त्वेवं, किन्त्वनयोर्महान् नैसर्गिकः (द) स्नेहः, कथं भेदयितुं शक्यः।" दमनक आह, "पर-श्चिन्तनीयः।

---

(त) अन्विष्यता—इतस्ततो निरूपयता। (थ) अवतार्य्य—आनीय।

(११७) आहार इति। स्त्रीणाम् आहारः भोजनं द्विगुणः द्विरावृत्तः, तासां स्त्रीणां बुद्धिः प्रज्ञा चतुर्गुणा सर्वत्र पुरुषापेक्षया इति शेषः, व्यवसायः कार्य्यसाधनचेष्टा चातुर्य्यमिति षड्गुणः, कामः रतीच्छा च अष्टगुणः स्मृतः कथितः।

(द) नैसर्गिकः—स्वाभाविकः।

तथा चोक्तम्.

उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः।

काको कनकसूत्रेण कृष्णसर्पमघातयत् ॥११८॥

करटकः पृच्छति, "कथमेतत्?" दमनकः कथयति, "कस्मिंश्चित् तरौ वायसदम्पती (ध) निवसतः। तयोश्चापत्यानि तरुकोटरावस्थितकृष्णसर्पेण (न) खादितानि। ततः पुनर्गर्भवती वायसी ब्रूते, "स्वामिन्! त्यज्यतामयं तरुः। अत्र यावत् कृष्णसर्पस्तावदावयोः सन्ततिः कदाचिदपि न भविष्यति (प)।

यतः, दुष्टा भार्य्या शठं मित्रं भृत्यश्चोत्तरदायकः।

ससर्पे च गृहे वासो मृत्युरेव न संशयः॥" ११९॥

वायसो ब्रूते, "प्रिये! न भेतव्यम्। वारं वारं मये-

---

(११८) उपायेनेति। यत् कार्य्यम् उपायेन कौशलप्रयोगेण शक्यं साध्यं तत् पराक्रमैः विक्रमप्रदर्शनेन न शक्यं साधयितुं पार्य्यम्। काकी वायसी कनकसूत्रेण सुवर्णसूत्रेण उपायेन कृष्णसर्पं तीक्ष्णविषं सर्पम् अघातयत् विनाशयामास।

(ध) वायसदम्पती—काकमिथुनम्। (न) अपत्यानि—शावकाः।

(न) तरुकोटरावस्थितकृष्णसर्पेण—तरोः कोटरं गह्वरं तस्मिन् अवस्थितः उषितः यः कृष्णसर्पः तेन, तरुविवराभ्यन्तरवर्त्तिना कालसर्पेण।

(प) भविष्यति—जीविष्यति।

(११९) दुष्टेति। दुष्टा व्यभिचारिणी भार्य्या, शठं कपटं मित्रं बन्धुः, उत्तरदायकः आज्ञालङ्घकः भृत्यः अनुजीवी ससर्पे सर्पयुक्ते गृहे भवने वासः अवस्थितिः, मृत्युरेव मरणकारणमेवेत्यर्थः संशयः सन्देहः न अस्तीति शेषः।

ध्मातः (क) तस्योपरि आत्मानं निक्षिप्य पञ्चत्वं गतः। अतो-ऽहं ब्रवीमि, बुद्धिर्यस्य इत्यादि।" वायसी ब्रूते, "श्रुतं मया, कर्त्तव्यतां ब्रूहि।" वायसोऽवदत्, "प्रिये! (ख) आसन्ने सरसि राजपुत्रः सततमागत्य स्नाति। तस्मिन् प्रस्तरे तदङ्गादवतारितं (ग) कनकसूत्रं चञ्च्वा धृत्वानीयास्मिन् कोटरे (घ) धारयिष्यसि। अथ कदाचित् कनकसूत्रं दृषदि संस्थाप्य स्नातुं प्रविष्टे राजपुत्रे वायस्या तदनुष्ठितम्। अथ (ङ) कनकसूत्रानुसरणप्रवृत्तैः राजपुरुषैः कोटरे निरू-प्यमाणः (च) कृष्णसर्पो व्यापादितः। तेनाऽहं ब्रवीमि। उपायेन हि यच्छक्यमित्यादि।" करटक आह, "यद्येवं तदागच्छ, पन्थानः सन्तु ते (छ) शिवाः।" ततो दमनकः पिङ्गलकसमीपं गत्वा प्रणम्योवाच, "देव! अत्याहितं (ज) मन्यमानो निवेदयितुमागतः।

यतः, आपद्युन्मार्गगमने कार्य्यकालात्ययेषु च।

---

(क) दर्पाध्मातः—दर्पपूर्णः (आ + ध्मा + क्तः)।

(ख) आसन्ने समीपस्थे।

(ग) अवतारितम्—उन्मोचितम्।

(घ) धारयिष्यसि—निधापयिष्यसि, स्थापयिष्यसि।

(ङ) कनकसूत्रानुसरणप्रवृत्तैः—सुवर्णसूत्रान्वेषणार्थम् इतस्ततो विचरद्भिः।

(च) निरूप्यमाणः दृश्यमानः। (छ) शिवाः—निर्विघ्नाः।

(ज) अत्याहितम्—अशुभं विपदमिति यावत्।

(१२२) आपदीति। आपदि विपत्काले उपस्थिते सतीत्यर्थः, उन्मार्गगमने असत्पथावलम्बने कार्य्यकालात्ययेषु कर्त्तव्यकर्मसम्पादनस्य

कल्याणवचनं ब्रूयादपृष्टोऽपि हितो नरः ॥ १२२ ॥

अन्यच्च, भोगस्य भाजनं राजा मन्त्री कार्य्यस्य भाजनम्।
राजकार्य्यपरिध्वंसी मन्त्री दोषेण लिप्यते ॥१२३॥

अमात्यानामेष (झ) क्रमः,

वरं प्राणपरित्यागः शिरसो वापि कर्त्तनम्।
न तु स्वामिपदावाप्तिपातकेच्छोरुपेक्षणम् ॥" १२४ ॥

पिङ्गलकः सादरं ब्रूते, "अथ भवान् किं वक्तुमिच्छति?" दमनक आह, "अयं तावत् सञ्जीवकस्तवोपरि (ञ) असदृशव्यवहारी लक्ष्यते। तथा चास्मत्सन्निधाने स्वामिनः

---

समये अतिवाहिते सतीत्यर्थः हितो नरः हितैषी जनः अपृष्टोऽपि अजिज्ञासितोऽपि कल्याणवचनं शुभदायकं वाक्यं ब्रूयात् वदेत् हितमुपदिशेदित्यर्थः।

(१२३) भोगस्येति। राजा नृपतिः भोगस्य सुशासितात् राज्यात् लब्धस्य सुखस्य भाजनं पात्रं मन्त्री मन्त्रणादायकः सचिवः कार्य्यस्य प्रजारक्षणादिव्यापारस्य भाजनं तस्मिन्नेव शासनस्य भारः अर्पित इत्यर्थः। अतः राजकार्य्यपरिध्वंसी राज्यशासनकार्य्यमुपेक्षमाणो जनः दोषेण कर्त्तव्याननुष्ठानजनितेन पापेन लिप्यते संसृज्यते।

(झ) क्रमः—नियमः।

(१२४) वरमिति। प्राणपरित्यागः मरणं वरं श्रेयान्, शिरसः मस्तकस्य कर्त्तनं छेदनं वापि वरं, तु किन्तु स्वामिनः प्रभोः पदस्य राजत्वस्य अवाप्तिः प्रापणं राज्यलाभेच्छेति भावः तदेव पातकं पापं तत् इच्छुः आकाङ्क्षी तस्य तथोक्तस्य उपेक्षणम् अशासनं न वरमिति शेषः। तादृशो हि सेवकः सर्वथा दण्डार्ह एवेत्यर्थः।

(ञ) असदृशव्यवहारी—अनुचिताचारो, उल्लङ्घित-भृत्यधर्म इति यावत्।

(ट) शक्तित्रय निन्दां कृत्वा राज्यमेवाभिलषति। एतच्छ्रुत्वा पिङ्गलकः सभयं साश्चर्य्यं तूष्णीं स्थितः। दमनकः पुनराह, "देव! (ठ) सर्वामात्यपरित्यागं कृत्वा त्वयैवायं सकलकार्य्याधिकारे नियुक्तः। अयं च महान् दोषः।

यतः, अत्युच्छ्रिते मन्त्रिणि पार्थिवे च
विष्टभ्य पादावुपतिष्ठते श्रीः।
सा स्त्रीस्वभावादसहा भरस्य
तयोर्द्वयोरेकतरं जहाति ॥ १२५ ॥

अपरञ्च, एकं भूमिपतिः करोति सचिवं राज्ये प्रधानं यदा
तं मोहाच्छ्रयते मदः स च मदालस्येन निर्भिद्यते।

---

(ट) शक्तित्रयनिन्दां—प्रभावोत्साहमन्त्रजाख्यत्रिशक्तेः अवधीरणाम्। "राज्ञस्तु शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः"।

(ठ) सर्वामात्यपरित्यागं कृत्वा—सकलान् मन्त्रिणः अनादृत्य।

(१२५) अत्युच्छ्रित इति। श्रीः राजलक्ष्मीः अत्युच्छ्रिते अत्यधिकामुन्नतिं लभमाने मन्त्रिणि सचिवे पार्थिवे च पादौ चरणौ विष्टभ्य निधाय उपतिष्ठते सेवते उभयमेव युगपदाश्रयतीत्यर्थः। सा श्रीः स्त्रीस्वभावात् स्त्रीजातिसुलभचापल्यात् तयोर्द्वयोः मन्त्रिपार्थिवयोः भरस्य भारस्य असहमाना भारं सोढुमशक्नुवती एकतरं मन्त्रिपार्थिवयोरेकं जहाति त्यजति, तयोरेकतरमेवाश्रयतीत्यर्थः।

(१२६) एकमिति। यदा भूमिपतिः राजा राज्ये राष्ट्रे एकं सचिवं मन्त्रिणं प्रधानं सर्वकार्य्याधिकारिणं करोति तं सचिवं मोहात् गर्वात् मदः मत्तता औद्धत्यमिति यावत् आश्रयते स हि मदान्धो भवति इत्यर्थः। स च सचिवः मदालस्येन मदजनितया अनवधानतया निर्भिद्यते नितरां भेदमाप्नोति, निर्भिन्नस्य विरुद्धभावापन्नस्य तस्य

निर्भिन्नस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा
स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणान्तिकं द्रुह्यति ॥१२६॥

तथा चोक्तम्,

विषदिग्धस्य भक्तस्य दन्तस्य चलितस्य च ।
अमात्यस्य च दुष्टस्य मूलादुद्धरणं सुखम् ॥ १२७ ॥

किञ्च, यः कुर्य्यात् सचिवायत्तां श्रियं तद्व्यसने सति ।
सोऽन्धवज्जगतीपालः सीदेत् सञ्चारकैर्विना ॥१२८॥

स च सर्वकार्य्येषु स्वेच्छातः प्रवर्त्तते। तदत्र (ड) स्वामी प्रमाणम् । एतच्चाहं जानामि कार्य्यतः ।

न सोऽस्ति पुरुषो लोके यो न कामयते श्रियम् ।

---

हृदये मनसि स्वतन्त्रस्पृहा स्वाधीनत्वलालसा पदं स्थानं करोति स च स्वाधीनो भवितुं यतते इत्यर्थः, ततः स्वातन्त्र्यस्पृहया स्वाधीनतालाभेच्छया सः सचिवः नृपतेः राज्ञः प्राणान्तिकं जीवननाशपर्य्यन्तं द्रुह्यति द्वेष्टि नृपतिमिति शेषः, प्रभुं हत्वापि राज्याधिकारं कर्त्तुमिच्छति इति भावः ।

(१२७) विषेति । विषदग्धस्य विषलिप्तस्य भक्तस्य अन्नस्य चलितस्य शिथिलमूलबन्धनस्य दन्तस्य दशनस्य दुष्टस्य विकृतिमापन्नस्य अमात्यस्य मन्त्रिणश्च मूलात् उद्धरणं निराकरणं सुखं सुखदायकं श्रेय इति यावत्, समूलघातमेव मत्‌हननं विधेयमिति भावः ।

(१२८) य इति । यो राजा श्रियं राजलक्ष्मीं सचिवायत्तां मन्त्रिहस्तगतां कुर्य्यात् स जगतीपालः तद्व्यसने तस्य मन्त्रिणः व्यसने मरणाद्यापदि इत्यर्थः, सञ्चारकैः चालकैर्विना अन्धवत् अन्ध इव सीदेत् विषादमाप्नुयात् ।

(ड) स्वामी प्रमाणं—स्वामिने यद्रोचते तत् कुरु ।

(१२९) नेति । लोके जगति यः पुरुषः श्रियं लक्ष्मीं न कामयते

परस्य युवतीं रम्यां साकाङ्क्षं वीक्षते न कः ॥ १२९ ॥

सिंहो (ढ) विमृश्याह, "भद्र! यद्यपि एवं, तथापि सञ्जीवकेन सह मम महान् स्नेहः।

पश्य, कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः।
अशेषदोषदुष्टोऽपि कायः कस्य न वल्लभः? ॥ १३० ॥

अन्यच्च, अप्रियाण्यपि कुर्वाणो यः प्रियः प्रिय एव सः।
दग्धमन्दिरसारेऽपि कस्य वह्नावनादरः?" ॥ १३१ ॥

दमनको वदति, "देव! स एव दोषः।

यतः, यस्मिन्नेवाधिकं चक्षुरारोपयति पार्थिवः।
सुतेऽमात्येऽप्युदासीने स लक्ष्म्याश्रीयते जनः ॥१३२॥

---

इच्छति सः तादृशः पुरुषः न अस्ति, कः जनः परस्य अन्यस्य युवतीं रम्यां सुन्दरीं भार्य्यां साकाङ्क्षं सतृष्णं न वीक्षते पश्यति?

(ढ) विमृश्य—स्वयं विचिन्त्य।

(१३०) कुर्वन्निति। व्यलीकानि अनिष्टानि कुर्वन् घटयन्नपि यः जनः प्रियः प्रीतिभाजनं स एव प्रियः प्रकृतो बन्धुः, अशेषाः बहुविधाः दोषाः रोगाः तैर्दुष्टोऽपि दूषितोऽपि कायः शरीरं कस्य जनस्य न वल्लभः न प्रियः? प्रत्युत सर्वस्यैवेत्यर्थः।

(१३१) अप्रियाणीति। अप्रियाणि अहितानि कुर्वाणोऽपि यः प्रियः प्रीतिकरः स एव प्रियः, दग्धः भस्मीकृतः मन्दिरसारः स्टह-श्रेष्ठः येन तस्मिन्नपि वह्नौ अग्नौ कस्य जनस्य अनादरः अश्रद्धा?

(१३२) यस्मिन्निति। पार्थिवः राजा यस्मिन्नेव सुते पुत्रे अमात्ये अनुजीविनि उदासीने असम्पृक्तेऽपि अधिकं स्नेहं चक्षुः आरोपयति निक्षिपति स जनः लक्ष्म्या श्रिया आश्रीयते सेव्यते।

श्रूयतां देव! अप्रियस्यापि पथ्यस्य परिणामः सुखावहः।
वक्ता श्रोता च यत्रास्ते रमन्ते तत्र सम्पदः ॥१२३॥

त्वया च (ण) मूलभृत्यान् (त) अपास्यायमागन्तुकः (थ) पुरस्कृतः (द)। एतच्चानुचितं कृतम्।

यतः, मूलभृत्यापराधेन नागन्तून् प्रतिपालयेत्।
नातः परतरोऽन्योऽस्ति राज्यभेदकरो यतः ॥१२४॥

सिंहो ब्रूते, "मदाश्चर्य्यम्। यन्मयाऽयमभयवाचं दत्त्वानीतः (ध) संवर्द्धितश्च, तत् कथं (न) द्रुह्यति?" दमनको वदति, "देव!

---

(१२३) अप्रियस्यापि। अप्रियस्य आपाततः अनभिमतस्यापि पथ्यस्य हितस्य वस्तुनः परिणामः चरमः सुखावहः सुखप्रदः। यत्र स्थाने वक्ता सदुपदेशकः श्रोता सदुपदेशग्रहीता च आस्ते विद्यते तत्र सम्पदः सर्वैश्वर्य्याणि रमन्ते प्रीत्या तिष्ठन्ति।

(ण) मूलभृत्यान्—प्राचीनामात्यान्।

(त) अपास्य—विहाय (अप + अस् + यप्)।

(थ) आगन्तुकः—नवागतः अज्ञातकुलशील इति यावत्।

(द) पुरस्कृतः—श्रेष्ठत्वेन सर्वकार्य्ये नियुक्तः।

(१२४) मूलेति। मूलभृत्यापराधेन प्राचीनामात्यानां दोषोद्घाटनं कृत्वा आगन्तून् अपरिचितान् न प्रतिपालयेत् न नियोजयेदित्यर्थः। यतः अतः अस्मात् जनात् परतरः अन्यतरः राज्यभेदकरः रहस्यप्रकाशनेन राज्यनाशकः अन्यः नास्ति।

(ध) संवर्द्धितः—अभ्युदयं प्रापितः।

(न) द्रुह्यति—विरुणद्धि, हिनस्ति।

दुर्ज्जनः प्रकृतिं याति सेव्यमानोऽपि नित्यशः ।
स्वेदनाभ्यञ्जनोपायैः श्वपुच्छमिव नामितम् ॥ १३५ ॥

अपरञ्च, स्वेदितो मर्द्दितश्चैव रज्जुभिः परिवेष्टितः ।
मुक्तो द्वादशभिर्वर्षैः श्वपुच्छः प्रकृतिं गतः ॥ १३६ ॥

अन्यच्च, वर्द्धनं वाथ सम्मानं खलानां प्रीतये कृतः ।
फलन्त्यमृतसेकेऽपि न पथ्यानि विषद्रुमाः ॥ १३७ ॥

अतोऽहं ब्रवीमि,
अपृष्टोऽपि हितं ब्रूयात् यस्य नेच्छेत् पराभवम् ।

---

(१३५) दुर्ज्जन इति । दुर्ज्जनः नित्यशः प्रतिदिनं चिरमिति भावः, सेव्यमानः सन्तोष्यमाणोऽपि प्रकृतिं स्वभावं दुर्ज्जनत्वमित्यर्थः याति लभते प्रकृतिं न मुञ्चतीत्यर्थः । किमिवेत्याह, स्वेदेति । स्वेदनानि मर्द्दनानि अभ्यञ्जनानि तैलादिलेपनानि तान्येव उपायास्तैः नामितम् आपाततः सरलतामापादितं श्वपुच्छं कुक्कुर पुच्छमिव ।

(१३६) स्वेद इति । स्वेदितः तापितः मर्द्दितः तैलाभ्यञ्जनैरित्यर्थः रज्जुभिः सूत्रैः परिवेष्टितः बद्धश्च द्वादशभिः वर्षैः द्वादशवत्सरानन्तरं बहोः कालात् परमपीत्यर्थः मुक्तः रज्जुबन्धनात् निष्कृतः सन् श्वपुच्छः कुक्कुरलाङ्गूलं कर्त्ता प्रकृतिं स्वभाव वक्रतां गतः प्राप्तः ।

(१३७) वर्द्धनमिति । वर्द्धनम् अन्नवस्त्रादिना पोषणं सम्मानम् उन्नतिप्रदानञ्च खलानां क्रूरप्रकृतीनां प्रीतये सन्तोषाय कृतः ? भवतीति शेषः । विषद्रुमाः विषवृक्षाः अमृतसेकेऽपि अमृतेन अभिषिक्ताः अपीत्यर्थः पथ्यानि मधुराणि सुफलानि न फलन्ति उत्पादयन्ति, प्रकृतिर्दुरतिक्रमणीयेति भावः ।

(१३८) अपृष्ट इति । यस्य पराभवं पराजयं न इच्छेत् प्रार्थयेत अपृष्टोऽपि अनाहूतोऽपि तं जनं हितं ब्रूयात् उपदिशेत् सतां साधू-

एष एव सतां धर्मो विपरीतमतोऽन्यथा ॥ १२८ ॥

तथा चोक्तम्,

स स्निग्धोऽकुशलान्निवारयति यस्तत्कर्म यन्निर्मलं

सा स्त्री यानुविधायिनी स मतिमान् यः सद्भिरभ्यर्च्यते ।

सा श्रीर्या न मदं करोति, स सुखी यस्तृष्णया मुच्यते

तन्मित्रं यदकृत्रिमं स पुरुषो यः खिद्यते नेन्द्रियैः ॥ १२९ ॥

यदि (प) सञ्जीवकव्यसनार्दितो विज्ञापितोऽपि स्वामी (फ) न निवर्त्तते, तदा भृत्यस्य न दोषः ।

तथा च, नृपः कामासक्तो न गणयति कार्य्यं न च हितं

---

नाम् एष एव धर्म्मः अतः अन्यथा अन्यद्रूपमाचरतामिति शेषः विपरीतम् अधर्म इत्यर्थः ।

(१२९) स इति । यः अकुशलात् अशुभात् निवारयति सः स्निग्धः प्रणयी । यत् निर्मलं दोषसम्पर्कशून्यं तत् एव कर्म या अनुविधायिनी अनुकूलचारिणी पतिच्छन्दानुवर्त्तिनीति यावत् सा स्त्री यः सद्भिः विद्वद्भिः अभ्यर्च्यते पूज्यते सः मतिमान् बुद्धिमान् या मदं गर्वं न करोति जनयति सा श्रीः सम्पत् । यः तृष्णया उत्कटवासनया मुच्यते त्यज्यते न अभिभूयते इत्यर्थः स सुखी सुखभाक् । यत् अकृत्रिमं तत् मित्रं बन्धुः यः पुरुषः इन्द्रियैः न खिद्यते वशीक्रियते सः पुरुषः । सर्वत्र तदित्यस्य प्रशस्तार्थः ।

(प) सञ्जीवकव्यसनार्दितः—सञ्जीवकस्नेहासक्तः ।

(फ) न निवर्त्तते—सञ्जीवकं प्रति विश्वासात् न विरमति ।

(१४०) नृप इति । कामासक्तः भोगव्यसनासक्तः नृपः राजा कार्य्यं कर्त्तव्यं न गणयति हितं हितकरं वचनं च न गणयति विचारयति

यथेष्टं स्वच्छन्दः प्रविचरति मत्तो गज इव ।
ततो मानध्मातः स पतति यदा शोकगहने
तदा भृत्ये दोषान् क्षिपति न निजं वेत्त्यविनयम्" ॥१४०॥

पिङ्गलकः स्वगतम्,

न परस्यापवादेन परेषां दण्डमाचरेत् ।
आत्मनावगमं कृत्वा बध्नीयात् पूजयेत वा ॥ १४१ ॥

तथा चोक्तम्, गुणदोषावनिश्चित्य विधिना ग्रहनिग्रहौ ।
स्वनाशाय यथा न्यस्तो दर्पात् सर्पमुखे करः ॥ १४२ ॥

---

प्रत्युत मत्तः मदोत्कटः गज इव करी इव स्वच्छन्दः स्वकीयच्छन्दानुवर्त्ती स्वेच्छाचारीति यावत् सन् यथेष्टं यथाभिप्रेतं प्रविचरति आचरति गजपक्षे भ्रमति। ततः पश्चात् यदा स मानध्मातः गर्वाभिभूतः सन् शोकगहने दुष्प्रतीकारायां विपदि पतति तदा भृत्ये सेवके दोषान् क्षिपति अर्पयति निजं स्वकीयम् अविनयम् असदाचरणं न वेत्ति न जानाति न पश्यतीति यावत् ।

(१४१) नेति। परेषाम् अपवादेन अन्यकर्त्तृकदोषारोपणेन परेषाम् अन्येषां दण्डं शासनं न आचरेत् न कुर्य्यात् आत्मना स्वयम् अवगमम् अनुसन्धानं कृत्वा किमयं दुष्टोऽदुष्टो वेति ज्ञात्वेत्यर्थः बध्नीयात् हन्यात् शिष्यादित्यर्थः पूजयेत सम्मानयेद्वा। स्वयम् आचरणं परिज्ञाय दण्ड्यस्य दण्डं सम्मानार्हस्य सम्मानं कुर्य्यादित्यर्थः ।

(१४२) गुणेति। गुणदोषौ उपकारकोऽयमपकारको वेत्यर्थः अनिश्चित्य अनिर्द्धार्य्य विधिना यथाविधि ग्रहनिग्रहौ पूजादण्डौ दर्पात् गर्वेण सर्पमुखे न्यस्तः प्रसारितः करः यथा हस्त इव स्वनाशाय आत्मविनाशाय भवत इति शेषः। अविचारको राजा न चिरं राज्यं रक्षितुं शक्नुयादित्यर्थः ।

प्रकाशं ब्रूते, "तदा सञ्जीवकः किं (ब) प्रत्यादिश्यताम्"। दमनकः ससम्भ्रममाह, "देव ! मा मैवं तावत्। (भ) मन्त्रभेदो जायते।

तथा चोक्तम्, मन्त्रबीजमिदं गुप्तं रक्षणीयं तथा यथा।

मनागपि न भिद्येत तद्भिन्नं न प्ररोहति ॥ १४३ ॥

किञ्च, आदेयस्य प्रदेयस्य कर्त्तव्यस्य च कर्मणः।

क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ १४४ ॥

तदवश्यं समारब्धं (म) महता प्रयत्नेन सम्पादनीयम्।

किञ्च, मन्त्रो योध इवाधीरः सर्वाङ्गैः संवृतैरपि।

---

(ब) प्रत्यादिश्यतां—परित्यज्यताम्।

(भ) मन्त्रभेदः—गुप्तमन्त्रस्य प्रकाशनम्।

(१४३) मन्त्रबीजमिति। इदं गुप्तम् अन्यसन्निधौ अप्रकाशनीयं मन्त्रबीजं मन्त्ररूपोऽङ्कुरः तथा येन तेन प्रकारेण सर्वप्रयत्नेनेत्यर्थः। रक्षणीयं भेदं न प्रापनीयं यथा येन प्रकारेण मनागपि स्तोकमपि न भिद्येत भेदं लभेत तत् बीजं भिन्नं प्रकाशितं सत् न प्ररोहति नाङ्कुरं जनयति न सफलं भवतीत्यर्थः।

(१४४) आदेयस्येति। आदेयस्य ग्रहणीयस्य प्रदेयस्य प्रदातव्यस्य कर्त्तव्यस्य आवश्यकत्वेन सम्पादनीयस्य कर्मणः कार्य्यस्य क्षिप्रं सत्वरं अक्रियमाणस्य असम्पाद्यमानस्य सतः कालः कालातिपात इत्यर्थः तद्रसं तस्य कर्मणः फलं पिबति। कालातिपातेन कार्य्यध्वंसो भवतीत्यर्थः।

(म) समारब्धम्—उपक्रान्तं कर्म।

(१४५) मन्त्र इति। अधीरः चपलः बहुकालमेकरूपं स्थातुं अक्षमः मन्त्रः योध इव योद्धृपुरुष इव संवृतैः गुप्तैः अन्यत्र वर्माद्यैतैरपि

चिरं न सहते स्थातुं परेभ्यो भेदशङ्कया ॥ १४५ ॥

यदि असौ दृष्टदोषोऽपि (य) दोषान्निवर्त्य सन्धातव्य-स्तदतीवानुचितम् ।

यतः, सकृद्दुष्टं यो नु मित्रं पुनः सन्धातुमिच्छति ।
स मृत्युमेव गृह्णाति गर्भमश्वतरी यथा" ॥ १४६ ॥

सिंहो ब्रूते, "ज्ञायतां तावत् किमस्माकमसौ कर्तुं समर्थः ।" दमनक आह, "देव !

अङ्गाङ्गिभावमज्ञात्वा कथं सामर्थ्यनिर्णयः ।
पश्य टिट्टिभमात्रेण समुद्रो व्याकुलीकृतः" ॥ १४७ ॥

सिंहः पृच्छति, "कथमेतत् ?" दमनकः कथयति, "समुद्रतीरे टिट्टिभदम्पती (र) निवसतः । अथ टिट्टिभी

---

सर्वाङ्गैः उपलक्षितः परेभ्यः शत्रुभ्यः भेदशङ्कया प्रकाशभयेन अन्यत्र पराजयभीत्या चिरं स्थातुम् अभिन्नो भवितुं न सहते न पारयति ।

(य) दृष्टदोषः—प्रमाणीकृतापराधः ।

(१४६) सकृदिति । नु भोः यो जनः सकृत् एकवारं दुष्टं प्रमाणीकृतापराधं मित्रं बन्धुं हितैषिणमिति यावत् पुनः सन्धातुं तेन सह पुनः मिलितुम् अभिलषति सः जनः अश्वतरी सर्पीविशेषः गर्भं यथा गर्भमिव मृत्युमेव आत्मविनाशमेव गृह्णाति आह्वयतीत्यर्थः ।

(१४७) अङ्गाङ्गीति । अङ्गाङ्गिभावम् अन्योन्यसम्पर्कम् अज्ञात्वा अविदित्वा कथं केन प्रकारेण सामर्थ्यनिर्णयं सामर्थ्यनिराकरणं टिट्टिभमात्रेण एकेनैव टिट्टिभेन समुद्रः व्याकुलीकृतः क्षुब्धीकृतः पश्य ।

(र) टिट्टिभदम्पती—टिट्टिभमिथुनम् । (जाया च पतिश्चेति द्वन्द्वे जायाशब्दस्य दमादेशः) ।

आसन्नप्रसवा भर्त्तारमाह, नाथ! प्रसवयोग्यस्थानमन्विष्यताम्। टिट्टिभोऽवदत्। नन्विदमेव स्थानं प्रसूतियोग्यम्। सा ब्रूते, (ल) समुद्रवेलया व्याप्यते स्थानमेतत्। सोऽब्रवीत्, भद्रे! किमहं निर्बलः? मम गृहावस्थितान्यण्डानि समुद्रेणापहर्त्तव्यानि? टिट्टिभी विहस्याह, नाथ! त्वया समुद्रेण च महदन्तरम् (व)।

अथवा, दुःखमात्मा परिच्छेत्तुमेव योग्यो न वेति वा।
अस्तीदृग् यस्य विज्ञानं स कृच्छ्रेऽपि न सीदति॥१४८॥

अपिच, अनुचितकर्मारम्भः स्वजनविरोधी बलीयसा स्पर्द्धा।
प्रमदाजनविश्वासो मृत्योर्द्वाराणि चत्वारि॥१४९॥

ततः स्वामिवचनात् तत्रैव प्रसूता सा। एतत् सर्वं

---

(ल) समुद्रवेलया— समुद्रजलप्रवाहेण।

(व) महदन्तरं—महान् प्रभेदः।

(१४८) दुःखमिति। आत्मा स्वयं योग्यः इदं कार्य्यं सम्पादयितुं समर्थः न वेति परिच्छेत्तुं निर्द्धारयितुं निर्णेतुमिति यावत् दुःखमेव कष्टमेव स्वसामर्थ्यनिरूपणं न सुकरमित्यर्थः। किन्तु यस्य जनस्य ईदृक् एतादृशम् आत्मबलाबलनिरूपणविषयकं विज्ञानं बोधः अस्ति सः कृच्छ्रेऽपि विपदि पतितोऽपि न सीदति अवसन्नो भवति न विषादमाप्नुयादिति यावत्।

(१४९) अनुचितेति। अनुचितस्य दुःसाध्यस्य कर्मणः आरम्भः साधयितुमुद्यमः स्वजनेन आत्मीयेन बन्धुनेति यावत् विरोधः विच्छेदघटनं बलीयसा बलवत्तरेण स्पर्द्धा प्रतिद्वन्द्विता प्रमदाजनविश्वासः नारीषु प्रत्ययः एतानि चत्वारि मृत्योर्द्वाराणि यमस्य प्रवेशमार्गाः।

श्रुत्वा समुद्रेणापि तच्छक्तिज्ञानार्थिना तदण्डान्यपहृतानि । ततस्तु टिट्टिभी शोकार्त्ता भर्त्तारमाह, नाथ ! कष्टमापतितम् (श) । अण्डानि मे नष्टानि (ष) । टिट्टिभोऽवदत्, प्रिये ! मा भैषीः । इत्युक्त्वा पक्षिणां (स) मेलकं कृत्वा पक्षिस्वामिनो गरुडस्य समीपं गतः । निजाण्डानां विनाशकथां निवेदयति, ततस्तेन गरुत्मता, तद्वचनमाकर्ण्य प्रभुर्भगवान् नारायणः (ह) सृष्टिस्थितिप्रलयहेतुर्विज्ञप्तः । ततो भगवदाज्ञां मौलौ (क्ष) निधाय समुद्रसमीपं गतः । ततस्तद्वचनमाकर्ण्य समुद्रस्तान्यण्डानि समर्पितवान् । अतोऽहं ब्रवीमि । अङ्गाङ्गिभावमज्ञात्वा इत्यादि । राजाह, कथमसौ ज्ञातव्यो (क) द्रोहबुद्धिरिति । दमनकः पुनराह, यदासौ (ख) शृङ्गाग्रप्रहरणाभिमुखश्चकित इवागच्छति तदा ज्ञास्यति स्वामी । एवमुक्त्वा सञ्जीवकसमीपं गतः । तत्र गतश्च मन्दं मन्दमुपसर्पन् विस्मितमिवात्मानमदर्शयत् । ततः सञ्जीवकेन सादरमुक्तम् । भद्र दमनक ! कुशलं ते ? दमनको ब्रूते, अनुजीविनां कुतः कुशलम् ?

---

(श) कष्टमापतितं—विपदुपस्थिता । (ष) नष्टानि—अपहृतानि ।

(स) मेलकं— समवायम् । सर्वैः पक्षिभिः मिलित्वेत्यर्थः ।

(ह) सृष्टिस्थितिप्रलयहेतुः—उत्पत्तिरक्षाविनाशकारणम् ।

(क्ष) मौलौ—शिरसि । (क) द्रोहबुद्धिः—विद्रोहभावापन्नः ।

(ख) शृङ्गाग्रप्रहरणाभिमुखः—शृङ्गयोरग्रं तेन प्रहरणं प्रहारः तस्मिन् अभिमुखः उद्यतः ।

यतः, सम्पत्तयः पराधीनाः सदा चित्तमनिर्वृतम् ।
स्वजीवितेऽप्यविश्वासस्तेषां ये राजसंश्रयाः ॥१५०॥

अन्यच्च,

कोऽर्थान् प्राप्य न गर्वितो विषयिणः कस्यापदोऽस्तङ्गताः
स्त्रीभिः कस्य न खण्डितं भुवि मनः को वास्ति राज्ञां प्रियः ।
कः कालस्य भुजान्तरं न च गतः कोऽर्थी गतो गौरवम्
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ॥१५१॥

सञ्जीवकेनोक्तम्, सखे ! ब्रूहि किमेतत् ? दमनक आह, किं ब्रवीमि मन्दभाग्यः ।

पश्य, यथा समुद्रे निमग्नो लब्ध्वा सर्पावलम्बनम् ।

---

(१५०) सम्पत्तय इति । ये राजसंश्रयाः राजा संश्रयः अवलम्बनं येषां तथोक्ताः राजसेवकाः तेषां सम्पत्तयः ऐश्वर्याणि पराधीनाः अन्य-निदेशायत्ताः सदा नित्यकालं चित्तं मनः अनिर्वृतम् अनिश्चिन्तम् असु-खितमिति यावत् कदा राजा किमाज्ञापयतीति चिन्तया व्याकुल-मित्यर्थः । स्वजीविते स्वजीवनेऽपि अविश्वासः अप्रत्ययः । युद्धविघ्न-द्युपस्थितिशङ्कयेति भावः ।

(१५१) क इति । कः जनः अर्थान् धनानि प्राप्य न गर्वितः न धनमत्तः भवतीति शेषः । कस्य विषयिणः आपदः अस्तं गताः न सन्तीत्यर्थः । कस्य स्त्रीभिः मनः न खण्डितं न विकलीकृतम् । को वा जनः राज्ञां नृपाणां प्रियः अभिमतः । कः जनः कालस्य यमस्य भुजान्तरं हस्ताग्रकार्यं मृत्युमित्यर्थः न गतः । कः अर्थी याचकः गौरवं सम्मानं गतः । को वा पुमान् पुरुषः दुर्जनवागुरासु दुर्जन-प्रयुक्तेषु फांपक्षेषु पतितः संरुद्धः सन् क्षेमेण निर्विघ्नेन यातः निष्कृतिं प्राप्तः ।

न मुञ्चति न चादत्ते तथा मुग्धोऽस्मि सम्प्रति ॥१५२॥

यतः, एकत्र राजविश्वासो नश्यत्यन्यत्र बान्धवः ।
किं करोमि क्व गच्छामि पतितो दुःखसागरे ॥१५३॥

इत्युक्त्वा दीर्घं निःश्वस्योपविष्टः। सञ्जीवको ब्रूते, तथापि सुविस्तरं (ग) मनोगतं मित्र! कथ्यताम्। दमनकः सुनिभृतमाह, यद्यपि राजविश्वासोऽन्यस्मै न कथनीयस्तथापि भवानस्मदीयप्रत्ययादागतः स्थितश्च तन्मया (घ) परलोकार्थिनाऽवश्यं तव हितमाख्येयम् (ङ)। शृणु। अयं स्वामी तवोपरि (च) विकृतबुद्धिः रहस्येवमुक्तवान्। सञ्जीवकमेव हत्वा स्वपरिवारं (छ) तर्पयामि। एतच्छ्रुत्वा सञ्जीवकः परं विषादमगमत्। दमनकः पुनराह, अलं

---

(१५२) यथेति। यथा समुद्रे निमग्नः पतितो जनः सर्पावलम्बनं सर्प एव आश्रयस्तं लब्ध्वा न मुञ्चति त्यजति न च आदत्ते गृह्णाति तथा सम्प्रति इदानीं मुग्धः किंकर्त्तव्यविमूढः अस्मि।

(१५३) एकत्रेति। एकत्र एकस्मिन् पक्षे राजविश्वासः राज्ञः सम्बन्धम् अन्यत्र अपरतः बान्धवः भ्रातृत्वं मित्रमित्याशयः नश्यति विनाशं गच्छति अहं किं करोमि क्व कुत्र गच्छामि दुःखमेव सागरः तस्मिन् दुःखार्णवे पतितः निमग्नः।

(ग) मनोगतं—हृदये स्थितं भावम्।

(घ) परलोकार्थिना—परलोके शुभां गतिमिच्छता।

(ङ) आख्येयं—कथनीयम्।

(च) विकृतबुद्धिः—विकृता विरूपा बुद्धिर्यस्य सः। अप्रियाचारी।

(छ) तर्पयामि—प्रीणयामि।

विघाटेन, (ञ) प्राप्तकालकार्य्यमनुष्ठीयताम्। सञ्जीवकः क्षणं विमृश्याह, स्पष्टार्थं खल्विदमुच्यते।

दुर्जनगम्या नार्य्यः प्रायेणापात्रभृद्भवति राजा।
कृपणानुसारि च धनं देवो गिरिजलधिवर्षी च ॥१५४॥

तथा, नीचमाश्रयते लक्ष्मीरकुलेन सरस्वती।
अपात्रं भजते नारी गिरौ वर्षति वासवः॥ १५५॥

स्वगतं किमिदमेतद्विचेष्टितं न वेत्त्येतद्व्यवहारादेव निर्णेतुं न शक्यते।

यतः, कश्चिदाश्रयसौन्दर्य्याद्धत्ते शोभामसज्जनः।
प्रमदालोचनन्यस्तं मलीमसमिवाञ्जनम्॥ १५६॥

---

(ञ) प्राप्तकालकार्य्यं—समयानुरूपं कर्म।

(१५४) दुर्जनेति। नार्य्यः स्त्रियः सुन्दर्य्य इति भावः प्रायेण दुर्जनगम्याः दुर्जनलभ्याः भवन्तीति शेषः। राजा अपात्रभृत् अनुपयुक्तपोषकः भवति। धनम् अर्थः कृपणं व्ययकुण्ठम् अनुसरतीति तत् कृपणानुसारि कृपणाधिगतं देवः इन्द्रः गिरौ पर्वते जलधौ समुद्रे च वर्षतीति तथोक्तः भवति।

(१५५) नीचमिति। लक्ष्मीः नीचं हीनप्रकृतिकं जनं कृपणमिति यावत् आश्रयते अभिगच्छति, अकुलेन हीनवंशीयेन पुरुषेण सह सरस्वती तिष्ठतीति शेषः, नारी स्त्री अपात्रम् असज्जनं भजते, वासवः- इन्द्रः गिरौ पर्वते वर्षति।

(१५६) कश्चिदिति। कश्चित् असज्जनः असत्पुरुषः आश्रयसौन्दर्य्यात् आश्रयगुणेन प्रमदालोचनन्यस्तं कामिनीनेत्रदत्तं मलीमसं मलिनम् अञ्जनं कज्जलमिव शोभां धत्ते लभते। नीचोऽपि आश्रयगुणेनोत्कृष्टो भवतीत्यर्थः।

तत्र विचिन्त्योक्तम्, कष्टं किमिदमापतितम्। यतः,

आराध्यमानो नृपतिः प्रयत्नान्न तोषमायाति किमत्र चित्रम्।
अयं त्वपूर्वः प्रतिमाविशेषो यः सेव्यमानो रिपुतामुपैति ॥१५७

तदयमशक्यार्थः (झ) प्रयत्नः। यतः,

निमित्तमुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रसीदति।
अकारणद्वेषि मनस्तु यस्य वै
कथं जनस्तं परितोषयिष्यति ॥ १५८ ॥

किं मयापकृतं (ञ) राज्ञः? अथवा निर्निमित्तापकारिणो हि राजानः। दमनको ब्रूते, एवमेवैतत्। शृणु।

---

(१५७) आराध्यमान इति। नृपतिः राजा प्रयत्नात् सविशेषम् आराध्यमानः सेव्यमानोऽपि तोषं प्रीतिं न एति गच्छति अत्र अस्मिन् विषये किं चित्रम् आश्चर्य्यम्। तु किन्तु अयम् अपूर्वः अननुभूतः प्रतिमाविशेषः देवमूर्त्तिस्वरूपः यः सेव्यमानः पूज्यमानः सन् रिपुतां शत्रुताम् उपैति प्राप्नोति।

(झ) अशक्यार्थः—अशक्यः अप्राप्यः अर्थः प्रयोजनं यस्य सः विफल इत्यर्थः।

(१५८) निमित्तमिति। हि निश्चितं यः निमित्तं कारणम् उद्दिश्य उपलक्ष्य प्रकुप्यति क्रोधपरवशो भवति ध्रुवं निश्चितं स तस्य निमित्तस्य अपगमे नाशे सति प्रसीदति तुष्यति। यस्य मनः अकारणद्वेषि निर्निमित्तविद्वेषभावापन्नं जनः तं कथं केन प्रकारेण परितोषयिष्यति प्रसादयिष्यति।

(ञ) अपकृतम्—अपराद्धम्।

विप्रैः स्निग्धैरुपकृतमपि द्वेष्यतामेति कश्चित्
साक्षादन्यैरपकृतमपि प्रीतिमेवोपयाति।
चित्रं चित्रं किमथ चरितं नैकभावाश्रयाणां
सेवाधर्मः परमगहनो योगिनामप्यगम्यः॥ १५९॥

अन्यच्च, कृतशतमसत्सु नष्टं सुभाषितशतं च नष्टमबुधेषु।
वचनशतमवचनकरे बुद्धिशतमचेतने नष्टम्॥ १६०॥

किञ्च, चन्दनतरुषु भुजङ्गा जलेषु कमलानि तत्र च ग्राहाः।
गुणघातिनश्च पिशुना भोगे न सुखान्यविघ्नानि॥१६१॥

---

(१५९) विप्रैरिति। कश्चित् जनः विप्रैः विद्वद्भिः स्निग्धैः सुहृद्भिः उपकृतम् अपि द्वेष्यतां शत्रुभावम् उपैति धत्ते। अन्यैः विपक्षैः साक्षात् प्रत्यक्षम् अपकृतम् अपि प्रीतिं तोषम् उपयाति लभते नैकभावाश्रयाणां अव्यवस्थितचित्तानां चरितं किमथ विचित्रं चित्रं चित्रं महदाश्चर्यं योगिनाम् अनन्यासक्तचित्तानामपि अगम्यः असाध्यः सेवाधर्मः आराधनं परमगहनः अतीव कृच्छ्रसाध्यः।

(१६०) कृतमिति। असत्सु असज्जनेषु कृतशतं शतशः उपकारः नष्टं विफलम्, अबुधेषु अविज्ञेषु हिताहितविचाराक्षमेषु इति यावत् सुभाषितशतं शतशः सदुपदेशः नष्टम्, अवचनकरे अवधीरित-हितवचने जने वचनशतं नष्टम्, अचेतने चेतनाशून्ये जड़े द्रव्यश्च बुद्धिशतं शतशः बुद्धिप्रदानं नष्टं सर्वत्र भवतीति शेषः।

(१६१) चन्दनेति। चन्दनतरुषु चन्दनवृक्षेषु भुजङ्गाः सर्पाः जलेषु कमलानि पद्मानि तत्र च तस्मिंश्च जले ग्राहाः यादांसि सन्तीति शेषः। भोगे राज्यादिसुखभोगे विषयभोगे वा गुणघातिनः गुणविलोपिनः पिशुनाः खलाः सन्ति अतएव सुखानि अविघ्नानि विघ्नरहितानि न भवन्तीति शेषः। दुःखार्थंभक्तमेव सुखमिति भावः।

अन्यच्च,

मूलं भुजङ्गैः कुसुमानि भृङ्गैः शाखाः प्लवङ्गैः शिखराणि भल्लैः
नास्त्येव तच्चन्दनपादपस्य यन्नाश्रितं दुष्टतरैः कुपङ्कैः ॥१६२॥

दमनको ब्रूते, "अयं तावत् स्वामी वाङ्मधुरः (ट) विष-हृदयो (ठ) मया ज्ञायते।

यतः; दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारितार्द्धासनो
गाढालिङ्गनतत्परः प्रियकथाप्रश्नेषु दत्तादरः।
अन्तर्गूढविषो वहिर्मधुमयश्चातीव मायापटुः
को नामायमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनैः ॥१६३॥

---

(१६२) मूलमिति। मूलम् अधोदेशः भुजङ्गैः सर्पैः, कुसुमानि पुष्पाणि भृङ्गैः, शाखाः विटपानि प्लवङ्गैः वानरैः, शिखराणि अग्र-भागाः भल्लैः तदाख्यास्त्रविशेषवत् पत्रैः, इत्थं चन्दनपादपस्य चन्दन-वृक्षस्य यत् दुष्टतरैः कुपङ्कैः भुजङ्गादिकुप्राणिभिः न आश्रितम् अवलम्बितम् आक्रान्तमिति यावत् तत् नास्त्येव।

(ट) वाङ्मधुरः—वाचा मधुरः मधुरभाषी।

(ठ) विषहृदयः—विषं दुष्टभावः हृदये यस्य सः। अन्तःखलः।

(१६३) दूरादिति। दूरात् उच्छ्रितौ उन्नमितौ पाणी येन स तथोक्तः आर्द्रे स्नेहवाष्पाकुले नयने यस्य सः प्रोत्सारितम् उत्सृष्टम् अर्द्धासनं येन सः अर्द्धासने उपवेष्टुं दत्तावकाशः गाढे आलिङ्गने आश्लेषणे तत्परः गाढमालिङ्गितुमुद्यत इत्यर्थः। प्रियकथाप्रश्ने प्रिय-सम्भाषणे दत्तादरः कृतायत्नः। अन्तः अभ्यन्तरे गूढम् अन्यैरलक्षितं विषं यस्य सः अन्तःखलः वहिः वाह्ये मधुमयः वाङ्मधुर इत्यर्थः अतीव मायापटुः कापट्यदक्षः, अयं नाटकविधिः संसाररङ्गभूमौ ईदृशः नाटकाभिनयः को नाम यः दुर्जनैः असज्जनैः शिक्षितः कृताभ्यासः।

तथाहि,

पोते दुस्तरवारिराशितरणे दीपोऽन्धकारागमे
निर्वाते व्यजनं मदान्धकरिणो दर्पोपशान्त्यै सृणिः ।
इत्थं तद् भुवि नास्ति यस्य विधिना नोपायचिन्ता कृता
मन्ये दुर्जनचित्तवृत्तिहरणे धातापि भग्नोद्यमः ॥ १६४ ॥

सञ्जीवकः स्वगतम् । कष्टं भोः ! कथमहं शस्यभक्षकः सिंहेन व्यापादयितव्यः ।

यतः, द्वयोरेव समं वित्तं द्वयोरेव समं बलम् ।
तयोर्विवादो मन्तव्यो नोत्तमाधमयोः क्वचित् ॥ १६५॥

पुनर्विचिन्त्याह, केनायं राजा ममोपरि (ङ) विकारितः ।

---

(१६४) पोत इति । दुस्तरवारिराशितरणे दुरुत्तीर्य्यसमुद्रपारगमने पोतः अर्णवयानम् अन्धकारागमे ध्वान्तनाशे इत्यर्थः दीपः निर्वाते वायुशून्ये प्रदेशे व्यजनं तालवृन्तं मदान्धकरिणः मदमत्तगजस्य दर्पोपशान्त्यै दर्पनाशाय सृणिः अङ्कुशम् इत्थं विधिना विधात्रा यस्य प्रतीकारार्हस्य विषयस्य उपायचिन्ता प्रतिविधानं न कृता न सृष्टा भुवि भूतले तत् तादृशं नास्ति न विद्यते । सः धातापि विधिरपि दुर्जनचित्तवृत्तिहरणे दुर्जनस्य मनःशुद्धिविधाने भग्नोद्यमः विफलप्रयत्नः मन्ये जानामि । अन्यथा कथं दुर्जनमनसः प्रतीकारो नास्तीत्यर्थः ।

(१६५) द्वयोरिति । ययोः द्वयोः वित्तं सम्पत् समं तुल्यं ययोः द्वयोः बलं वीर्य्यं समं तुल्यं तयोः द्वयोः विवादः विरोधः मन्तव्यः प्रतिद्वन्द्वितया साधीयान् उत्तमाधमयोः क्वचित् कुत्रचिदपि न विवादः मन्तव्य इति शेषः ।

(ङ) विकारितः—विकृतिं प्रापितः ।

(ढ) भेदमुपगताद्राज्ञः सदा भेतव्यम्।

यतः, मन्त्रिणा पृथिवीपालचित्तं विघट्टितं क्वचित्।
वलयं स्फटिकस्येव को हि सन्धातुमीश्वरः ? ॥ १६६ ॥

अन्यच्च, वज्रञ्च राजतेजश्च द्वयमेवातिभीषणम्।
एकमेकत्र पतति पतत्यन्यत् समन्ततः ॥ १६७ ॥

तत्संग्रामे (ण) मृत्युरेवाश्रीयतामिदानीं तदाज्ञानुवर्तनमयुक्तम्।

यतः, मृतः प्राप्नोति वा स्वर्गं शत्रुं हत्वा सुखानि वा।
उभावपि हि शूराणां गुणावेतौ सुदुर्लभौ ॥ १६८ ॥

युद्धकालश्चायम्, यत्रायुद्धे ध्रुवं नाशो युद्धे जीवितसंशयः।
तमेव कालं युद्धस्य प्रवदन्ति मनीषिणः ॥१६९॥

---

(ढ) भेदमुपगतात्—भग्नस्नेहात्।

(१६६) मन्त्रिणेति। क्वचित् कस्मिंश्चित् कर्मणि मन्त्रिणा विघट्टितं विकारं प्रापितं पृथिवीपालस्य राज्ञः चित्तं स्फटिकस्य वलयं भग्नमिति भावः स्फटिकमयभूषणविशेषमिव कः सन्धातुं संयोजयितुं ईश्वरः समर्थः ? न कोऽपीत्यर्थः।

(१६७) वज्रञ्चेति। वज्रं इन्द्रास्त्रं राजतेजश्च राजप्रतापश्च द्वयम् एव अतिभीषणं भयावहम् एकं वज्रम् एकत्र एकस्मिन्नेव स्थाने पतति अन्यत् राजतेजः समन्ततः समन्तात् सर्वत्र पततिप्रसृतं भवति।

(ण) मृत्युरेवाश्रीयतां—मरणमपि वरमित्यर्थः।

(१६८) मृत इति। युद्धे मृतः सन् स्वर्गं प्राप्नोति वा अथवा जीवित इत्यर्थः शत्रुम् अरिं हत्वा विनाश्य सुखानि विजयलाभजनितानि सुखानि वा प्राप्नोति। शूराणां वीराणाम् उभौ अपि एतौ गुणौ स्वर्गलाभसुखलाभरूपौ दुर्लभौ दुष्प्रापौ।

(१६९) यत्रेति। यस्मिन् काले अयुद्धे युद्धाकरणे ध्रुवं निश्चितं

यतः, अयुद्धे हि यदा पश्येन्न किञ्चिद्धितमात्मनः।
युध्यमानस्तदा प्राज्ञो म्रियते रिपुणा सह ॥१७०॥
जये च लभते लक्ष्मीं मृतेनापि सुराङ्गनाम्।
क्षणविध्वंसिनः कायाः का चिन्ता मरणे रणे ॥१७१॥

एतच्चिन्तयित्वा सञ्जीवक आह, भो मित्र! कथमसौ मां जिघांसुरिति ज्ञातव्यः?" दमनको ब्रूते, "यदासौ (त) स्तब्धकर्णः (थ) समुन्नतलाङ्गूलः उन्नतचरणो (द) विवृतास्यस्त्वां पश्यति तदा त्वमपि स्वविक्रमं दर्शयिष्यसि।

यतः, बलवानपि निस्तेजाः कस्य नाभिभवास्पदम्।
निःशङ्कं दीयते लोकैः पश्य भस्मचये पदम् ॥१७२॥

---

नाशः प्राणविनाशः युद्धे आरब्धे तु जीवितसंशयः प्राणनाशसम्भावना तमेव कालं युद्धोपयोगिसमयं मनीषिणः प्रवदन्ति कथयन्ति।

(१७०) अयुद्धे इति। यदा हि प्राज्ञः बुद्धिमान् जनः अयुद्धे युद्धाकरणे किञ्चिदपि स्तोकमपि आत्मनः हितम् इष्टं न पश्येत् जानीयात् तदा रिपुणा सह शत्रुणा सह युध्यमानः युद्धे प्रवर्त्तमानः सन् म्रियते मृत्युं प्राप्नोति।

(१७१) जये इति। जये विजयलाभे लक्ष्मीं सम्पदं लभते, मृतेनापि मरणेनापि (मृ+भावे क्तः) सुराङ्गनां सुरकामिनीं स्वर्गमित्यर्थः। कायाः शरीराणि क्षणविध्वंसिनः क्षणविनाशिनः नश्वरा इति यावत्। एवं सति मरणे रणे वा का चिन्ता अवश्यमेव योद्धव्यमिति भावः।

(त) स्तब्धकर्णः—स्तब्धौ निश्चलौ कर्णौ यस्य सः।

(थ) समुन्नतलाङ्गूलः—उत्क्षिप्तवालधिः।

(द) विवृतास्यः—कृतमुखव्यादानः।

(१७२) बलवानिति। निस्तेजाः तेजोहीनः बलवान् बलसम्पन्नोऽपि कस्य जनस्य न अभिभवास्पदं पराजयस्थानं लोकैः भस्मचये

किन्तु सर्वमेतत् (ध) सुगुप्तमनुष्ठातव्यं नो चेन्न त्वं नाहमित्युक्त्वा दमनकः करटकसमीपं गतः। करटकेनोक्तम्। किं निष्पन्नम्? दमनकेनोक्तम्, निष्पन्नोऽनयोरन्योन्यभेदः। करटको ब्रूते, कोऽत्र सन्देहः।
यतः, बन्धुः को नाम दुष्टानां कुप्येत् को नातियाचितः।
को न तृप्यति वित्तेन कुकृत्ये को न पण्डितः॥१७३॥
अन्यच्च, दुर्वृत्तः क्रियते धूर्त्तैः श्रीमानात्मविवृद्धये।
किं नाम खलसंसर्गः कुरुते नाश्रयाशवत्॥१७४॥
ततो दमनकः पिङ्गलकसमीपं गत्वा देव! समागतोऽसौ पापाशयस्तत् सज्जीभूय स्थीयतामित्युक्त्वा पूर्वोक्ताकारं (न) कारयामास। सञ्जीवकोऽप्यागत्य तथाविधं

---

भक्षराशौ तेजोहीनत्वादिति भावः निःशङ्कं निर्भयं पदं दीयते अर्प्यते। पश्च जानीहि।

(ध) सुगुप्तं—रहसि।

(१७३) बन्धुरिति। दुष्टानां दुर्वृत्तानां कः बन्धुः मित्रं नाम अतियाचितः पुनःपुनः प्रार्थितः सन् कः जनः न कुप्येत् क्रोधपरवशो भवेत्। को जनः वित्तेन धनसम्पदा न तृप्यति गर्वितो भवति। कुकृत्ये कुकार्य्ये परहिंसादौ कः जनः न पण्डितः।

(१७४) दुर्वृत्त इति। धूर्त्तैः शठैः आत्मविवृद्धये आत्मदुरभिसन्धिसाधनार्थं श्रीमान् धनसम्पन्नो लोकः दुर्वृत्तः दुराचारः क्रियते। खलसंसर्गः असत्सङ्गतिः आश्रयम् आधारम् अश्नाति यः सः तद्वत् वह्निवत् किं नाम अनिष्टं न कुरुते विदधाति। प्रत्युत सर्वानर्थमूलमित्यर्थः।

(न) पूर्वोक्ताकारं खलबधार्थत्वाद्याकारम्।

विकृताकारं सिंहं दृष्ट्वा स्वानुरूपं विक्रमं चकार । ततस्तयोः प्रहृते महाहवे (प) सञ्जीवकः सिंहेन व्यापादितः । अथ पिङ्गलकः सञ्जीवकं सेवकं व्यापाद्य विश्रान्तः सशोक इवासीनः (फ) ब्रूते च किं मया (ब) दारुणं कर्म कृतम् ।

यतः, परैः सम्भुज्यते राज्यं स्वयं पापस्य भाजनम् ।
धर्मातिक्रमतो राजा सिंहो हस्तिवधादिव ॥१७५॥

अपरञ्च,

भूम्येकदेशस्य गुणान्वितस्य भृत्यस्य वा बुद्धिमतः प्रणाशे ।
भृत्यप्रणाशो मरणं नृपाणां नष्टापि भूमिः सुलभा न भृत्याः ॥१७६॥

---

(प) महाहवे—महायुद्धे ।

(फ) आसीनः—उपविष्टः ।

(ब) दारुणं—निष्ठुरम् ।

(१७५) परैरिति । राजा हस्तिवधात् हस्तिव्यापादनात् सिंह इव धर्मातिक्रमतः अहिंसादिधर्मोल्लङ्घनात् स्वयं पापस्य हिंसादिपापानुष्ठानस्य भाजनम् आस्पदं भवति राज्यं राज्यशासनजनितं सुखमित्यर्थः परैः अन्यैः अनुजीविभिरित्यर्थः सम्भुज्यते अनुभूयते न तु राज्ञेति भावः ।

(१७६) भूमीति । भूम्येकदेशस्य राज्यांशस्य बुद्धिमतः विवेकधीसम्पन्नस्य गुणान्वितस्य सर्वगुणोपेतस्य भृत्यस्य अनुजीविनश्च प्रणाशे एकत्र अन्यहस्तगमने अन्यत्र मरणे च भृत्यप्रणाशः तादृशस्य भृत्यस्य मरणं नृपाणां राज्ञां मरणं कुत इत्याह भूमिः नष्टापि सती सुलभा अनायासेन आयासेन वा लब्धुं शक्या । भृत्याः अनुजीविनः नष्टाः सन्तः न सुलभा इति शेषः ।

दमनको ब्रूते "स्वामिन् ! कोऽयं नूतनो (भ) न्यायः ? यदरातिं (म) हत्वा सन्तापः क्रियते ?

तथा चोक्तम्,

पिता वा यदि वा भ्राता पुत्रो वा यदि वा सुहृत् ।
प्राणच्छेदकरा राज्ञा हन्तव्या भूतिमिच्छता ॥१७७॥

अपिच, धर्मार्थकामतत्त्वज्ञो नैकान्तकरुणो भवेत् ।
न हि हस्तस्थमप्यर्थं क्षमावान् रक्षितुं क्षमः ॥१७८॥

किञ्च, क्षमा शत्रौ च मित्रे च यतीनामेव भूषणम् ।
अपराधिषु सत्त्वेषु नृपाणां सैव दूषणम् ॥ १७९ ॥

---

(भ) न्यायः—विचारः । (म) अरातिं—शत्रुम् ।

(१७७) पितेति । भूमिं सम्पदम् इच्छता राज्ञा पिता जनको वा यदि वा अथवा भ्राता सहोदरो वा पुत्रो वा यदि वा अथवा सुहृत् मित्रं वा । एते अपि प्राणच्छेदकराः प्राणनाशोद्यताः सन्तः हन्तव्याः अविमृश्यैव वधार्हाः ।

(१७८) धर्मेति । धर्मः अहिंसादिः अर्थः अर्जनवर्द्धनसंरक्षणात्मकं धनं कामः विषयभोगाभिलाषः तेषां त्रिवर्गस्य तत्त्वज्ञः रहस्यवित् जनः एकान्तकरुणः अत्यन्तदयालुः न भवेत् । हि यतः क्षमावान् अत्यन्तक्षमाशीलः हस्तस्थं करतलगतमपि अर्थं धनं रक्षितुं न क्षमः न समर्थो भवतीति शेषः ।

(१७९) क्षमेति । शत्रौ रिपौ मित्रे सुहृदि च क्षमा क्षमाप्रदर्शनमित्यर्थः । यतीनां तापसानां विषयभोगे वीतस्पृहाणामिति यावत् एव भूषणम् अलङ्कारः प्रशंसनीयेति भावः । नृपाणां राज्ञाम् अपराधिषु कृतापराधेषु सत्त्वेषु प्राणिषु सैव क्षमा दूषणं दोषावहा एवेत्यर्थः तथात्वे राज्यरक्षणमशक्यं स्यादिति भावः ।

अपरञ्च, राज्यलोभादहङ्कारादिच्छतः स्वामिनः पदम्।
प्रायश्चित्तं हि तस्यैकं जीवोत्सर्गो न चापरम् ॥१८०॥

अन्यच्च, राजा घृणी ब्राह्मणः सर्वभक्षः
स्त्री चावशा दुष्प्रकृतिः सहायः।
प्रेष्यः प्रतीपोऽधिकृतः प्रमादी
त्याज्या अमी यश्च कृतं न वेत्ति॥ १८१ ॥

सत्याऽनृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या।
नित्यव्यया प्रचुररत्नधनागमा च
वाराङ्गनेव नृपनीतिरनेकरूपा ॥ १८२ ॥

---

(१८०) राज्येति। राज्यलोभात् राजत्वलाभे उत्कटेच्छायाः अहङ्कारात् स्वाम्यपेक्षया राज्यकार्य्ये अहं दक्ष इत्यभिमानात् वा स्वामिनः प्रभोः पदम् अधिकारम् इच्छतः भृत्यस्य तत्र पापकर्मणि जीवोत्सर्गः प्राणविनाश एव एकम् अद्वितीयं प्रायश्चित्तं तादृश-पापमोचनम् अपरम् अन्यत् किमपि न प्रायश्चित्तमिति शेषः।

(१८१) राजेति। घृणी अत्यन्तकरुणः राजा सर्वभक्षः अतीव लुब्ध इत्यर्थः ब्राह्मणः अवशा प्रतिकूलाचारिणी स्त्री भार्य्या दुष्प्रकृतिः अपचरित्रः सहायः अनुचरः प्रतीपः प्रतिकूलगामी उत्तरदायक इत्यर्थः प्रेष्यः किङ्करः प्रमादी अनवहितः व्यसनासक्त इति यावत् अधिकृतः नगररक्षणे नियुक्तः पुरुषः यश्च जनः कृतम् उपकृतं न वेत्ति न जानाति कृतघ्न इत्यर्थः अमी ईदृशाः एते त्याज्याः परिहार्य्याः।

(१८२) सत्येति। नृपनीतिः राजनीतिः वाराङ्गना वारविला-सिनीव अनेकरूपा बहुविधरूपधारिणी दृश्यते इति शेषः। कथमित्याह सत्या कदाचिदिति सर्वत्राध्याहार्य्य अन्वेतव्यम्। सत्या सत्यवादिनी अनृता असत्या परुषा कर्कशा प्रियवादिनी च मधुरा च हिंस्रा

इति (य) कपटवचनेन दमनकेन सन्तोषितः स्वां प्रकृतिमापन्नः पिङ्गलकः सिंहासने समुपविष्टः। दमनकः प्रहृष्टमना भूत्वा राजानमाह, विजयतां महाराज! शुभमस्तु सर्वजगतामित्युक्त्वा यथासुखमवस्थितः। विष्णुशर्मोवाच। सुहृद्भेदः श्रुतः। राजपुत्रा ऊचुः। सुखिनो वयम्। विष्णुशर्माब्रवीत्। अपरमपीदमस्तु।

सुहृद्भेदस्तावद्भवतु भवतां शत्रुनिलये
खलः कालाकृष्टः प्रलयमुपसर्पत्वहरहः।
जनो नित्यं भूयात् सकलसुखसम्पत्तिवसतिः
कथारामे रम्ये सततमिह बालोऽपि रमताम् ॥१८३॥

इति हितोपदेशे सुहृद्भेदो नाम द्वितीयः कथासंग्रहः।

---

हिंसारता दयालुः अनुकूलकारिणी अर्थपरा अर्थग्रहणतत्परा वदान्या दानशीला अपि नित्यव्यया सदा व्ययशीला प्रचुराणां रत्नानां मणिमाणिक्यादीनां धनानाम् अर्थानाञ्च आगमो लाभो यस्याः सा तथोक्ता च। वाराङ्गनाया अपि एतानि विशेषणानि योज्यानि।

(य) कपटवचनेन—छलपूर्णवाक्येन।

(१८३) सुहृद्भेद इति। भवतां शत्रुनिलये शत्रुगृहे तावत् सुहृद्भेदः मित्रेण सह भेदसंघटनं भवतु न तु युष्माकमिति भावः। खलः क्रूरो जनः कालाकृष्टः कालवशवर्त्ती सन् अहरहः प्रतिदिनं प्रलयं नाशम् उपगच्छतु प्राप्नोतु। जनः युष्माकं राज्ये लोकः नित्यं सर्वदैव सकलसुखसम्पत्तिवसतिः सर्वसुखैश्वर्य्यास्पदं भूयात् भवतु इह अस्मिन् रम्ये रमणीये चित्तविनोदने इति यावत् कथा नीतिकथैव आरामः उपवनं तस्मिन् हितोपदेशे ग्रन्थे बालोऽपि अपरिणतबुद्धिरपि किमुत परिणतबुद्धिरिति भावः रमतां क्रीड़तु विहरतु इति यावत् सर्वलाशंस शयांचोट्। इति हितोपदेशेष सुहृद्भेदो नाम द्वितीयः कथासंग्रहः।

# विग्रहः।

पुनः कथारम्भकाले राजपुत्रैरुक्तम्, "आर्य्य! राजपुत्रा वयं तद्विग्रहं श्रोतुं नः कुतूहलमस्ति।" विष्णुशर्म्मोवाच, "यदेव भवद्भ्यो रोचते तत्कथयामि। विग्रहः श्रूयतां, यस्यायमाद्यः श्लोकः,

हंसैः सह मयूराणां विग्रहे तुल्यविक्रमे।
विश्वास्य वञ्चिता हंसाः काकैः स्थित्वारिमन्दिरे" ॥१॥

राजपुत्रा ऊचुः, "कथमेतत् ?" विष्णुशर्म्मा कथयति।
"अस्ति कर्पूरद्वीपे (क) पद्मकेलिनामधेयं सरः। तत्र हिरण्यगर्भो नाम राजहंसः प्रतिवसति। स च सर्व्वैर्जलचरैः पक्षिभिर्मिलित्वा पक्षिराज्येऽभिषिक्तः।

यतः, यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा।
अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥ २ ॥

---

(१) हंसैरिति। तुल्यः समरूपः विक्रमः अभिभवोद्योग इत्यर्थः यस्मिन् तस्मिन् हंसैः सह मयूराणां विग्रहे युद्धे काकैः वायसैः अरिमन्दिरे शत्रुदुर्गे इत्यर्थः स्थित्वा उषित्वा विश्वास्य हंसानाम् आत्मीयत्वेन विश्वासमुत्पाद्य हंसाः वञ्चिताः प्रतारिताः पराजिता इति यावत्।

(क) पद्मकेलिनामधेयं—पद्मकेलिनामकम्।

(२) यदीति। इह भूतले सम्यक् समीचीनः नेता नायकः शासितेति यावत् नरपतिः राजा न स्यात् ततः तदा प्रजा लोकः जलधौ समुद्रे अकर्णधारा नाविकरहिता नौः नौका इव विप्लवेत निमज्जेत्। अराजके जनपदे न कथमपि प्रजारक्षणं भवेदित्यर्थः।

अपरञ्च, प्रजां संरक्षति नृपः सा वर्द्धयति पार्थिवम् ।
वर्द्धनाद्रक्षणं श्रेयस्तदभावे सदप्यसत् ॥ ३ ॥

एकदासौ राजहंसः (ख) सुविस्तीर्णकमलपर्य्यङ्के (ग) सुखासीनः (घ) परिवारपरिवृतस्तिष्ठति । ततः कुतोऽपि देशादागत्य दीर्घमुखो नाम बकः प्रणम्योपविष्टः । राजोवाच, दीर्घमुख ! देशान्तरादागतोऽसि । वार्त्तां कथय । स ब्रूते, देव ! अस्ति महती वार्त्ता । तामाख्यातुकाम (ङ) एव सत्वरमागतोऽहम्, श्रूयताम् । अस्ति जम्बुद्वीपे विन्ध्यो नाम गिरिः । तत्र चित्रवर्णो नाम मयूरः पक्षिराजो निवसति । तस्यानुचरैरहं दग्धारण्यमध्ये चरन्नवलोकितः पृष्टश्च "कस्त्वं कुतः समागतोऽसि ?" ततो मयोक्तम्, "अहं कर्पूरद्वीपस्य राज्ञो हिरण्यगर्भस्यानुचरः । कौतुकाद्देशान्तरं द्रष्टुमागतोऽस्मि ।" तच्छ्रुत्वा पक्षिभि-

---

(३) प्रजामिति । नृपः राजा प्रजां संरक्षति पालयति । सा पार्थिवं पालयितृ वर्द्धयति करादिदानेन पोषयति वर्द्धनात् रक्षणं पालनं श्रेयः शुभकरं तदभावे रक्षणाभावे सत् अपि साधीयोऽपि मङ्गलमपि इत्यर्थः असत् असाधीयः अथवा विद्यमानमपि सर्वस् असत् अविद्यमानमित्यर्थः ।

(ख) सुविस्तीर्णकमलपर्य्यङ्के—सुविस्तीर्णं यत् कमलं तदेव पर्य्यङ्कस्तस्मिन् ।

(ग) सुखासीनः—सुखेन आसीनः उपविष्टः ।

(घ) परिवारपरिवृतः—परिवारेण अनुचरवर्गेण परिवृतः वेष्टितः ।

(ङ) आख्यातुकामः—वक्तुकामः ।

उक्तम्, तदनयोः कीदृशो देशो भद्रतरो राजा वा । ततो मयोक्तम्, आः ! किमेवमुच्यते ? (च) महदन्तरम् । यतः कर्पूरद्वीपः स्वर्गैकदेशः । राजा च द्वितीयः स्वर्गपतिः, कथं वर्णयितुं शक्यते । अत्र मरुस्थले पतिता यूयं किं कुरुथ ? आगच्छतास्मद्देशे । ततस्तद्वचनमाकर्ण्य पक्षिणः सकोपा बभूवुः ।

तथा चोक्तम्,

पयःपानं भुजङ्गानां केवलं विषवर्द्धनम् ।
उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ॥ ४ ॥

अन्यच्च, विद्वानेवोपदेष्टव्यो नाविद्वांस्तु कदाचन ।
वानरानुपदिश्याज्ञान् स्थानभ्रष्टा ययुः खगाः" ॥५॥

राजोवाच, "कथमेतत् ?" दीर्घमुखः कथयति, "„अस्ति नर्मदातीरे पर्वतोपत्यकायां विशालः शाल्मलीतरुः । तत्र निर्मितनीड़े पक्षिणः सुखेन वर्षास्वपि निवसन्ति ।

---

(च) महदन्तरम्—उभयोर्देशयोः राज्ञश्च महान् प्रभेदः ।

(४) पयःपानमिति । भुजङ्गानां सर्पाणां पयःपानं दुग्धपानं केवलं विषवर्द्धनं विषजनकम् । हि तथाहि, मूर्खाणां हिताहितविवेकासमर्थानाम् उपदेशः प्रकोपाय क्रोधोद्दीपकाय न शान्तये प्रबोधाय विफल इत्यर्थः ।

(५) विद्वानिति । विद्वान् विद्यागुणसम्पन्न एव उपदेष्टव्यः हितं वक्तव्यः, अविद्वान् मूर्खस्तु कदाचन कदाचिदपि न उपदेष्टव्यः इत्यर्थः । अज्ञान् मूर्खान् वानरान् उपदिश्य खगाः पक्षिणः स्थानभ्रष्टाः भग्ननीड़ाः सन्तः ययुः अन्यत्र जग्मुः ।

अथ (छ) नीलपटैरिव (ज) जलधरपटलैरावृते (झ) नभस्तले (ञ) धारासारैर्महती वृष्टिर्बभूव। ततो वानरांस्तरुतलेऽवस्थितान् (ट) शीतार्त्तान् कम्पमानानवलोक्य पक्षिभिरुक्तम्, "भो भो वानराः! श्रूयताम्,

अस्माभिर्निर्मिता नीड़ाश्चञ्चुमात्राहृतैस्तृणैः।
हस्तपादादिसंयुक्ता यूयं किमवसीदथ?" ॥ ६ ॥

तच्छ्रुत्वा वानरैः (ठ) जातामर्षैरालोचितम् (ड) "अहो निर्वातनीड़गर्भावस्थिताः (ढ) सुखिनः पक्षिणोऽस्मान् निन्दन्ति। तद्भवतु तावद् वृष्टेरुपशमः" (ण)। अनन्तरं शान्ते (त) पानीयवर्षे तैर्वानरैर्वृक्षमारुह्य सर्वे नीड़ा भग्नाः।

---

(छ) नीलपटैरिव — नीलवर्णचन्द्रातपैरिवेत्यर्थः।

(ज) जलधरपटलैः—मेघसमूहैः।

(झ) आवृते—व्याप्ते, आच्छादिते।

(ञ) धारासारैः — धारासम्पातैः महतीभिः धाराभिः।

(ट) शीतार्त्तान् — शीतकातरान्।

(६) अस्माभिरिति। अस्माभिः चञ्चुमात्राहृतैः चञ्चुमात्रसाधनेन संगृहीतैः तृणैः नीड़ाः आवासाः निर्मिताः कृताः यूयं हस्तौ च पादौ च हस्तपादम् आदि येषां तैः संयुक्ताः हस्तादिभिः अङ्गैः अन्विताः सन्तः किं कथम् अवसीदथ क्लिश्यथ।

(ठ) जातामर्षैः—जातः उत्पन्नः अमर्षः क्रोधो येषां तैः। क्रोधान्वितैः। (ड) आलोचितं—वितर्कितम्।

(ढ) निर्वातनीड़गर्भावस्थिताः—निर्नास्ति वातो येषु ते निर्वाताः ये नीड़ाः तेषु अवस्थिताः।

(ण) उपशमः—विरतिः। (त) शान्ते—निवृत्ते।

तेषां पक्षिणामङ्गानि चाधः पातितानि । अतोऽहं ब्रवीमि, "विद्वानेवोपदेष्टव्य इत्यादि ।" राजोवाच, "तदा पक्षिभिः किमुक्तम् ?" दीर्घमुखः कथयति, "ततः पक्षिभिः कोपादुक्तम्, "केनासौ राजहंसः कृतः राजा ?" ततो मयोपजातकोपेनोक्तम्, "अयं ते मयूरः केन राजा कृतः ?" तच्छ्रुत्वा ते पक्षिणो मां हन्तुमुद्यताः, ततो मयापि स्वविक्रमो दर्शितः ।

यतः, अन्यदा भूषणं पुंसः क्षमा लज्जेव योषितः ।
पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥" ७ ॥

राजा विहस्याह, "आत्मनश्च परेषाञ्च यः समीक्ष्य बलाबलम् ।
अन्तरं नैव जानाति स तिरस्क्रियतेऽरिभिः ॥ ८ ॥

अन्यच्च, सुचिरं हि चरन्नित्यं क्षेत्रे सस्यमबुद्धिमान् ।
द्वीपिचर्मपरिच्छन्नो वाग्दोषाद्गर्दभो हतः ॥" ९ ॥

---

(७) अन्यदेति । अन्यदा यथासमये क्षमाप्रदर्शनावसरे इत्यर्थः, पुंसः क्षमा सहिष्णुता योषितः स्त्रियः लज्जायाञ्चेव भूषणम् अलङ्कारः प्रशंसनीयमित्यर्थः । सुरतेषु रतिक्रियासु वैयात्यं धार्ष्ट्यं निर्लज्जत्वमित्यर्थः तदिव परिभवे पराजयार्थं पराक्रमः साहसप्रदर्शनं भूषणमिति शेषः ।

(८) आत्मन इति । यो जनः आत्मनः स्वस्य परेषाञ्च बलाबलं सबलत्वं हीनबलत्वञ्च समीक्ष्य विचार्य्य अन्तरं प्रभेदं नैव जानाति न बुध्यते स जनः अरिभिः शत्रुभिः तिरस्क्रियते अवज्ञायते अभिभूयते इत्यर्थः ।

(९) सुचिरमिति । क्षेत्रे शस्यक्षेत्रे सुचिरं बहुदिनं यावत् नित्यं प्रत्यहं शस्यं चरन् भक्षयन् अबुद्धिमान् निर्बोधः द्वीपिचर्मपरि-

वकः पृच्छति, "कथमेतत् ?" राजा कथयति "अस्ति हस्तिनापुरे विलासो नाम रजकः। तस्य गर्द्दभोऽतिभारवहनाद् दुर्बलो (य) मुमूर्षुरभवत्। ततस्तेन रजकेनासौ व्याघ्रचर्म्मणा प्रच्छाद्यारण्यसमीपे शस्यक्षेत्रे मोचितः। ततो दूरादवलोक्य (र) व्याघ्रबुद्ध्या क्षेत्रपतयः सत्वरं पलायन्ते। अथ केनापि शस्यरक्षकेण (ध) धूसरकम्बलकृततनुत्राणेन धनुःकाण्डं सज्जीकृत्यावनतकायेन (न) एकान्ते (प) स्थितम्। ततस्तं च दूरे दृष्ट्वा गर्द्दभः पुष्टाङ्गो गर्द्दभोऽयमिति मत्वा शब्दं कुर्वाणस्तदभिमुखं धावितः। ततस्तेन शस्यरक्षकेण गर्द्दभोऽयमिति (फ) ज्ञात्वा लीलयैव (ब) व्यापादितः। अतोऽहं ब्रवीमि, सुचिरं हि चरन्नित्यमित्यादि।" दीर्घमुखो ब्रूते, "पश्चात् तैः पक्षिभिरुक्तम्, "अरे पाप दुष्ट वक ! अस्माकं भूमौ चरन्नस्माकं स्वामिनमधिक्षिपसि ? (भ)

---

छन्नः व्याघ्रचर्म्मावृतः गर्द्दभः कश्चित् रासभः वाग्दोषात् चीत्कारात् हतः व्यापादितः।

(य) मुमूर्षुः—मृतप्रायः। (र) व्याघ्रबुद्ध्या—व्याघ्रबोधेन।

(ध) धूसरकम्बलकृततनुत्राणेन—धूसरं धूसरवर्णं यत् कम्बलं तेन कृतं सम्पादितं तन्वाः शरीरस्य त्राणं येन स तथोक्तेन।

(न) अवनतकायेन—अवनतः कुब्जीकृतः कायः यस्य सः, कुब्जीकृतदेहेन।

(प) एकान्ते—क्षेत्रस्य पार्श्वैकदेशे इत्यर्थः।

(फ) गर्द्दभोऽयम्—अयं प्रकृतः गर्द्दभः।

(ब) लीलयैव—अनायासेनैव। (भ) अधिक्षिपसि—निन्दसि।

तव चन्तव्यमिदानीम्” इत्युक्त्वा सर्वे मां चञ्चुभिर्हत्वा सकोपा ऊचुः “पश्य रे मूर्ख ! स हंसस्तव राजा सर्वथा मृदुस्तस्य राज्याधिकारो नास्ति, यतः एकान्ततो मृदुः करतलगतमप्यर्थं रचितुमक्षमः कथं स पृथिवीं शास्ति ? राज्यं वा तस्य किम् ? त्वं च कूपमण्डूकस्तेन तदाश्रयण-मुपदिशसि ।

शृणु सेवितव्यो महावृक्षः फलच्छायासमन्वितः।
यदि दैवात् फलं नास्ति छाया केन निवार्य्यते ? ॥१०॥

अन्यच्च, हीनसेवा न कर्त्तव्या कर्त्तव्यो महदाश्रयः।
पयोऽपि शौण्डिकीहस्ते वारुणीत्यभिधीयते ॥ ११ ॥
अजा सिंहप्रसादेन वने चरति निर्भयम्।
राममासाद्य लङ्कायां लेभे राज्यं विभीषणः ॥ १२ ॥

---

(१०) सेवितव्य इति। फलच्छायासमन्वितः छायाफलयुक्तः महावृक्षः विशालतरुः सेवितव्यः आश्रयणीयः। कुत इत्याह, यदि दैवात् दैवदुर्विपाकवशात् फलं नास्ति न फलतीत्यर्थः तथापि केन छाया अनातपः निवार्य्यते निवर्त्त्यते, अवश्यमेव छाया लभ्यव्येत्यर्थः।

(११) हीनेति। हीनसेवा नीचाश्रयणं न कर्त्तव्या विधेया महताम् आश्रयः महज्जनावलम्बनं कर्त्तव्यः। अत्र दृष्टान्तमाह, शौण्डिकी सुराविक्रेतृपत्नी तस्याः हस्ते पयोऽपि दुग्धमपि वारुणी सुराविशेषः अभिधीयते कथ्यते।

(१२) अजेति। सिंहप्रसादेन सिंहमाश्रित्येत्यर्थः अजा छागः वने निर्भयं व्याघ्रादिभयरहितं यथा तथा चरति। लङ्कायां रामम् आसाद्य प्राप्य विभीषणः रावणभ्राता राज्यं लेभे प्राप अधिकारेत्यर्थः।

अन्यच्च, महानप्यल्पतां याति निर्गुणे गुणविस्तरः ।
आधाराधेयभावेन गजेन्द्र इव दर्पणे ॥ १३ ॥
विशेषतश्च, व्यपदेशेऽपि सिद्धिः स्यादतिशक्ते नराधिपे ।
शशिनो व्यपदेशेन वसन्ति शशकाः सुखम्" ॥ १४ ॥

मयोक्तम्, "कथमेतत् ?" पक्षिणः कथयन्ति, "कदाचिद्वर्षास्वपि वृष्टेरभावात् (म) तृषार्त्तो गजयूथो यूथपतिमाह, "नाथ ! कोऽप्युपायोऽस्माकं (य) जीवनाय नास्ति क्षुद्रजन्तूनां (र) निमज्जनस्थाने, (ल) वयं च निमज्जनाभावादन्धा इव (व) क्व यामः किं वा कुर्मः ?" ततो हस्तिराजो नातिदूरं गत्वा निर्मलं ह्रदं दर्शितवान् । अनन्तरं

---

(१३) महानपीति । निर्गुणे गुणहीने महानपि अतिशयोऽपि गुणविस्तरः गुणस्थापनम् आधाराधेयभावेन प्रतिविम्बाधानप्रतिविम्बितसम्बन्धेन दर्पणे मुकुरे गजेन्द्र इव अप्रशस्ताधारत्वात् क्षुद्राकारेणाङ्कितः महागज इव अल्पतां क्षीणत्वं याति प्राप्नोति ।

(१४) व्यपदेश इति । नराधिपे राजनि अतिशक्ते प्रबले सति व्यपदेशेऽपि नामकीर्त्तनच्छलेऽपि सिद्धिः जयलाभः अभीष्टसिद्धिरिति यावत् स्यात् भवेत् । शशिनश्चन्द्रस्य व्यपदेशेन छलेन शशकाः सुखं निरुपद्रवं वसन्ति तिष्ठन्ति ।

(म) तृषार्त्तः—पिपासाकातरः ।

(य) जीवनाय—जीवनं धारयितुम् ।

(र) क्षुद्रजन्तूनां—क्षुद्रकायप्राणिनाम् ।

(ल) निमज्जनस्थाने— अवगाहनयोग्यजलाशये ।

(व) अन्धा इव—किंकर्त्तव्यविमूढा इवेत्यर्थः ।

तत्तीरस्थिताः शशका (ग) गजयूथपादाहतिभिश्चूर्णिताः (घ)। अनन्तरं शिलीमुखो नाम शशकश्चिन्तयामास, "अनेन गजयूथेन पिपासाकुलितेन प्रत्यहमत्रागन्तव्यम्। अतो विनष्टमस्मत्कुलम्।" ततो विजयो नाम वृद्धशशकोऽवदत्, "मा विषीदत, प्रतीकारो मया कर्त्तव्यः।" इति प्रतिज्ञाय चलितः। गच्छता च तेनालोचितम्, "कथं मया (ङ) गजयूथपनिकटे गत्वा वक्तव्यम्?

यतः, स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजङ्गमः।
पालयन्नपि भूपालः प्रहसन्नपि दुर्जनः॥ १५॥

ततोऽहं (च) पर्वतशिखरमारुह्य यूथनाथमभिवादयामि।" तथानुष्ठिते सति यूथनाथ उवाच, "कस्त्वम्? कुतः समायातः?" स ब्रूते, "दूतोऽहं भगवता चन्द्रेण (छ) प्रेषितः।" यूथपतिराह, (ज) "कार्य्यमुच्यताम्।" विजयो वदति,

---

(ग) गजयूथपादाहतिभिः—गजसमूहपादप्रहारैः ।

(घ) चूर्णिताः—क्षतविक्षताः ।

(ङ) गजयूथपनिकटे—गजयूथाधिपतिसमीपे ।

(१५) स्पृशन्निति । गजः स्पृशन्नपि स्पर्शनमात्रेणापि हन्ति नाशयति भुजङ्गमः सर्पः जिघ्रन्नपि निःश्वासवायुनापि । सर्वत्र हन्तीति शेषः । भूपालः राजा पालयन्नपि रक्षन् अपि, दुर्जनः दुष्टो लोकः प्रहसन्नपि प्रसन्नतां दर्शयन्नपि ।

(च) पर्वतशिखरं—पर्वताग्रम् ।

(छ) प्रेषितः—प्रेरितः ।

(ज) कार्य्यमुच्यतां—कर्त्तव्यमुपदिश ।

"उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा।
सदैवावध्यभावेन यथार्थस्य हि वाचकः॥ १६॥

तदहं तदाज्ञया ब्रवीमि, शृणु। यदेते शशकाश्चन्द्र-सरोरक्षकास्त्वया निःसारितास्तन्न युक्तं कृतम्। यतो रक्षकास्ते शशका मदीयाः। अतएव मे शशाङ्क इति प्रसिद्धिः (ग)।" एवमुक्तवति दूते यूथपतिर्भयादिदमाह, "देव! इदमज्ञानतः कृतम्। पुनर्न गमिष्यामि।" दूत उवाच, "तदत्र सरसि भगवन्तं चन्द्रमसं कोपात् प्रकम्पमानं प्रणम्य प्रसाद्य च गच्छ।" ततस्तेन रात्रौ नीत्वा तत्र जले चञ्चलं चन्द्रप्रतिबिम्बं दर्शयित्वा स यूथपतिः प्रणामं कारितः। "देव! अनेनाज्ञानेनापराधः कृतः, तत् क्षम्यतामित्युक्त्वा" तेन शशकेन स यूथपतिः प्रस्थापितः। अतोऽहं ब्रवीमि, व्यपदेशेऽपि सिद्धिः स्यादित्यादि।' ततो मयोक्तम्, "स एवास्मत्प्रभुर्महाप्रताप (घ) इति समर्थः त्रैलोक्यस्यापि प्रभुत्वं तत्र युज्यते किम्पुनः राज्यमिति। तदाहं तैः पक्षिभिः (ङ) दुष्ट! कथ-

(१६) उद्यतेष्विति। दूतः शस्त्रेषु उद्यतेषु मारणार्थमुद्गृहीतेष्वपि अन्यथा अन्यप्रकारं न वदति कथयति, यथैव राज्ञा उपदिष्टः तथैव ब्रूते इत्यर्थः। हि यतः सदैव नित्यकालम् अवध्यभावेन अवध्यत्वात् यथार्थस्य प्रकृतस्य न तु भयेन अप्रकृतस्येत्यर्थः वाचकः वक्ता।

(ग) प्रसिद्धिः—नाम, शशाङ्कनाम्ना प्रसिद्धः।

(घ) महाप्रतापः—महान् प्रतापो यस्य सः, महाप्रभावः।

(ङ) दुष्ट—उद्धत! धृष्ट इति यावत्।

मस्मद्भूमौ चरसि ?" इत्यभिधाय चित्रवर्णस्य राज्ञः समीपं नीतः। ततो राज्ञः पुरतो मां प्रदर्श्य तैः प्रणम्योक्तम्।" "देव ! (च) अवधीयताम्। एष दुष्टवकोऽस्मद्देशे चरन्नपि देवपादानधिक्षिपति (छ)।" राजाह "कोऽयं कुतः समायातः ?" ते ऊचुः, "हिरण्यगर्भनाम्नो राजहंसस्यानुचरः कर्पूरद्वीपादागतः।" अथाहं गृध्रेण मन्त्रिणा पृष्टः, "कस्तत्र मुख्यो (ज) मन्त्रीति ?" मयोक्तम् 'सर्वशास्त्रार्थपारगः (झ) सर्वज्ञो नाम चक्रवाकः।" गृध्रो ब्रूते, "युज्यते (ञ) स्वदेशजोऽसौ।

यतः, स्वदेशजं कुलाचारं विशुद्धमुपधाशुचिम्।
शास्त्रज्ञमव्यसनिनं व्यभिचारविवर्जितम्॥ १७॥
अधीतव्यवहारज्ञं ख्यातं मौलं विपश्चितम्।
अर्थस्योत्पादकं सम्यङ्निदध्यान्मन्त्रिणं नृपः" ॥१८॥

---

(च) अवधीयताम्—साभिनिवेशं शृणु।

(छ) अधिक्षिपति—निन्दति। (ज) मुख्यः—प्रधानः।

(झ) सर्वशास्त्रार्थपारगः—सर्वाणि शास्त्राणि तेषां पारं गच्छति यः सः। सर्वशास्त्रतत्त्ववित्।

(ञ) स्वदेशजः—स्वदेशोत्पन्नः स्वदेशीयः।

(१७।१८) स्वदेशजमिति। स्वस्य देशे जायते यः सः तं स्वदेशोत्पन्नं कुलाचारे कौलिकरीतिनीत्योः विशुद्धं कुलक्रमागतमाचारमनुसृत्य कार्यं कुर्वाणम् उपधाशुचिम् उपधया धर्मादिपरीक्षणेन शुचिं प्रमाणीकृतविशुद्धचरितम् उत्कोचादिप्रलोभनस्यानर्हमिति भावः। शास्त्रज्ञं शास्त्रज्ञानवन्तम् अव्यसनिनं द्यूतपानाद्यासक्तिरहितं व्यभि-

अत्रान्तरे (ट) शुकेनोक्तम्, "देव! कर्पूरद्वीपादयो लघुद्वीपा जम्बुद्वीपान्तर्गता एव, तत्रापि देवपादानामाधिपत्यम्।" ततो राज्ञाप्युक्तम्, "एवमेव।

यतः, राजा मत्तः, शिशुश्चैव, प्रमदा, धनगर्वितः।
अप्राप्यमपि वाञ्छन्ति किम्पुनर्लभ्यमेव यत्"॥१९॥

ततो मयोक्तम्, "यदि वचसैव (ठ) तत्रापि (ड) श्रीमद्देवपादानामाधिपत्यं सिध्यति, तदा जम्बुद्वीपेऽप्यस्मत्प्रभोर्हिरण्यगर्भस्य (ढ) स्वाम्यमस्ति। शुक उवाच, "कथमत्र (ण) निर्णयः?" मयोक्तम् "संग्राम एव।" राज्ञा विहस्योक्तम्, "स्वस्वामिनं गत्वा सज्जीकुरु।" तदा मयोक्तम्, "स्वदू-

---

चारविवर्जितं सत्यधायवर्ज्जितं परदारादिदोषवर्ज्जितं वा अधीतः शिक्षाविषयीभूतः योव्यवहारः विवादस्तं तस्य यः वेत्ता व्यवहारशास्त्रवेत्ता स्यात् विख्यातनामानं मौलं कुलक्रमनियुक्तं प्रथितवंशोत्पन्नं वा या विपश्चितं पण्डितं सम्यक् न्यायतः अर्थस्य धनस्य उत्पादकं वृद्धिकरं मन्त्रिणं नृपः राजा निदध्यात् राज्यशासनकर्मणि नियोजयेत्।

(ट) अत्रान्तरे—इत्यवसरे।

(१९) राजेति। राजा भूपतिः मत्तः उन्मत्तः शिशु इति यावत् शिशुः बालकश्चैव प्रमदा नारी धनगर्वितः धनेन गर्वितः धनित्वाभिमानी जनः अप्राप्यं दुर्लभम् अपि वस्तु अभिवाञ्छति वाञ्छम् आकाङ्क्षति यत् लभ्यमेव अनायासेन लब्धुं शक्यमेव तत् किं पुनः तस्य तु का कथा।

(ठ) वचसैव—वाङ्मात्रेणैव। (ड) तत्रापि—कर्पूरद्वीपादिषु।

(ढ) स्वाम्यं—प्रभुत्वम् अधिकार इत्यर्थः।

(ण) निर्णयः—निश्चयः।

तोऽपि प्रस्थाप्यताम् ।" राजाह, "कः प्रयातु (त) दौत्येन ?
यतः एवम्भूतो दूतः कार्य्यः ।

भक्तो गुणी शुचिर्दक्षः प्रगल्भोऽव्यसनी क्षमी ।
ब्राह्मणः परमर्म्मज्ञो दूतः स्यात् प्रतिभानवान्" ॥२०॥

गृध्रो वदति "सन्त्येवम्भूता बहवः । किन्तु ब्राह्मण एव दूतः कर्त्तव्यः ।

यतः, प्रसादः कुरुते पत्युः सम्पत्तिं नाभिजातता ।
कालिमा कालकूटस्य नापैतीश्वरसङ्गमात् ॥" २१ ॥

राजाह, "ततः शुक एव व्रजतु । शुक ! त्वमेवानेन सह तत्र गत्वा अस्मदभिलषितं ब्रूहि ।" शुको·

---

(त) दौत्येन—दूतस्य कर्म दौत्यं तेन दूतकर्मणा । दौत्यकर्म स्वीकृत्येत्यर्थः ।

(२०) भक्त इति । भक्तः राज्ञि अनुरक्तः गुणी गुणान्वितः शुचिः विशुद्धचरितः उत्कोचादिप्रलोभनादिषु अवशीभूतः इति भावः, दक्षः कार्य्यनिपुणः स्वकर्त्तव्यसम्पादने पटुः प्रगल्भः वाक्प्रयोगकुशलः अव्यसनी द्यूतपानाद्यननुरक्तः क्षमी क्षमावान् ब्राह्मणः विप्रः परमर्मज्ञः परस्य शत्रोर्मर्म रहस्यं जानातीति सः प्रतिभानवान् बुद्धिमान् दूतः स्यात् भवेत्, एवम्भूत एव दौत्यस्यार्ह इत्यर्थः ।

(२१) प्रसाद इति । पत्युः स्वामिनः प्रसादः उच्चपदयोप्रदानादिरूपः अनुग्रहः ब्राह्मणे इति शेषः सम्पत्तिं वृद्धिं श्रियं इति शेषः कुरुते सम्पादयति, आभिजातता अभिजात्यं जात्या श्रेष्ठत्वं कौलीन्यमिति यावत् न सम्पत्तिं कुरुते इत्यनेनान्वयः । ईश्वरसङ्गमात् महेश्वरसंसर्गात् कालकूटस्य विषस्य कालिमा मलिनत्वं न अपैति अपगच्छति न विलीनो भवतीत्यर्थः ।

ऽवदत्, "यथाज्ञापयति देवः, किन्त्वयं दुर्जनो बकः।
दुर्जनेन सह न व्रजामि।
तथा ह्युक्तम्, खलः करोति दुर्वृत्तं नूनं फलति साधुषु।
दशाननोऽहरत् सीतां बन्धनं स्यान्महोदधेः॥२२॥
अपरञ्च न स्थातव्यं न गन्तव्यं दुर्जनेन समं क्वचित्।
काकसङ्गाद्धतो हंसस्तिष्ठन् गच्छंश्च वर्त्तकः" ॥२३॥

राजोवाच, "कथमेतत् ?" शुकः कथयति, "अस्त्युज्ज-यिनीवर्त्मनि प्रान्तरे (थ) महान् पिप्पलवृक्षः। तत्र हंस-काकौ निवसतः। कदाचिद् ग्रीष्मसमये परिश्रान्तः कश्चित् पथिकस्तत्र तरुतले धनुःकाण्डं (द) निधाय (ध) सुप्तः। ततः क्षणान्तरे तन्मुखाद्वृक्षच्छायाऽपगता (न)। अनन्तरं

---

(२२) खल इति। खलः दुष्टः दुर्वृत्तम् असदाचरणं करोति साधुषु सज्जनेषु निरपराधेषु इति यावत् निश्चितं फलति, साधवः खलकृतदुराचरणात् विपादमाप्नुवन्ति। अत्र दृष्टान्तमाह, दशाननः रावणः सीताम् अहरत् अपहृतवान् महोदधेः समुद्रस्य निरपराधस्येति भावः, बन्धनं सेतुना बन्धनं स्यात् भवेत्, परापराधेन परस्य दण्ड इति भावः।

(२३) नेति। दुर्जनेन सह क्वचित् कुत्रचिदपि प्रदेशे न स्थातव्यं न निवस्तव्यं न गन्तव्यं यातव्यम्। तथाहि, काकसङ्गात् काकेन सह मिलित्वा तिष्ठन् एकत्रावस्थानं कुर्वन् हंसः हतः विनाशितः, गच्छन् वर्त्तकश्च क्षुद्रपक्षिविशेषः (भाटुइ इति भाषा) हत इति शेषः।

(थ) प्रान्तरे—अरण्ये। (द) धनुःकाण्डं—धनुर्वाणम्।

(ध) निधाय—रक्षित्वा। (न) अपगता—अपसृता।

सूर्य्यतेजसा तन्मुखं (प) व्याप्तमवलोक्य कृपया पुण्यात्मना पापरहितेन तत्पिप्पलवृक्षस्थितेन हंसराजेन पक्षौ प्रसार्य (फ) पुनस्तन्मुखे छाया कृता । ततो निर्भरं (ब) निद्रा-सुखिना पथि भ्रमणाकुलेन परिश्रान्तेन पान्थेन मुख-व्यादानं (भ) कृतम् । अनन्तरं स्वभावदौर्जन्येन (म) पर-सुखमसहिष्णुः (य) स काकस्तस्य मुखे पुरीषोत्सर्गं (र) कृत्वा पलायितः । ततो यावदसावुत्थाय ऊर्द्धं निरीक्षते तावत् तेनावलोकितो हंसः काण्डेन (ल) हतः । अतोऽहं ब्रवीमि । न स्थातव्यमित्यादि । यतः,

त्यज दुर्जनसंसर्गं भज साधुसमागमम् ।
कुरु पुण्यमहोरात्रं स्मर नित्यमनित्यताम् ॥ २४ ॥

देव ! वर्त्तकवार्त्तामपि कथयामि । एका कथा (व) स्थितेरियम् । द्वितीया गमनस्य कथा । एकः काको वृक्षशाखायां स्वपिति, वर्त्तकाधस्ताद् भूमौ निवसति ।

---

(प) व्याप्तम्—आच्छन्नम् ।  (फ) प्रसार्य—विस्तार्य ।
(ब) निर्भरं—गाढ़म् ।  (भ) मुखव्यादानं—मुखविस्तारम् ।
(म) स्वभावदौर्जन्येन—स्वभावतः दुष्टतया ।
(य) परसुखमसहिष्णुः—परसुखं सोढुमक्षमः ।
(र) पुरीषोत्सर्गं—मलत्यागम् ।  (ल) काण्डेन—बाणेन ।
(२४) त्यजेति । दुर्जनसंसर्गम् असत्सङ्गं त्यज अपीहि साधुसमा-गमं सज्जनसङ्गतिं भज कुरु, अहोरात्रं रात्रिन्दिवं पुण्यं धर्मानु-ष्ठानं कुरु नित्यं सर्वदा अनित्यतां संसारस्य अस्थायित्वं स्मर परि-चिन्तय ।
(व) स्थितेः—दुर्जनेन सह वासस्य ।

एकदा सर्वे पक्षिणो भगवतो गरुडस्य यात्राप्रसङ्गेन समुद्रतीरं प्रचलिताः। तत्र काकेन सह वर्त्तकश्चलितः। अथ गच्छतो गोपालस्य मस्तकावस्थितभाण्डाद् दधि वारं वारं तेन काकेन खाद्यते। ततो यावदसौ दधिभाण्डं भूमौ निधाय ऊर्द्ध्वमवलोकते, तावत् काकवर्त्तकौ दृष्टौ। ततस्तेन दृष्टः काकः पलायितः। वर्त्तकः (य) मन्दगतिस्तेन प्राप्तो व्यापादितः। अतोऽहं ब्रवीमि। न गन्तव्यमित्यादि।" ततो मयोक्तम्। "भ्रातः शुक! किमेवं ब्रवीषि? मां प्रति यथा श्रीमद्देवपादास्तथा भवानपि।" शुको ब्रूते, "अस्त्वेवं किन्तु,

दुर्जनैरुच्यमानानि सस्मितानि प्रियाण्यपि।
अकालकुसुमानीव भयं सञ्जनयन्ति मे॥ २५॥

दुर्जनत्वं च तव (ष) वाग्व्यापारादेव (स) प्रत्यक्षीकृतम्। यतः तयोर्भूपालयोर्विग्रहे भवद्वचनमेव निदानम् (ह)।

---

(य) मन्दगतिः—मन्दा मन्थरा गतिर्यस्य सः।

(२५) दुर्जनैरिति। दुर्जनैः क्रूरप्रकृतिभिः उच्यमानानि कथ्यमानानि सस्मितानि ईषद्धास्ययुक्तानि हास्यपूर्वकाणि प्रियाणि प्रियवचनानि अपि अकालकुसुमानि असमयजातानि पुष्पाणि इव मे मम भयं सञ्जनयन्ति उत्पादयन्ति। अकालपुष्पोद्गमेन दुर्भिक्षादिका शङ्किर्व्याहन्यते इति प्रसिद्धिः।

(ष) वाक्व्यापारात्—वचनरचनाचातुर्य्येण।

(स) प्रत्यक्षीकृतं—प्रमाणीकृतम्।

(ह) निदानं—मूलकारणम्।

पश्य, प्रत्यक्षेऽपि कृते दोषे मूर्खः सान्त्वेन तुष्यति।

रथकारो निजां भार्यां सजारां शिरसाकरोत्" ॥२६॥

राजोवाच, "कथमेतत्?" शुकः कथयति, "अस्ति श्रीनगरे मन्दमतिर्नाम रथकारः। स च स्वभार्यां (अ) बन्धकीं जानाति। किन्तु जारेण समम् एकस्थाने स्वचक्षुषा न पश्यति। ततोऽसौ रथकारः "अहमन्यं ग्रामं गमिष्यामि" इत्युक्त्वा प्रचलितः। स कियद् दूरं गत्वा निभृतं पुनरागत्य स्वगृहे खट्वातले पतित्वा स्थितः। अथ मम भर्त्ता ग्रामान्तरं गत इत्युपजात-विश्वासया तद्वध्वा जारः सन्ध्याकाल एवाहूतः। पश्चात् तेन जारेण समं तस्यां खट्वायां निर्भरं (क) क्रीड़न्ती स्थिता। अत्रान्तरे तया बन्धक्या स रथकारः शय्यातले उपलक्षितः (ख)। खट्वाधःस्वामिना सहानुभूतकिञ्चिदङ्ग-स्पर्शात् (ग) स्वामिनं विज्ञाय सा (घ) विषण्णा अभवत्। ततो जारेणोक्तम्। "किमिति मया सहाद्य निर्भरं न रमसे।

---

(२६) प्रत्यक्ष इति। मूर्खः मन्दबुद्धिर्जनः प्रत्यक्षे समक्षे दोषे अपराधे कृतेऽपि सान्त्वेन सान्त्ववचनेन तुष्यति प्रसाद्यते, रथकारः कारुविशेषः स्वतः सजाराम् उपपतिसहितां निजां स्वकीयां भार्यां शिरसा अकरोत् मस्तके निहितवान्।

(अ) बन्धकीं—कुलटां, व्यभिचारिणीम्।

(क) क्रीड़न्ती—रममाणा। (ख) उपलक्षितः—अनुभूतः।

(ग) अनुभूतकिञ्चिदङ्गस्पर्शात्—स्वामिगात्रस्पर्शमनुभूय इत्यर्थः।

(घ) विषण्णा—दुःखिता व्याकुलहृदया।

विश्मितेव प्रतिभासि।" अथ तयोक्तम्। "योऽसौ मे प्राणेश्वरः सोऽद्य ग्रामान्तरं गतः। तेन विना सकल-जनपूर्णोऽप्ययं ग्रामो मां प्रत्यरण्यवत् प्रतिभाति। किं भावि तत्र परस्थाने किं खादितवान् कथं वा प्रसुप्त इत्यस्मद्‌हृदयं विदीर्य्यते।" जारेणोक्तम्। "तत् किमेवंविधा (ङ) स्नेहभूमिः स ते भर्त्ता कलहकारः।" बन्धकी ब्रूते, "रे वर्वर! किं ब्रवीषि? शृणु,

परुषेणापि चोक्ता या दृष्टा वा क्रुद्धचक्षुषा।

सुप्रसन्नमुखी भर्तुः सा नारी धर्मभाजनम्॥ २७॥

अपरञ्च, नगरस्थो वनस्थो वा पापो वा यदि वा शुचिः।

यासां स्त्रीणां प्रियो भर्त्ता तासां लोका महोदयाः॥२८

अन्यच्च, भर्त्ता हि परमं नार्य्या भूषणं भूषणैर्विना।

---

(ङ) स्नेहभूमिः—प्रणयास्पदम्।

(२७) परुषेणेति। या नारी परुषेण भर्त्तुः कर्कशेनापि वचनेन उक्ता क्रुद्धचक्षुषा सकोपनयनेनापि किम्उत प्रसन्नेन सस्नेहेन चक्षुषा दृष्टा च सती सुप्रसन्नमुखी अनुकूलकारिणी भवतीति शेषः सा नारी स्त्रीधर्मभाजनं धार्मिका पतिव्रतेति यावत्।

(२८) नगरस्थ इति। यासां स्त्रीणां भर्त्ता स्वामी नगरस्थः नगरवासी वनस्थः वनवासी पापः पतितः यदि वा अथवा शुचिः पवित्रात्मा सर्वावस्थां गतोऽपि इति भावः प्रियः भक्तिभाजनं तासां नारीणां लोकाः स्वर्गादिलोकाः महोदयाः महान् उदयः अभ्युदयः सुखमित्यर्थः येषु ते तथोक्ताः ता एव नार्य्य इह परत्र सुखेन तिष्ठन्तीत्यर्थः।

एषा विरहिता तेन शोभनापि न शोभते ॥ २९ ॥

त्वञ्च जारो (च) मनोलौल्यात् (छ) पुष्पताम्बूलसदृशः कदाचित् सेव्यसे। स च मे स्वामी मां विक्रेतुं, देवेभ्यो ब्राह्मणेभ्यो वा दातुं समर्थः। किं बहुना, तस्मिन् जीवति जीवामि तन्मरणे चानुमरणं करिष्यामि, इत्येष मे निश्चयः।

यतः, तिस्रः कोट्योऽर्द्धकोटी च यानि लोमानि मानवे।
तावत्कालं वसेत् स्वर्गे भर्त्तारं यानुगच्छति ॥ ३० ॥

अन्यञ्च, व्यालग्राही यथा व्यालं बिलादुद्धरते बलात्।
तद्वद्भर्त्तारमादाय तेनैव सह मोदते ॥ ३१ ॥

---

(२९) भर्त्तेति। हि निश्चितं भर्त्ता पतिः नार्य्याः स्त्रियः भूषणैर्विनापि प्रसाधनान्तरेऽसत्यपि परमम् उत्कृष्टं भूषणम् अलङ्करणं तेन पत्या विरहिता वर्जिता एषा नारी शोभनापि रूपलावण्यवत्यपि न शोभते कान्तिमती न भवति। कान्तोज्झिताया नार्य्याः शोभा न स्यादेवेत्यर्थः।

(च) मनोलौल्यात्—चित्तविकारवशात्।

(छ) पुष्पताम्बूलसदृशः—स्रक्‌चन्दनादिवदित्यर्थः। क्षणप्रमोदहेतोरिति भावः।

(३०) तिस्र इति। या नारी भर्त्तारं पतिम् अनुगच्छति अनुसरति सा मानवे तिस्रः कोट्यः अर्द्धकोटी च सार्द्धत्रिकोटीसंख्यकानि यानि लोमानि सन्तीति शेषः। तावत्कालम् तावत्कालमित्यर्थः, स्वर्गे वसेत् अवतिष्ठेत।

(३१) व्यालग्राहीति। यथा व्यालग्राही व्यालं क्रूरसर्पं ग्रहीतुं शीलं यस्य सः आहितुण्डिकः सर्पजीव इति यावत्। बिलात् विवरात् व्यालं क्रूरसर्पं बलात् बलेन उद्धरते बहिरानयति तद्वत् तथा नारीति

अपरञ्च, चितौ परिष्वज्य विचेतनं पतिं
प्रिया हि या मुञ्चति देहमात्मनः ।
कृत्वापि पापं शतलक्षमप्यसौ
पतिं गृहीत्वा सुरलोकमाप्नुयात् ॥ ३२ ॥

यतः, यस्मै दद्यात् पिता त्वेनां भ्राता वानुमते पितुः ।
तं शुश्रूषेत जीवन्तं संस्थितञ्च न लङ्घयेत् ॥"३३॥

एतत् सर्वं श्रुत्वा स रथकारः "धन्योऽहं यस्यैतादृशी (ज) भार्य्या स्नेहवती प्रियवादिनी" इति मनसि निधाय (झ) तां खट्वां स्त्रीपुरुषसहितां मूर्ध्नि धृत्वा स मन्दमतिर्नर्त्तितवान्। अतोऽहं ब्रवीमि। "प्रत्यक्षेऽपि कृते दोष इत्यादि ." ततोऽहं तेन राज्ञा (ञ) यथाव्यवहारं संपूज्य प्रस्थापितः। शुकोऽपि मम पश्चादागच्छन्नास्ते। एतत्

---

शेषः भर्त्तारं पतिम् आदाय गृहीत्वा तेनैव सह पत्यैव सार्द्धं मोदते हृष्यति रमते इति यावत्।

(३२) चिताविति। या प्रिया पत्नी चितौ चितायां विचेतनं मृतं पतिं परिष्वज्य आलिङ्ग्य आत्मनः देहं मुञ्चति त्यजति असौ नारी शतलक्षं बहुसंख्यकं पापं कृत्वापि पतिं गृहीत्वा भर्त्तारमादाय सुरलोकं स्वर्गम् आप्नुयात् गच्छेत् भर्त्तृसहगामिनी स्वर्गे वसेदित्यर्थः।

(३३) यस्मा इति। पिता जनकः पितुरनुमते स्थित इति शेषः भ्राता च एनां कन्यां यस्मै वराय दद्यात् प्रयच्छेत् जीवन्तम् इह लोके विद्यमानं संस्थितं शुश्रूषेत सेवेत परलोकप्रस्थितं च मृतमित्यर्थः तं न लङ्घयेत् नावजानीयात् अपि तु तमनुसरेदित्यर्थः।

(ज) एतादृशी—धर्मपरायणा। (झ) निधाय—विचिन्त्य।
(ञ) यथाव्यवहारं—दूतोचिताचारानुरूपम्।

सर्वं ज्ञात्वा यथाकार्य्यमनुसन्धीयताम्।" चक्रवाको विहस्याह, "देव! बकेनैतावद्देशान्तरं गत्वा यथाशक्ति राजकार्य्यमनुष्ठितम्। किन्तु स्वभाव एव मूर्खाणाम्।
यतः, शतं दद्यान्न विवदेदिति विज्ञस्य सम्मतम्।
विना हेतुमपि द्वन्द्वमिति मूर्खस्य लक्षणम्॥" २४॥

राजाह, "अलमनेनातीतोपालम्भेन (ट)। (ठ) प्रस्तुतमनुसन्धीयताम् (ड)।" चक्रवाको ब्रूते, "देव! (ढ) विजने ब्रवीमि। यतः, वर्णाकारप्रतिध्वानैर्नेत्रवक्त्रविकारतः।
अप्यूहन्ति मनो धीरास्तस्माद्रहसि मन्त्रयेत्॥" २५॥

ततो राजा मन्त्री च स्थितौ तत्र। अन्येऽन्यत्र

---

(२४) शतमिति। शतम् आत्मनः बहुसंख्यकमपि द्रव्यं स्वार्थं वा दद्यात् उपेक्षेत न विवदेत् विरुन्ध्यात् इति विज्ञस्य विदुषः सम्मतं मतम् उपदेश इति यावत्। हेतुं कारणं विनापि द्वन्द्वं कलहः कर्त्तव्यमिति शेषः इति मूर्खस्य हिताहितविवेकासमर्थस्य लक्षणं चिह्नम्। मूर्खा अकारणं विग्रह्णन्ति पण्डितास्तु कारणे सत्यपि कलहात् निवर्त्तेरन् इत्यर्थः।

(ट) अतीतोपालम्भेन—अतीतविषये तिरस्कारेण गतस्य शोचनयेत्यर्थ

(ठ) प्रस्तुतम्—उपस्थितम्, आसन्नविग्रहकारणम् इत्यर्थः।

(ड) अनुसन्धीयतां—निरूप्यताम्। (ढ) विजने—रहसि।

(२५) वर्णेति। धीराः विद्वांसः वर्णैः मुखरागादिः आकारः सुखदुःखजन्यं वहिश्चेष्टितं प्रतिध्वानः स्वरसंयोगः तैः नेत्रस्य वक्त्रस्य तयोर्विकारस्तेन नयनभङ्ग्या मुखभङ्ग्या च मनः हृद्गतं भावम् अपि सम्भावनायाम् ऊहन्ति तर्केण जानन्ति ज्ञातुं शक्नुयुरित्यर्थः तस्मात् मन्त्रभेदसम्भावनाया हेतोः रहसि विजने मन्त्रयेत् मन्त्रणां कुर्य्यात्।

गताः। चक्रवाको ब्रूते, "देव! अहमेवं जानामि कस्याप्यस्मन्नियोगिनः (ण) प्रेरणया (त) वकेनेदम-नुष्ठितम्।

यतः, वैद्यानामातुरः श्रेयान् व्यसनी यो नियोगिनाम्।
विदुषां जीवनं मूर्खः सद्वन्द्वो नृपतेर्जनः" ॥ २६ ॥

राजाब्रवीत्, "भवतु कारणमत्र पश्चान्निरूपणीयं, सम्प्रति यत् कर्त्तव्यं, तद् ब्रूहि। चक्रवाको ब्रूते, "देव! प्रणिधिस्तावत् तत्र यातु ततस्तदनुष्ठानं (थ) बलाबलं (द) जानीमः।

तथाहि, भवेत् स्वपरराष्ट्राणां कार्य्याकार्य्यावलोकने।
चारश्चक्षुर्महीभर्त्तुर्यस्य नास्त्यन्ध एव सः ॥ २७ ॥

---

(ण) अस्मन्नियोगिनः—अस्माकमनुचरस्य।

(त) प्रेरणया—उत्तेजनया परामर्शेनेति यावत्।

(२६) वैद्यानामिति। आतुरः रोगी वैद्यानां चिकित्सकानां श्रेयान् लाभजनकत्वात् अभीष्टः। यः प्रभुरित्यर्थः व्यसनी द्यूतपानाद्यासक्तः सः नियोगिनाम् अनुजीविनां श्रेयान् श्रेयस्करः अनायासेन वञ्चयितुं शक्यत्वादिति भावः। मूर्खः विदुषां पण्डितानां जीवनं मूर्खानुपदिश्यैव पण्डिताः जीविकां निर्वाहयन्ति। सद्वन्द्वः कलहयुक्तः जनः नृपतेः राज्ञः जीवनम् अर्थदण्डाद्युपायेन अर्थागमसम्भावनयेति भावः।

(थ) तदनुष्ठानं—तस्य राज्ञः कार्य्यम्।

(द) बलाबलं—किमयं प्रभूतबलसम्पन्नः परिमितबलसम्पन्नो वेत्यर्थः।

(२७) भवेदिति। महीभर्त्तुः राज्ञः स्वपरराष्ट्राणां स्वस्य परेषाञ्च

स च द्वितीयं विश्वासपात्रं गृहीत्वा यातु। तेनासौ स्वयं तत्रावस्थाय द्वितीयं (ध) तत्रत्यं मन्त्रकार्य्यं सुनिभृतं निश्चित्य निगद्य प्रस्थापयतु।

तथा चोक्तम्, तीर्थाश्रमसुरस्थाने शास्त्रविज्ञानहेतुना।
तपस्विव्यञ्जनोपेतैः स्वचरैः सह संवदेत्॥ ३८॥

गूढ़चारश्च यो जले स्थले चरति, ततोऽसावेव वकः तदृगृह्यताम् एतादृश एव कश्चिद् वको द्वितीयत्वेन प्रयातु, (न) नियुक्तलोकश्च राजद्वारे तिष्ठतु। किन्तु देव! एतदपि (प) सुगुप्तमनुष्ठातव्यम्।

यतः, षट्कर्णो भिद्यते मन्त्रस्तथा प्राप्तश्च वार्त्तया।
इत्यात्मना द्वितीयेन मन्त्रः कार्य्यो महीभृता॥ ३९॥

---

राज्यानां कार्य्याकार्य्यावलोकने सदसद्वृत्तान्तपरिज्ञाने पौरजानपदैश्चानुष्ठितस्य कर्म्मणः परिज्ञाने चारः गूढ़चर एव चक्षुर्भवेत् चारचक्षुषाऽदेव सर्वं वेत्तीत्यर्थः। यस्य नास्ति चारचक्षुरिति शेषः स एव अन्धः अन्धवत् राज्यकर्मनिर्णये अक्षमः।

(ध) तत्रत्यं—परराज्यसम्बन्धि।

(३८) तीर्थेति। तपस्विनः व्यञ्जनं वेशः तेन उपेताः अन्वितास्तैः तपस्विवेशधारिभिः स्वचरैः स्वकीयगूढ़चरैः चरैः तीर्थं काश्यादिपुण्यस्थानम् आश्रमः सन्न्यासादीनामावासः सुरस्थानं देवालयः एतेषां समाहारस्तस्मिन् शास्त्रविज्ञानहेतुना। शास्त्रार्थालोचनाव्याजेनेत्यर्थः सह संवदेत् परराष्ट्रभावं जानीयात् राजेति शेषः।

(न) नियुक्तलोकः—प्रणिधित्वे नियुक्तस्य परिवारवर्ग इत्यर्थः।

(प) सुगुप्तम्—अतीव गूढ़म्।

(३९) षट्कर्ण इति। मन्त्रः मन्त्रणा षट्कर्णः षट् कर्णाः अत्र-

अपरञ्च, मन्त्रभेदे हि ये दोषा भवन्ति पृथिवीपतेः।
न शक्यास्ते समाधातुमिति नीतिविदां मतम्"॥४०॥

राजा (फ) विमृश्योवाच, "प्राप्तस्तावन्मया प्रणिधिः"। मन्त्री ब्रूते, "देव। संग्रामे जयोऽपि प्राप्तः।" अत्रान्तरे प्रतीहारः प्रविश्य प्रणम्योवाच, "देव! जम्बुद्वीपादागतो द्वारि शुकस्तिष्ठति"। राजा चक्रवाकमालोकते। चक्रवाकेनोक्तम्। "कृतावासे (ब) गत्वा तावद्गतु, पश्चादानीय द्रष्टव्यः।" "यथा आज्ञापयति देव" इत्यभिधाय प्रतीहारः शुकं गृहीत्वा गतः। राजाह, "विग्रहस्तावदुपस्थितः"। चक्रवाको ब्रूते, "देव! तथापि (भ) सहसा विग्रहो न विधिः (म)।

---

च्याणि यस्य सः त्रिभिः श्रुत इत्यर्थः तथा वार्त्तया संवादेन अन्यकृतभावपरिज्ञानेनेत्यर्थः प्राप्तः विदितश्च सन् भिद्यते भेदं प्राप्नोति इति हेतोः मह्यीभृता राज्ञा आत्मना आत्मीयेन द्वितीयेन सचिवेन मन्त्रः मन्त्रणा कार्य्यः कर्त्तव्यः।

(४०) मन्त्रभेद इति। हि निश्चितं पृथिवीपतेः राज्ञः मन्त्रभेदे मन्त्रणाप्रकाशे ये दोषाः अनिष्टानि भवन्ति जायन्ते ते दोषाः समाधातुं संशोधयितुं न शक्याः पार्य्याः इति नीतिविदां नीतिशास्त्रविदुषां मतम् उपदेशः।

(फ) विमृश्य—विविच्य।

(ब) कृतावासे—कृतः स्वराज्यागतदूतस्य अवस्थानार्थं निरूपितः य आवासः तस्मिन्।

(भ) सहसा—सम्यगनालोच्य।

(म) विधिः—विधेयः, कर्त्तव्यः (विधीयते इति कर्मणि किः)

सचिवः किं स मन्त्री वा य आदावेव भूपतिम्।
युद्धोद्योगं स्वभूत्यागं निर्दिशत्यविचारितम्॥ ४१॥
अपरञ्च, विजेतुं प्रयतेतारीन् न युद्धेन कदाचन।
अनित्यो विजयो यस्माद् दृश्यते युध्यमानयोः॥४२॥
अन्यच्च, साम्ना दानेन भेदेन समस्तैरथवा पृथक्।
साधितुं प्रयतेतारीन् न युद्धेन कदाचन॥ ४३॥
यतः, सर्व एव जनः शूरो ह्यनासादितविग्रहः।
अदृष्टपरसामर्थ्यः सदर्पः को भवेन्न हि?॥ ४४॥

---

(४१) सचिव इति। यः आदौ पूर्वमनालोच्येत्यर्थः, एव भूपतिं राजानम् अविचारितम् अयुक्तियुक्तं यथा तथा युद्धोद्योगं युद्धाय उद्योगः चेष्टा तं स्वभूत्यागं स्वराज्यार्पणञ्च निर्दिशति निरूपयति उपदिशतीति यावत् सः किं कुत्सितः अनुपयुक्त इत्यर्थः सचिवः कार्य्यसहायः वा अथवा कुत्सितः मन्त्री मन्त्रणादायकः।

(४२) विजेतुमिति। यस्मात् कारणात् युध्यमानयोः युद्धे प्रवृत्तयोः द्वयोरपीत्यर्थः विजयः जयलाभः अनित्यः अनिश्चितः दृश्यते लक्ष्यते तस्मात् कदाचन कदाचिदपि युद्धेन समरेण उपायेन अरीन् शत्रून् विजेतुं पराजेतुं न प्रयतेत न चेष्टेत।

(४३) साम्नेति। साम्ना सान्त्ववचनेन दानेन धनादिप्रदानेन भेदेन मित्रराज्येषु भेदसंघटनेन एभिस्त्रिभिः समस्तैः युगपत्प्रयुक्तैः अथवा पृथक् व्यस्तैर्वा अरीन् साधितुं वशीकर्तुं प्रयतेत चेष्टेत युद्धेन उपायेन कदाचन न प्रयतेतेति शेषः।

(४४) सर्व इति। अनासादितः अनारब्धः विग्रहो येन सः युद्धे अप्रवर्त्तमान इत्यर्थः सर्व एव जनः शूरः शूरम्मन्यो भवतीति शेषः। अदृष्टम् अपरिज्ञातं परस्य शत्रोः सामर्थ्यं येन स तथोक्तः शत्रुबलमजानन् को जनः न हि सदर्पः सगर्वः भवेत्।

किञ्च, न तथोत्थाप्यते ग्रावा प्राणिना दारुणा यथा ।
अल्पोपाये महासिद्धिरेतत् मन्त्रफलं महत् ॥ ४५ ॥

किन्तु विग्रहमुपस्थितं विलोक्य व्यवह्रियताम् ।

यतः, यथा कालकृतोद्योगात् कृषिः फलवती भवेत् ।
तद्वन्नीतिरियं देव ! चिरात् फलति न क्षणात् ॥ ४६ ॥

अपरञ्च, महतो दूरे भीरुत्वमासन्ने शूरता गुणः ।
विपत्तौ हि महांल्लोके धीरत्वमधिगच्छति ॥ ४७ ॥

---

(४५) नेति । ग्रावा प्रस्तरः यथा दारुणा काष्ठनिर्मितयन्त्रेण अचेतनेनापीति भावः, उत्थाप्यते उत्क्षिप्यते तथा प्राणिना जन्तुना न उत्थाप्यते इति शेषः । अल्पोपाये क्षुद्रेऽपि साधने सति महती सिद्धिः महासिद्धिः महान् फललाभः । एतत् महत् प्रधानं मन्त्रस्य फलं मन्त्रफलम् ।

(४६) यथेति । यथा येन प्रकारेण काले यथासमये कृतः सम्पादितः उद्योगः हलचालनादिचेष्टा तस्मात् कृषिः हलकर्षणकर्म फलवती शस्योत्पादिका भवेत् तद्वत् तथा हे देव ! राजन् ! इयं नीतिः राजनीतिः चिरात् बहोः कालात् फलति सिध्यति सफला भवतीति यावत् न क्षणात् अल्पकालेन ।

(४७) महत इति । दूरे भयकारणे दूरवर्त्तिनि सति महतः प्राज्ञस्य भीरुत्वं भयाशङ्का आसन्ने सति भयकारणे इति शेषः शूरता पराक्रमप्रदर्शनं गुणः वरम् । लोके जगति महान् स्थिरधीः विपत्तौ विपदि उपस्थितायामित्यर्थः, धीरत्वं धैर्य्यम् अधिगच्छति अवलम्बते अयमेव हि महतां स्वभावः यत् ते अनागतस्य भयस्य प्रतिविदधाति उपस्थिते च शूरतां प्रदर्शयन्ति विपदि तु धैर्य्यमवलम्बन्ते इत्यर्थः ।

अन्यच्च, प्रत्यूहः सर्वसिद्धीनामुत्तापः प्रथमः किल ।
अतिशीतलमप्यम्भः किं भिनत्ति न भूतलम् ? ॥४८॥
विशेषतश्च, देव ! (य) महाबलोऽसौ राजा चित्रवर्णः ।
यतः, बलिना सह योद्धव्यमिति नास्ति निदर्शनम् ।
न युद्धं हस्तिना सार्द्धं नराणां पादयुद्धवत् ॥४९॥
अन्यच्च, स मूर्खः कालमप्राप्य योऽपकर्त्तरि वर्त्तते ।
कलिर्बलवता सार्द्धं कीटपक्षोद्गमो यथा ॥५०॥
किञ्च, कौर्मं सङ्कोचमास्थाय प्रहारमपि मर्षयेत् ।
प्राप्तकालस्तु नीतिज्ञ उत्तिष्ठेत् क्रूरसर्पवत् ॥५१॥

---

(४८) प्रत्यूह इति । उत्तापः उष्णत्वम् असहिष्णुतेत्यर्थः सर्वसिद्धीनां सर्वकार्य्याणाम् अभीष्टलाभस्येत्यर्थः, प्रथमः मुख्यः प्रत्यूहः विघ्नः अन्तरायः किल ( किल निश्चये ) अतिशीतलम् अपि अम्भः जलम् अतिशैत्यात् संहतम् अम्भः किं भूतलं पृथ्वीतलं न भिनत्ति विदारयति ? अपितु भिनत्त्येव ।

(य) महाबलः—महाप्रतापशाली ।

(४९) बलिनेति । बलिना बलवता सार्द्धं योद्धव्यं समरे प्रवर्त्तितव्यम् इति निदर्शनम् उदाहरणं न अस्ति विद्यते । नराणां मनुष्याणां पादयुद्धवत् पादयुद्धं द्वन्द्वयुद्धमिवेत्यर्थः हस्तिना बलवत्तरेणेति भावः न युज्यते इति शेषः ।

(५०) स इति । यः कालम् अप्राप्य अनवसरे इत्यर्थः, अपकर्त्तरि शत्रौ वर्त्तते शत्रून् विजेतुम् उद्यच्छति इत्यर्थः स मूर्खः मन्दमतिः । कीटपक्षोद्गमः पिपीलिकादीनां पक्षोदयः यथा इव बलवता बलवत्तरेण सार्द्धं सह कलिः विरोधः आत्मविनाशायैव भवतीत्यर्थः ।

(५१) कौर्ममिति । नीतिज्ञः नीतिवेत्ता जनः कौर्मं कूर्मसम्बन्धिनं

शृणु देव ! महत्यल्पेऽप्युपायज्ञः सममेव भवेत् क्षमः ।
समुन्मूलयितुं वृक्षान् तृणानीव नदीरयः ॥५२॥

अतो दूतोऽयं शुकोऽप्याश्वास्य तावद्ध्रियतां (र) यावद् दुर्गं सज्जीक्रियते ।

यतः, एकः शतं योधयति प्राकारस्थो धनुर्धरः ।
शतं दशसहस्राणि तस्माद् दुर्गं विधीयते ॥५३॥

किञ्च, अदुर्गविषयः कस्य नारेः परिभवास्पदम् ? ।
अदुर्गोऽनाश्रयो राजा पोतच्युतमनुष्यवत् ॥ ५४ ॥

---

कूर्मसङ्कोचसदृशमित्यर्थः सङ्कोचं मुखाकुञ्चनम् आस्थाय आश्रित्य प्रहारम् अन्यकृतपीड़नमपि मर्षयेत् सहेत । किन्तु प्राप्तकालः लब्धवैरनिर्यातनावसरः सन् क्रूरसर्पवत् व्याल इव उत्तिष्ठेत् प्रतिशोधयितुम् उद्यच्छेत् ।

(५२) महतीति । उपायज्ञः सामाद्युपायचतुष्टयवित् जनः नदीरयः नदीवेगः वृक्षान् विशालतरून् तृणानि दूर्वादीनीव शत्रौ महति प्रबले अल्पे क्षुद्रेऽपि वा सति समुन्मूलयितुम् उत्सादयितुम् अन्यत्र उत्पाटयितुं क्षमः समर्थो भवेत् ।

(र) ध्रियतां—रक्ष्यतां न विसृज्यतामित्यर्थः ।

(५३) एक इति । प्राकारस्थः दुर्गस्थः धनुर्धरः योद्धा एकः एकाकी अपीत्यर्थः शतं शतसंख्यकं सैन्यं योधयति शतेन समकक्षो भवतीत्यर्थः । धनुर्धरः दशसहस्राणि योधयतीति शेषः, तस्मात् दुर्गं प्राकारः विधीयते क्रियते राज्ञा इति शेषः ।

(५४) अदुर्गविषय इति । अदुर्गविषयः दुर्गविरहितो राजा कस्य महतः क्षुद्रस्य वा अरेः शत्रोः न परिभवास्पदं पराभवस्थानं प्रत्युत अनायासेनैव पराजेतुं शक्य इत्यर्थः । अदुर्गः अतएव अनाश्रयः आश्रयहीनः राजा पोतच्युतमनुष्यवत् समुद्रे पोतभ्रष्टः मनुष्य इव भवेत् निमज्जेदित्यर्थः ।

दुर्गं कुर्य्यान्महाखातमुच्चप्राकारसंयुतम्।
सयन्त्रजलशैलं हि सरिन्मरुवनाश्रयम्॥ ५५॥
विस्तीर्णतातिवैषम्यं रसधान्येध्मसंग्रहः।
प्रवेशश्चापसारश्च सप्तैता दुर्गसम्पदः॥५६॥

राजाह, दुर्गानुसन्धाने (ख) को नियुज्यताम्। चक्रवाको ब्रूते;

यो यत्र कुशलः कार्य्ये तं तत्र विनियोजयेत्।
कार्य्येष्वदृष्टकर्मा यो शास्त्रज्ञोऽपि विमुह्यति॥५७॥

तदाहूयतां सारसः।" तथानुष्ठिते सति समागतं सारसमालोक्य राजोवाच, "सारस! त्वं सत्वरं दुर्गमनुसन्धेहि।" सारसः प्रणम्योवाच, "देव! दुर्गं तावदिदमेव चिरात् सुनिरूपितमास्ते, महत् सरः।

---

(५५) दुर्गमिति। महाखातं गभीरखातवेष्टितम् उच्चप्राकारसंयुतम् उच्चप्राचीरयुक्तं यन्त्रैः अस्त्रादिः जलं पानाद्यर्थमुदकं शैलः पर्वतश्च तैः सह वर्त्तमानम् अस्त्रजलसहितं पर्वतसन्निहितञ्चेत्यर्थः सरित् नदी मरुः निर्जलदेशः वनम् अरण्यं तानि संश्रयो यस्य तत् तादृशं दुर्गं कुर्य्यात्।

(५६) विस्तीर्णतेति। विस्तीर्णता प्रशस्तता अतिवैषम्यम् अतिबन्धुरत्वम् अत्यन्तोच्चत्वावनतित्वमिति यावत्। रसः जलं धान्यं व्रीहिः इध्मं काष्ठं तेषां संग्रहः सञ्चयः प्रवेशः प्रवेशमार्गः अपसारः बहिर्गमनमार्गश्च एताः सप्त दुर्गसम्पदः दुर्गस्य सम्पत्तयः।

(ख) दुर्गानुसन्धाने—दुर्गरचनार्थं स्थाननिराकरणे।

(५७) य इति। यो जनः यस्मिन् कार्य्ये कर्मणि कुशलः तं जनं तत्र तादृशे कर्मणि विनियोजयेत्। यः कार्य्येषु कर्मसु अदृष्टकर्मा अनभिज्ञदर्शी स शास्त्रज्ञोऽपि विद्वानपि विमुह्यति प्रमाद्यति।

किन्त्वेतन्मध्यद्वीपे (व) भक्ष्यवस्तूनां संग्रहः क्रियताम्।
यतः, धान्यानां संग्रहो राजन्! उत्तमः सर्वसंग्रहात्।
निक्षिप्तं हि मुखे रत्नं न कुर्य्यात् प्राणधारणम् ॥५८
किञ्च, ख्यातः सर्वरसानां हि लवणो रस उत्तमः।
गृह्णीयात् तं विना तेन व्यञ्जनं गोमयायते' ॥५९॥

राजाह, "सत्वरं गत्वा सर्वमनुष्ठीयताम्।" पुनः प्रविश्य प्रतीहारो ब्रूते, "देव! सिंहलद्वीपादागतो मेघवर्णो नाम वायसराजो द्वारि वर्त्तते। स च परिवारवृतः (श) प्रणमति। देवपादान् द्रष्टुमिच्छति" राजाह, "काकः प्राज्ञः (ष) बहुदृश्वा (स) च। तद्भवति स (ह) संग्राह्यः।" चक्रवाको ब्रूते, "देव! अस्त्वेव किन्त्वस्म-द्विपक्षः काकः स्थलचरः तेनास्मद्विपक्षपक्षेण नियुक्तः कथं सङ्गृह्यते?

---

(व) भक्ष्यवस्तूनां—खाद्यद्रव्याणाम्।

(५८) धान्यानामिति। हे राजन्! सर्वसंग्रहात् सर्वेषां वस्तूनां सञ्चयात् धान्यानां व्रीहियवादीनामित्यर्थः संग्रहः सञ्चयः उत्तमः उत्कृष्टः सर्वथा कर्त्तव्य इत्यर्थः रत्नं धनं मुखे निक्षिप्तं दत्तमपि प्राणधारणं प्राणरक्षां न कुर्य्यात्।

(५९) ख्यात इति। सर्वरसानां सर्वास्वाद्यवस्तूनां लवणः रसः उत्तमः श्रेष्ठः, अतः तं लवणं गृह्णीयात् सञ्चिनुयात् तेन लवणेन विना सर्वं वस्तु गोमयायते गोमयवत् विरसं भवति,

(श) परिवारवृतः—परिजनसहितः।

(ष) प्राज्ञः—बुद्धिमान्। (स) बहुदृश्वा—बहुदर्शी।

(ह) संग्राह्यः—अस्मत्पक्षे नियोज्यः।

तथा चोक्तम्, "आत्मपक्षपरित्यागात् परपक्षे च यो रतः ।
स परैर्हन्यते मूढो नीलवर्णशृगालवत् ॥" ६० ॥

राजोवाच, "कथमेतत् ।" मन्त्री कथयति, "अस्ति शृगालः कश्चित् स्वेच्छया (अ) नगरोपान्ते भ्रमन् (क) नीलसन्धानभाण्डे निपतितः । पश्चादुत्थातुमसमर्थः प्रातरात्मानं मृतवत् सन्दर्श्य स्थितः । अथ नीलीभाण्डस्वामिनाऽसावुत्थाप्य दूरे नीत्वा परित्यक्तः । ततोऽसौ वनं गत्वात्मानं नीलवर्णमवलोक्याचिन्तयत्, "अहमिदानीं उत्तमवर्णस्तदात्मनः किमुत्कर्षं (ख) न साधयामि" (ग) ? इत्युक्त्वा शृगालानाहूय तेनोक्तम्, "अहं भगवत्या वनदेवतया स्वहस्तेनारण्यराज्ये (घ) सर्वौषधिरसेनाभिषिक्तः । (ङ) पश्यन्तु मम वर्णम् । तदद्यारभ्य अस्मदाज्ञयाऽस्मिन्नरण्ये (च) व्यवहारः कार्यः ।" शृगालाश्च तं विशिष्टवर्णमवलोक्य

---

(६०) आत्मपक्षेति । यः आत्मपक्षपरित्यागात् आत्मीयान् विहाय परपक्षे अनात्मीयेषु रतः अनुरक्तः भवतीति शेषः, स मूढः मन्दमतिः नीलवर्णशृगालवत् नीलवर्णरञ्जितः शृगाल इव परैः विपक्षैः हन्यते व्यापाद्यते ।

(अ) नगरोपान्ते—नगरैकदेशे ।

(क) नीलसन्धानभाण्डे—संस्थापितनीलरसे पात्रे ।

(ख) उत्कर्षं—स्वजात्यपेक्षया श्रेष्ठत्वम् ।

(ग) साधयामि—सम्पादयामि ।

(घ) सर्वौषधिरसेन—तदाख्याभिषेकसाधनद्रव्यविशेषेण ।

(ङ) पश्यन्तु मम वर्णं—मम नीलवर्णत्वमेवात्र प्रमाणमित्यर्थः ॥

(च) व्यवहारः—आचरणम् ।

(छ) साष्टाङ्गपातं प्रणम्योचुः, "यथाज्ञापयति देवः।" इत्यनेन (ज) क्रमेण सर्व्वेषामरण्यवासिनामाधिपत्यं (झ) तस्य बभूव, ततस्तेन स्वज्ञातिभिरावृतेनाधिक्यं (ञ) साधितम्। ततस्तेन सिंहव्याघ्रादीनुत्तमपरिजनान् (ट) प्राप्य शृगालानवलोक्य (ठ) लज्जमानेनावज्ञाय दूरीकृताः (ड) स्वज्ञातयः। ततो (ढ) विषण्णान् शृगालानवलोक्य वृद्धशृगालेन प्रतिज्ञातम्, "मा विषीदत चेदनेनानीतिज्ञेन (ण) वयं मर्म्मज्ञाः परिभूताः। तद्यथाऽयं नश्यति तन्मया विधेयम् (त)। यतोऽमी व्याघ्रादयो (थ) वर्णमात्रविप्रलब्धाः शृगालमज्ञात्वा राजानममुं मन्यन्ते। तद्यथायं (द) परिचीयते तत् कुरुत। तत्रैवमनुष्ठेयं यथा वदामि। सर्व्वे सन्ध्या-

---

(छ) साष्टाङ्गपातम्—अष्टानाम् अङ्गानां पातः पतनं यस्मिन् कर्म्मणि तत् यथा तथा।

(ज) क्रमेण—नियमेन। (झ) आधिपत्यं—प्रभुत्वम्।

(ञ) साधितं—स्थापितम्।

(ट) उत्तमपरिजनान्—उत्कृष्टजातीयामात्यादीन्।

(ठ) लज्जमानेन—लज्जाभिभूतेन।

(ड) दूरीकृताः—निःसारिताः। (ढ) विषण्णान्—दुःखितान्।

(ण) अनीतिज्ञेन—नीतिशास्त्रानभिज्ञेन।

(त) विधेयं—कर्त्तव्यं चेष्टितव्यमिति यावत्।

(थ) वर्णमात्रविप्रलब्धाः—वर्णमात्रेण वञ्चिताः।

(द) परिचीयते—प्रत्यभिज्ञायते। शृगालोऽयमिति ज्ञायते इत्यर्थः।

समये तत्सन्निधाने (ध) महारावमेकदा करिष्यथ । ततस्तं शब्दमाकर्ण्य स्वभावात् तेनापि शब्दः कर्त्तव्यः । यतः,

य: स्वभावो हि यस्य स्यात् तस्यासौ दुरतिक्रमः ।
श्वा यदि क्रियते राजा स किं नाश्नात्युपानहम् ? ॥ ६१

ततः शब्दाद् विज्ञाय व्याघ्रेण हन्तव्यः ।" तथाऽनुष्ठिते सति तद् वृत्तम् (न) । तथा चोक्तम्,

छिद्रं मर्म च वीर्य्यं च सर्वं वेत्ति निजो रिपुः ।
दहत्यन्तर्गतश्चैव शुष्कवृक्षमिवानलः ॥ ६२ ॥

अतोऽहं ब्रवीमि । आत्मपक्षपरित्यागादित्यादि ।"

राजाह, "यद्यप्येवं तथापि दृश्यतां तावत् । अयं दूरादागतः । तत्संग्रहे (प) विचारः कर्त्तव्यः ।" चक्रवाको ब्रूते, "देव ! प्रणिधिः (फ) प्रहितो, दुर्गं च सज्जीकृतम् । अतः शुकोऽप्यालोक्य प्रस्थाप्यताम् ।

---

(ध) महारावम्—उच्चैः कोलाहलम् ।

(६१) य इति । यस्य जनस्य यः स्वभावः प्रकृतिः स्यात् तस्य असौ स्वभावः दुरतिक्रमः दुष्परिहारः । अत्रोदाहरणमाह, यदि श्वा कुक्कुरः राजा क्रियते तदा स किम् उपानहं चर्मपादुकां न अश्नाति न लेढि ।

(न) वृत्तं—घटितम् ।

(६२) छिद्रमिति । निजः आत्मीयः सन् रिपुः शत्रुः छिद्रं रन्ध्रम् अमात्यादीनां दुर्बलतामिति यावत्, मर्म तथ्यं वीर्य्यं बलञ्च सर्वं वेत्ति जानाति, अनलः दावानलः शुष्कवृक्षं शुष्कतरुमिव अन्तर्गतः अभ्यन्तरीणः सन् दहति भस्मीकरोति ।

(प) संग्रहे—अस्मत्पक्षानयने । (फ) प्रहितः—प्रेरितः ।

किन्तु, नन्दं जघान चाणक्यस्तीक्ष्णदूतप्रयोगतः ।
तद् दूरान्तरितं दूतं पश्येद्वीरसमन्वितः ॥" ६३ ॥

ततः सभां कृत्वा चाहूतः शुकः काकोऽपि । शुकः किञ्चिदुन्नतशिरा (ब) दत्तासने उपविश्य ब्रूते, "भो हिरण्यगर्भ ! त्वां राजाधिराजः श्रीमच्चित्रवर्णः समाज्ञापयति, "यदि जीवितेन श्रिया वा प्रयोजनमस्ति, तदा सत्वरमागत्यास्मच्चरणौ प्रणम, नो चेदवस्थातुं स्थानान्तरं परिचिन्तय ।" एतच्छ्रुत्वा राजा सकोपमाह, "आः ! सभायामस्माकं न कोऽपि विद्यते य एनं (भ) गलहस्तयति । ततः उत्थाय मेघवर्णो ब्रूते, "देव ! ममाज्ञां कुरु, हन्मि चैनं दुष्टशुकम् ।" मन्त्री ब्रूते, "भद्र ! मैवम् । शृणु तावत्'

न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्मम् ।
धर्मः स नो यत्र न सत्यमस्ति
सत्यं न तद् यद् भयमभ्युपैति ॥ ६४ ॥

---

(६३) नन्दमिति । चाणक्यः तदाख्यः चन्द्रगुप्तामात्यः तीक्ष्णदूतप्रयोगतः चतुरदूतोपायेन नन्दं तदाख्यं नृपतिं जघान हतवान् तत् तस्मात् राजेति शेषः । वीरसमन्वितः सैनिकवेष्टितः सन् दूतं दूरान्तरितं दूरावस्थितं पश्येत् । वैदेशिकं दूतं राजसमीपे न स्थापयेदित्यर्थः ।

(ब) दत्तासने उपविश्य—राज्ञा दत्ते आसने आसीनः ।

(भ) गलहस्तयति—गले हस्तो यस्य तं करोतीति गलहस्तयति गले हस्तं दत्त्वा निःसारयतीत्यर्थः ।

(६४) नेति । यत्र सभायां वृद्धाः मनीषाः बहुदर्शिनो विद्वांसः इति

यतो धर्मो ह्येषः,

दूतो म्लेच्छोऽप्यवध्यः स्याद्राजा दूतमुखो यतः।
उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा ॥६५॥

अन्यच्च, स्वापकर्षं परोत्कर्षं दूतोक्तैर्मन्यते तु कः।
सदैवावध्यभावेन दूतः सर्वं हि जल्पति ॥"६६॥

ततो राजा काकश्च (म) प्रकृतिमापन्नः। शुकोऽप्युत्थाय चलितः। पश्चाच्चक्रवाकेनानीय प्रबोध्य कनकालङ्कारादिकं दत्त्वा सम्प्रेषितः (य) स्वदेशं ययौ। ततो विन्ध्याचलं

---

यावत् न सन्ति न विद्यन्ते सा न सभा न सभात्वेन परिगणनीया। ये धर्मं सदनुष्ठानं न वदन्ति उपदिशन्ति ते न वृद्धाः वृद्धत्वेन परिगणनीयाः। यत्र धर्मे सत्यम् अनन्ततत्वं याथार्थ्यम् इति यावत् न अस्ति वर्त्तते स न धर्मः। यत् भयम् आशङ्कां संशयमित्यर्थः अभ्युपैति गच्छति प्राप्नोतीति यावत् तत् न सत्यम्। संशययुक्तं सत्यं न सत्यत्वेन परिगणनीयमित्यर्थः।

(६५) दूत इति। दूतः म्लेच्छः हीनजातीयोऽपि किमुत ब्राह्मण इत्यर्थः, अवध्यः वधानर्हः स्यात्। यतः राजा नृपतिः दूतमुखः दूत एव मुखं यस्य सः, दूतोपायेन स्वाभिप्रायं प्रकाशयतीत्यर्थः। शस्त्रेषु उद्यतेषु हन्तुमुत्क्षिप्तेषु अपि दूतः अन्यथा विपरीतं स्वामिवाक्यमन्यरूपं न वदति न कथयति।

(६६) स्वापकर्षमिति। को जनः दूतोक्तैः दूतवचनैः स्वस्य अपकर्षः न्यूनता तं परस्य शत्रोः उत्कर्षः श्रेष्ठता तं मन्यते जानाति। सदैव नित्यकालमेव अवध्यभावेन अवध्यत्वात् दूतः सर्वं बहुविधमित्यर्थः जल्पति प्रलपति।

(म) प्रकृतिमापन्नः—पूर्वावस्थां प्राप्तः, क्रोधात् विरत इत्यर्थः।

(य) संप्रेषितः—विसर्जितः।

गत्वा स्वस्य राजानं चित्रवर्णं प्रणतवान्‌ तमालोक्य चित्र-वर्णो राजाह, "शुक ! का वार्त्ता ? कीदृशोऽसौ देशः ?" शुको ब्रूते, "देव ! सङ्क्षेपादियं वार्त्ता। सम्प्रति युद्धो-द्योगः क्रियताम्‌। देशश्चासौ कर्पूरद्वीपः (र) स्वर्गैकदेशः, कथं वर्णयितुं शक्यते।" राजा सर्वान्‌ (ल) शिष्टानाहूय मन्त्रयितुमुपविष्टः. आह च तान्‌, सम्प्रति यत्‌ कर्त्तव्यं तद्‌ ब्रूत, विग्रहः पुनरवश्यं कर्त्तव्यः।

तथाचोक्तम्‌, असन्तुष्टा द्विजा नष्टाः सन्तुष्टाः पार्थिवाः सदा।
सलज्जा गणिका नष्टा निर्लज्जा च कुलाङ्गना ॥६७॥

दूरदर्शी नाम गृध्रो मन्त्री ब्रूते, "देव! व्यस-नितया (व) विग्रहो न विधिः (श)।

यतः, मित्रामात्यसुहृद्वर्गा यदा स्युर्दृढभक्तयः।
शत्रूणां विपरीताश्च कर्त्तव्यो विग्रहस्तदा ॥ ६८ ॥

---

(र) स्वर्गैकदेशः—स्वर्गैकांशः स्वर्गतुल्य इत्यर्थः।

(ल) शिष्टान्‌—सभ्यान्‌।

(६७) असन्तुष्टा इति। असन्तुष्टाः दानेनाप्रसन्नाः द्विजाः नष्टाः न फलोपधायकाः सदा विग्रहावसरेऽपीत्यर्थः सन्तुष्टाः निश्चिन्तचित्ताः पार्थिवाः राजानः नष्टाः राज्यसंरक्षणेऽसमर्थाः। सलज्जा लज्जावती गणिका वारविलासिनी नष्टा न प्रीतिप्रदा। कुलाङ्गना कुलवधूश्च निर्लज्जा लज्जाहीना नष्टा निन्दनीया।

(व) व्यसनितया—मत्याद्युद्रेनासक्तेन।

(श) विधिः—कर्त्तव्यः।

(६८) मित्रेति। यदा मित्राणि मित्रभावापन्नाः राजानः अमात्यः सचिवः सुहृदः स्वपक्षलोकाः दृढा अविचलिता भक्तिः

अन्यच्च, भूमिर्मित्रं हिरण्यञ्च विग्रहस्य फलं त्रयम्।
यदैतन्निश्चितं भावि कर्त्तव्यो विग्रहस्तदा॥"६९॥

राजाह, "मम बलानि तावदवलोकयतु मन्त्री। तदेतेषामुपयोगो (घ) ज्ञायताम्। तत् आहूयतां (ङ) मौहूर्त्तिकः शुभलग्नं यात्रार्थं विदधातु (छ)।" मन्त्री वदति "देव! तथापि सहसा यात्राकरणमयुक्तम्।

यतः, विशन्ति सहसा मूढा येऽविचार्य्य द्विषद्बलम्।
खड्गधारापरिष्वङ्गं लभन्ते ते सुनिश्चितम्"॥७०॥

राजाह, "मन्त्रिन्! ममोत्साहभङ्गं (च) सर्वथा मा

---

अनुरागो येषां ते तथोक्ताः स्युर्भवेयुः, शत्रूणां विपक्षाणां विपरीताः अदृढभक्तयः प्रतिकूला इति यावत् तदा विग्रहः युद्धं कर्त्तव्यः विधेयः।

(६९) भूमिरिति। भूमिः राज्यं मित्रं बन्धुः बन्धुसंग्रहः हिरण्यं सुवर्णञ्च एतत् त्रयं विग्रहस्य युद्धस्य फलं बीजम्। यदा एतत् त्रयं निश्चितं स्थिरं भावि भविष्यति तदा विग्रहः युद्धं कर्त्तव्यः।

(घ) उपयोगः—कार्य्यक्षमत्वम्।

(ङ) मौहूर्त्तिकः—मुहूर्त्तं लग्नं वेत्तीति मौहूर्त्तिकः लग्ननिर्णायको दैवज्ञः।

(छ) विदधातु—निरूपयतु।

(७०) विशन्तीति। ये मूढाः मूर्खाः द्विषतः शत्रोः बलं सैन्यम् अविचार्य्य शत्रुबलाबलम् अनिरूप्येत्यर्थः सहसा विशन्ति युद्धे प्रवर्त्तन्ते ते सुनिश्चितम् अवश्यमेव खड्गधारा खड्गस्य तीक्ष्णदेशः तेन परिष्वङ्गम् आलिङ्गनं सम्पर्कम् आघातमित्यर्थः लभन्ते प्राप्नुवन्ति। अवश्यमेव मरिष्यन्तीत्यर्थः।

(च) उत्साहभङ्गम्—उद्योगभङ्गम्।

कथाः (क)। (ख) विजिगीषुर्यथा (ग) परभूमिमाक्रामति, तथोपदिश।" गृध्रोऽब्रवीत्, "देव! तत् कथयामि। किन्तु तदनुष्ठितमेव फलप्रदम्।

तथा चोक्तम्, किं मन्त्रेणाननुष्ठाने शास्त्रवत् पृथिवीपतेः।
न ह्यौषधपरिज्ञानाद् व्याधेः शान्तिः क्वचिद्भवेत् ॥७१॥

राजादेशश्चानतिक्रमणीय इति (घ) यथाश्रुतं निवेदयामि। शृणु देव!

नद्यद्रिवनदुर्गेषु यत्र यत्र भयं नृप!।
तत्र तत्र च सेनानीर्यायाद् व्यूहीकृतैर्बलैः ॥ ७२ ॥

---

(क) मा कथाः—न कुरु (माङ्योगे लुङ्)।

(ख) विजिगीषुः—विजेतुमिच्छुः, विजयाकाङ्क्षी।

(ग) परभूमिम्—अन्यराज्यम्।

(७१) किमिति। अननुष्ठाने तदनुयायिनि कार्य्ये असम्पादिते सति शास्त्रेणेव शास्त्रवत् पृथिवीपतेः राज्ञः मन्त्रेण मन्त्रणया किं किं फलम्। शास्त्रं यथा तदनुयायि अनुष्ठानं विना न फलति तद्वत् मन्त्रोऽपि तदनुयायिना कार्य्येण विना न फलप्रद इत्यर्थः। क्वचित् औषधपरिज्ञानात् औषधमात्रज्ञानेन प्रयोगेण विनेति भावः, व्याधेः रोगस्य शान्तिरुपशमः न हि भवेत्।

(घ) यथाश्रुतं—यथाज्ञातम्।

(७२) नद्येति। नदी सरित् अद्रिः पर्वतः वनम् अरण्यं दुर्गं दुर्गमस्थानं सेनानिवासो वा तेषु यत्र यत्र येषु येषु स्थानेषु हे नृप! भयं विद्यते इति शेषः, तत्र तत्र तेषु तेषु स्थानेषु सेनानीः सेनाध्यक्षः व्यूहीकृतैः रचितव्यूहैः बलैः सैन्यैः यायात् गच्छेत्।

बलाध्यक्षः पुरो यायात् प्रवीरपुरुषान्वितः ।
मध्ये कलत्रं स्वामी च कोषः फल्गु च यद्बलम् ॥ ७३ ॥
पार्श्वयोरुभयोरश्वा अश्वानां पार्श्वतो रथाः ।
रथानां पार्श्वतो नागा नागानाञ्च पदातयः ॥ ७४ ॥
पश्चात् सेनापतिर्यायात् खिन्नानाश्वासयन् शनैः ।
मन्त्रिभिः सुभटैर्युक्तः प्रतिगृह्य बलं नृपः ॥ ७५ ॥
समेयाद् विषमं नागैर्जलाढ्यं समहीधरम् ।
सममश्वैर्जलं नौभिः, सर्वत्रैव पदातिभिः ॥ ७६ ॥

---

(७३) बलाध्यक्ष इति । बलाध्यक्षः सेनानीः प्रवीरपुरुषान्वितः वीरप्रधानसहितः सन् पुरः अग्रे यायात् गच्छेत् । मध्ये मध्यदेशे कलत्रं स्त्रीजनः स्वामी राजा कोषः धनं यच्च फल्गु हीनबलं निर्वीर्य्यमिति यावत् बलं सैन्यं यायादिति पूर्वेणान्वयः ।

(७४) पार्श्वयोरिति । उभयोः द्वयोः पार्श्वयोः वामदक्षिणयोः अश्वाः घोटकाः अश्वानां पार्श्वतः पार्श्वे रथाः, रथानां पार्श्वतः पार्श्वे नागाः हस्तिनः, नागानाञ्च पार्श्वतः पदातयः पादचाराः गच्छेयुरिति शेषः ।

(७५) पश्चादिति । सेनापतिः सैन्याध्यक्षः पश्चात् पूर्वोक्तान् सेनापुरुषान् अथवा खिन्नान् हीनसाहसान् सेनापुरुषान् आश्वासयन् आश्वस्तान् कुर्वन् शनैः मन्दं मन्दं यायात् । नृपः राजा मन्त्रिभिः अमात्यैः सुभटैः निपुणैर्योद्धृपुरुषैः युक्तः सन् बलं सैन्यं प्रतिगृह्य नीत्वा यायादिति शेषः ।

(७६) समेयादिति । विषमम् उच्चतावनतं बन्धुरमिति यावत् जलैः आढ्यं सम्पन्नं जलाढ्यं जलाकीर्णं प्रदेशं तथा महीधरं पर्वतं नागैः हस्तिसैन्यैः समेयात् समागच्छेत् समं समतलम् अबन्धुरं प्रदेशम्

हस्तिनां गमनं प्रोक्तं प्रशस्तं जलदागमे ।
तदन्यत्र तुरङ्गाणां पत्तीनां सर्वदैव हि ॥ ७७ ॥

शैलेषु दुर्गमार्गेषु विधेयं नृप ! रक्षणम् ।
स्वयोधैः रक्षितस्यापि स्वपनं योगनिद्रया ॥ ७८ ॥

नाशयेत् कर्षयेच्छत्रुं दुर्गकण्टकमर्दनैः ।
परदेशप्रवेशे च कुर्य्यादाटविकान् पुरः ॥ ७९ ॥

यत्र राजा तत्र कोषो विना कोषं न राजता ।
स्वभटेभ्यस्ततो दद्यात् को हि दातुर्न युध्यते ॥ ८० ॥

---

अम्भः जलं नद्यादिकं नौभिः नौकाभिः सर्वत्र सर्वस्मिन् स्थाने पदातिभिः पादचारैः साधनैः समेयात् इति शेषः ।

(७७) हस्तिनामिति । जलदागमे वर्षासु हस्तिनां गमनं हस्तिभिः साधनैः यात्रा प्रशस्तं श्रेष्ठं, तदन्यत्र जलदागमादन्यस्मिन् काले ग्रीष्मे शीते च तुरङ्गाणां, सर्वदैव नित्यकालं पत्तीनां पदातीनां गमनं प्रशस्तमिति शेषः ।

(७८) शैलेष्विति । हे नृप ! राजन् ! शैलेषु दुर्गमार्गेषु दुर्गमपथिषु रक्षणं सावधानं विधेयं कर्त्तव्यं स्वयोधैः स्वकीययोद्धृपुरुषैः रक्षितस्यापि योगनिद्रया कपटनिद्रया स्वपनं प्रतिक्षणमात्मरक्षणचिन्ता विधेयमिति शेषः, विजिगीषुभिः प्रतीक्षणं सावधानैर्भवितव्यमित्यर्थः ।

(७९) नाशयेदिति । दुर्गस्य कण्टकस्य शिबिरस्य मर्द्दनैः पीडनैः दुर्गस्थान् शिबिरस्थांश्च सेनापुरुषान् अवमर्द्य इत्यर्थः शत्रून् नाशयेत् हन्यात् कर्षयेत् आक्रमेच्च परस्य शत्रोः देशप्रवेशे राज्यप्रवेशे आटविकान् अरण्यचरान् योद्धृपुरुषान् पुरः अग्रे कुर्य्यात् आटविकैः प्रदर्शितमार्गः शत्रुराज्यं प्रविशेदित्यर्थः ।

(८०) यत्रेति । यत्र यस्मिन् स्थाने राजा तत्र कोषः धनं कोषं विना राजता राजत्वं न वर्त्तते, प्रभुत्वं धनमूलमिति भावः ।

यतः, न नरस्य नरो दासः किन्तु वित्तस्य भूपते ! ।
गौरवं लाघवं चापि धनाधननिबन्धनम् ॥ ८१ ॥
अभेदेन च युध्येयू रक्षेयुश्च परस्परम् ।
फल्गु सैन्यं च यत्किञ्चिन्मध्ये व्यूहस्य कारयेत् ॥ ८२ ॥
पदातींश्च महीपालः पुरोऽनीकस्य योजयेत् ।
उपरुध्यारिमासीत राष्ट्रं चास्योपपीड़येत् ॥ ८३ ॥
स्यन्दनाश्वैः समे युध्येदनूपे नौद्विपैस्तथा ।
वृक्षगुल्मावृते चापैरसिचर्मायुधैः स्थले ॥ ८४ ॥

---

ततः तस्मात् धनात् सुभटेभ्यः सुयोद्धृभ्यः दद्यात् प्रयच्छेत् को हि जनः दातुः दानपरस्य स्वामिनः अर्थे न युध्यते परैः सह न विरुध्यति प्रत्युत सर्वत्रैवेत्यर्थः ।

(८१) नेति । हे भूपते ! नरस्य मनुष्यस्य नरः मानवः न दासः अधीनः किन्तु वित्तस्य धनस्य दासः । गौरवं सम्मानं श्रेष्ठत्वं वा लाघवं लघुत्वं दुर्बलतेति यावत् धनाधननिबन्धनं धनाधनमूलम् ।

(८२) अभेदेनेति । अभेदेन अभिन्नबोधेन मिलित्वेत्यर्थः युध्येयुः युध्येरन् (महाकविप्रयोगात् परस्मैपदं) विरुध्येयुः परस्परम् अन्योन्यं रक्षेयुश्च । यत् किञ्चित् फल्गु हीनबलं सैन्यं विद्यते इति शेषः तत् व्यूहस्य सेनासन्निवेशविशेषस्य मध्ये मध्यभागे कारयेत् निदध्यात् ।

(८३) पदातीनिति । महीपालः राजा अनीकस्य सैन्यस्य पुरः अग्रे पदातीन् पादचारान् योजयेत् स्थापयेत् । अरिम् उपरुध्य आक्रम्य आसीत वर्त्तेत अस्य अरेः राष्ट्रं राज्यञ्च उपपीड़येत् राष्ट्रे उपद्रवं जनयेत् ।

(८४) स्यन्दनेति । स्यन्दनाः रथाः अश्वाः तैः समे समतलप्रदेशे युध्येत् युध्येत अनूपे जलसमीपे जलाकीर्णे देशे नौद्विपैः नौका-हस्तिभिः तथा युध्येत् । वृक्षगुल्मावृते तरुलताच्छादिते स्थाने चापैः

दूषयेच्चास्य सततं यवसान्नोदकेन्धनम् ।
भिन्द्याच्चैव तड़ागानि प्राकारान् परिखास्तथा ॥ ८५॥

बलेषु प्रमुखो हस्ती न तथाऽन्यो महीपतेः ।
निजैरवयवैरेव मातङ्गोऽष्टायुधः स्मृतः ॥ ८६ ॥

बलमश्वश्च सैन्यानां, प्राकारो जङ्गमो मतः ।
तस्मादश्वाधिको राजा विजयी स्थलविग्रहे ॥ ८७॥

तथा चोक्तम्, युध्यमाना हयारूढ़ा देवानामपि दुर्जयाः ।
अपि दूरस्थिता येषां वैरिणो हस्तवर्त्तिनः ॥ ८८॥

---

धनुर्भिः स्थले अन्यत्र देशे असिचर्मायुधैः करणैः सर्वत्र युध्येदित्यनेनान्वयः ।

(८५) दूषयेदिति । अस्य शत्रोः यवसं घासादितृणम् अन्नं भोज्यम् उदकं जलम् इन्धनं काष्ठं तेषां समाहारस्तत् सततं सर्वदा दूषयेत् दूषितम् अव्यवहार्य्यमिति यावत् कुर्य्यात्, तथा तड़ागानि जलाशयान् प्राकारान् प्राचीरवेष्टनानि परिखाः जलखातानि च भिन्द्यात् दूषयेत् च ।

(८६) बलेष्विति । महीपतेः राज्ञः बलेषु हस्त्यश्वरथपदात्याख्येषु सैन्येषु मध्ये हस्ती प्रमुखः श्रेष्ठः तथा तद्वत् अन्यः अश्वादिः न प्रमुखः । कुत इत्याह मातङ्गः हस्ती निजैः स्वकीयैः अवयवैः पादचतुष्टयं दन्तद्वयम् एकः शुण्डः एकः पुच्छश्च एवम् अष्टाभिरङ्गैः अष्टायुधः अष्टविधास्त्रवान् स्मृतः कथितः ।

(८७) बलमिति । अश्वस्य बलं तुरङ्गसैन्यं सैन्यानां मध्ये जङ्गमः गमनशीलः प्राकारः प्राचीरः तैर्वृतः आत्मरक्षां कर्तुं शक्यत्वादिति भावः, मतः विदुषामिति शेषः । तस्मात् कारणात् अश्वाः अधिकाः यस्य स अश्वाधिकः अधिकाश्वसैन्यवान् राजा स्थलविग्रहे स्थलयुद्धे विजयी विजेता भवेदिति शेषः ।

(८८) युध्यमाना इति । हयान् आरूढ़ाः अश्वसाधनाः युध्यमानाः

प्रथमं युद्धकारित्वं समस्तबलपालनम्।
दिङ्मार्गाणां विशोधित्वं पत्तिकर्म्म प्रचक्षते ॥ ८९ ॥

स्वभावशूरमस्त्रज्ञमविरक्तं जितश्रमम्।
प्रसिद्धक्षत्रियप्रायं बलं श्रेष्ठतमं विदुः ॥ ९० ॥

यथा प्रभुकृतान्मानाद् युध्यन्ते भुवि मानवाः।
न तथा बहुभिर्दत्तैर्द्रविणैरपि भूपते! ॥ ९१ ॥

वरमल्पबलं सारं न कुर्य्यान्मुण्डमुण्डली।
कुर्य्यादसारभङ्गो हि सारभङ्गमपि स्फुटम् ॥ ९२ ॥

---

युद्धे प्रवर्त्तमानाः सेनापुरुषाः देवानामपि किमुत नराणामिति भावः, दुर्जयाः जेतुम् अशक्याः येषाम् अश्वारूढ़ानां दूरस्थिताः विप्रकृष्टदेशस्थिता अपि वैरिणः शत्रवः हस्तवर्त्तिनः हस्तसन्निहिताः अतीवसमीपस्थाः भवन्तीति शेषः।

(८९) प्रथममिति। समस्तबलपालनं हस्त्यश्वादिचतुरङ्गसेनारक्षणं प्रथमं मुख्यं युद्धकारित्वं युद्धनैपुण्यं तथा दिङ्मार्गाणां दिशां मार्गाणां प्रवेशनिर्गमद्वाराणाञ्च विशोधित्वं निर्विघ्नत्वं निर्बाधत्वमिति यावत् पत्तिकर्म्म पादचाराणां कार्य्यं प्रचक्षते आहुः नीतिज्ञा इति शेषः।

(९०) स्वभावेति। स्वभावशूरं प्रकृत्या विक्रमवन्तम् अस्त्रज्ञम् अस्त्रप्रयोगकुशलम् अविरक्तं सततं कर्त्तव्यकर्म्मणि उत्साहयन्तं जितः श्रमः क्लेशः येन स तं क्लेशसहिष्णुं प्रसिद्धक्षत्रियप्रायं वीरत्वेन ख्यातक्षत्रियसदृशं बलं सैन्यं श्रेष्ठतमं मुख्यं विदुः जानन्ति विद्वांस इति शेषः।

(९१) यथेति। हे भूपते! राजन्! यथा भुवि भूतले मानवाः प्रभुकृतात् स्वामिकृतात् मानात् सम्मानादिलाभेन युध्यन्ते उत्साहेन विग्टह्णन्ति तथा तद्वत् बहुभिः अधिकैः दत्तैः द्रविणैः धनैः न युध्यन्ते इति शेषः।

(९२) वरमिति। सारं बलवत् प्रभूतबलविक्रमसम्पन्नम् अल्प-

अप्रसादोऽनधिष्ठानं देयांशहरणं च यत्।
कालयापोऽप्रतीकारस्तत्र वैराग्यकारणम् ॥ ९३ ॥
अपीडयन् बलं शत्रून् जिगीषुरभिषेणयेत्।
सुखसाध्यं द्विषां सैन्यं दीर्घप्रयाणपीडितम् ॥ ९४ ॥
दायादादपरो मन्त्री नास्ति भेदकरो द्विषाम्।
तस्मादुत्थापयेद्यत्नाद्दायादं तस्य विद्विषः ॥ ९५ ॥

---

सारम् अल्पसंख्यकमपि सैन्यं वरं श्रेयः, बह्वी संख्याधिका मुण्ड-मण्डली मस्तकश्रेणी हीनबलाः लोका इत्यर्थः न वरमिति शेषः। अत्र हेतुमाह, हि यतः असाराणां दुर्बलानां भङ्गः पराङ्मुखत्वं पलायनमिति यावत् स्फुटं स्पष्टं सारभङ्गं सारवतां बलानाम् उत्साहभङ्गं कुर्य्यात् जनयेत्।

(९३) अप्रसादेति। अप्रसादः स्वसैन्यं प्रति स्वामिनः अप्रसन्नता पुरस्कारदानाभावो वा अनधिष्ठानम् अनायकत्वं यत् च देयांशस्य दातव्यस्य वेतनादेः हरणं दानाभावः लुण्ठनप्राप्तधनस्य आत्मसात् करणं वा कालयापः वेतनदाने कालहरणम् अप्रतीकारः बलानां परस्परविरोधे अशासनम् एतत्सर्वं तत्र बलेषु वैराग्यस्य विरक्तिभावस्य कारणं हेतुः, अतस्तानि परिहरेदित्यर्थः।

(९४) अपीडयन्निति। विजेतुमिच्छुः विजिगीषुः बलं स्वसैन्यं अपीडयन् विश्रामयन् सन् शत्रून् अरीन् अभिषेणयेत् सेनया अभि-यायात्। दीर्घप्रयाणपीडितं दीर्घप्रस्थानेन क्लान्तं द्विषां शत्रूणां सैन्यं सुखसाध्यं सुखेन आक्रमणीयम् अनायासेन उन्मूलयितुं शक्यमित्यर्थः।

(९५) दायादादिति। द्विषां शत्रूणां दायादात् सपिण्डात् अन्यः अपरः अन्यः मन्त्री सचिवः भेदकरः नास्ति। तस्माद्धेतोः तस्य विद्विषः शत्रोः दायादं सपिण्डं यत्नात् यत्नेन उत्थापयेत् भेदयितुम् उत्साहयेत्।

सन्धाय युवराजेन यदि वा मुख्यमन्त्रिणा।
अन्तःप्रकोपनं कार्य्यमभियोक्तुः स्थिरात्मनः ॥९६॥
क्रूरं मित्रं रणे चापि भङ्गं दत्त्वाऽभिघातयेत्।
अथवा गोग्रहाकृष्ट्या तन्मुख्याश्रितबन्धनात् ॥९७॥
स्वराष्ट्रं वासयेद्राजा परदेशापहारणात्।
अथवा दानमानाभ्यां वासितं धनदं हि तत्" ॥९८॥

राजाह, आः! किं बहुनोदितेन (घ)।

आत्मोदयः परज्यानिर्द्वयं नीतिरितीयती।
तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते" ॥९९॥

---

(९६) सन्धायेति। युवराजेन यदि वा अथवा मुख्यमन्त्रिणा प्रधानामात्येन सह सन्धाय सन्धिं स्थापयित्वा स्थिरात्मनः निश्चिन्तस्य अभियोक्तुः शत्रोः अन्तःप्रकोपं गृहविच्छेदः कार्य्यं कर्त्तव्यम्।

(९७) क्रूरमिति। रणे युद्धे भङ्गं दत्त्वापि क्रूरं कपटाचार-रतं कृत्रिममित्यर्थः मित्रं मित्रभावापन्नं राजानम् अभिघातयेत् नाशयेत् अथवा गोग्रहाकृष्ट्या गोग्रहणतुल्येन आकर्षणेन सबलेना-कर्षणेनेत्यर्थः तस्य विपक्षस्य मुख्याः प्रधानानि ये आश्रिताः सहायाः सहायभूताः राजानः तेषां बन्धनात् गतिरोधेन सपत्नतानयनेन वा अभिघातयेदिति शेषः।

(९८) स्वराष्ट्रमिति। राजा विजिगीषुर्नृपः परदेशापहारणात् परस्य शत्रोर्देशः राज्यं तस्य अपहारणात् शत्रुराष्ट्रात् लोकान् आनीयेत्यर्थः स्वराष्ट्रं वासयेत् स्वराज्ये स्थापयेत्। अथवा धनमा-नाभ्यां धनं मानञ्च प्रदायेत्यर्थः वासयेदिति शेषः। वासितं प्रजायुक्तं हि तत् स्वराज्यं धनदं धनलाभजनकं भवेदिति शेषः।

(घ) बहुना उदितेन—उदितेन उक्तेन, वाक्प्रपञ्चेनालमित्यर्थः।

(९९) आत्मोदय इति। आत्मनः स्वस्य उदयः उन्नतिः वृद्धिरिति

मन्त्रिणा विहस्योक्तम्, "सर्वं सत्यमेतत्। किन्तु,

अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम्।

सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ?" ॥१००॥

तत उत्थाय राजा (ग) मौहूर्त्तिकावेदितलग्ने प्रस्थितः। अथ प्रणिधिप्रहितः (ङ) चरो हिरण्यगर्भसमीपमागत्य प्रणम्योवाच, "देव ! समागतप्रायो राजा चित्रवर्णः, सम्प्रति मलयपर्वतोपत्यकायां (च) समावासितो वर्त्तते। दुर्गशोधनं (क) प्रतिक्षणमनुसन्धातव्यम् (ख)। यतोऽसौ गृध्रो महामन्त्री। किञ्च केनचित् सह तस्य विश्वासकथाप्रसङ्गेन

---

यावत् परज्यानिः परस्य शत्रोः ज्यानिः हानिः इति द्वयं द्विधा इयती एतदनधिका नीतिः नियमः। तत् तस्मात् कृतिभिः पण्डितैः अरीकृत्य मुख्यत्वेन स्वीकृत्य याचस्त्यं वाग्मित्वं प्रतायते वितन्यते।

(१००) अन्यदिति। उच्छृङ्खलं स्वेच्छाचारानुगतम् उल्लङ्घितशास्त्रनियमं सत्त्वं प्राणी लोक इति यावत् अन्यविधं शास्त्रनियन्त्रितं नीतिशास्त्रानुगतं नीतिमनुसृत्य कार्य्यकारीत्यर्थः। अन्यत् अन्यप्रकारम् उभयोरन्तरं महदित्यर्थः। सर्वथा नीतिरेवानुसर्त्तव्येति भावः। हि तथाहि, तेजः ज्योतिः तिमिरम् अन्धकारः तयोः सामानाधिकरण्यम् एकत्रावस्थानं कुतः न कुतोऽपि सम्भवेदित्यर्थः। नीतिविरुद्धाचारी तिमिरावृत इव न प्रकाशते इति भावः।

(ग) मौहूर्त्तिकावेदितलग्ने—दैवज्ञनिरूपितलग्ने।

(ङ) प्रहितः—प्रेरितः।

(च) समावासितः—कृतशिविरसन्निवेशः।

(क) दुर्गशोधनं—दुर्गस्य विपक्षपक्षीयेण अनधिकृतत्वम्।

(ख) अनुसन्धातव्यं—निरूपणीयम्।

एतदिङ्गितं (ग) अवगतं मया, यदनेन प्रागेवं कोऽप्यस्मद्दुर्गं नियुक्तः।" चक्रवाको ब्रूते, "देव! काक एवासौ सम्भवति"। राजाह, "न कदाचिदेतत्। यद्येवं तदा कथं तेन शुकस्याभिभवाय (घ) उद्योगः कृतः? अपरञ्च शुकस्यागमनात् तस्य विग्रहोत्साहः, स च चिरादत्रास्ते।" मन्त्री वदति, "तथाप्यागन्तुकः (ङ) शङ्कनीयः।" राजाह, "आगन्तुका अपि प्रत्युपकारिणो दृश्यन्ते। शृणु,

परोऽपि हितवान् बन्धुर्बन्धुरप्यहितः परः।
अहितो देहजो व्याधिर्हितमारण्यमौषधम्॥१०१॥

अपरञ्च, आसीद् वीरवरो नाम शूद्रकस्य महीपतेः।
सेवकः स्वल्पकालेन स ददौ सुतमात्मनः॥"१०२॥

चक्रवाकः पृच्छति, "कथमेतत्?" राजा कथयति, "अहं पुरा शूद्रकस्य राज्ञः क्रीड़ासरसि कर्पूरकेलिनाम्नो राजहंसस्य पुत्र्यां कर्पूरमञ्जर्यां महानुरागवान्

---

(ग) इङ्गितं—रहस्यम्। (घ) अभिभवाय—निर्यातनाय।

(ङ) आगन्तुकः अज्ञातकुलशील इति यावत्।

(१०१) पर इति। हितवान् हितकारी परः शत्रुरपि बन्धुः मित्रम् अहितः अहितकारी बन्धुरपि मित्रमपि परः शत्रुः। अत्र दृष्टान्तमाह, देहजः देहात् उत्पन्नः व्याधिः रोगः अहितः क्लेशकरः आरण्यम् अरण्यजातम् औषधं हितं हितकरं स्वास्थ्यकरम्।

(१०२) आसीदिति। शूद्रकस्य तदाख्यस्य महीपतेः राज्ञः वीरवरो नाम सेवकः आसीत् बभूव स स्वल्पकालेन अचिरेण आत्मनः स्वस्य सुतं पुत्रं ददौ सर्वमङ्गलायै राज्ञः राज्यरक्षार्थं जीवितार्थञ्च बलिम् उपजहार।

अभूवम्। तत्र वीरवरो नाम राजपुत्रः कुतश्चिद् देशादागत्य राजद्वारि प्रतीहारमुपागम्य उवाच, "अहं वर्त्तनार्थी (च) राजपुत्रो, मां राजदर्शनं कारय"। ततस्तेनासौ राजदर्शनं कारितो ब्रूते, "देव! यदि मया सेवकेन प्रयोजनमस्ति तदा मम वर्त्तनं क्रियताम्"। शूद्रक उवाच, "किं ते वर्त्तनम्"? वीरवरेणोक्तम्, "प्रत्यहं (छ) सुवर्णशतचतुष्टयम्"। राजाह, "का ते (ज) सामग्री?" वीरवरो ब्रूते, "द्वौ बाहू तृतीयश्च खड्गः"। राजाह, "नैतच्छक्यम्।" तच्छ्रुत्वा वीरवरः प्रणम्य चलितः।

अथ मन्त्रिभिरुक्तम्, "देव! दिनचतुष्टयस्य वर्त्तनं दत्त्वा ज्ञायतामस्य स्वरूपं, किमुपयुक्तोऽयम् एतावद्वर्त्तनं गृह्णात्यनुपयुक्तो वेति"। ततो मन्त्रिवचनादाहूय ताम्बूलं दत्त्वा (झ) तद्वर्त्तनं दत्तवान्। यतः,

ताम्बूलं कटुतिक्तमिश्रमधुरं क्षारं कषायान्वितं
वातघ्नं कफनाशनं कृमिहरं दौर्गन्ध्यदोषापहम्।
वक्त्रस्याभरणं मलापहरणं कामाग्निसन्दीपनं
ताम्बूलस्य सखे! त्रयोदश गुणाः स्वर्गेऽप्यमी दुर्लभाः॥१०२॥

---

(च) वर्त्तनार्थी—वेतनार्थी।

(छ) सुवर्णशतचतुष्टयं—शतचतुष्टयसुवर्णमुद्रा।

(ज) सामग्री—कार्य्यकारित्वम् उपयोगः।

(झ) ताम्बूलं दत्त्वा—राजकर्तृकताम्बूलदानं नियोगपत्रप्रतिरूपम्।

(१०२) ताम्बूलमिति। ताम्बूलं कटुतिक्तमिश्रमधुरं कटुस्तिक्त

(ञ) वर्त्तनविनियोगश्च राज्ञा (ट) सुनिभृतं निरूपितः। तदर्द्धं वीरवरेण देवेभ्यो ब्राह्मणेभ्यो दत्तं, स्थितस्यार्द्धं दुःखितेभ्योः, तदवशिष्टं भोज्यव्ययविलासव्ययेन। एतत् सर्वं नित्यकृत्यं कृत्वा राजद्वारमहर्निशं खड्गपाणिः सेवते। यदा च राजा स्वयं समादिशति, तदा स्वगृहमेव याति। अथ कृष्णचतुर्द्दश्यां रात्रौ सकरुणक्रन्दनध्वनिं स राजा शुश्राव। तच्छ्रुत्वा राजा ब्रूते, "कः कोऽत्र द्वारि तिष्ठति?" तदा तेनोक्तम्, "देव! अहं वीरवरः"। राजोवाच, "क्रन्दनानुसरणं क्रियताम्"। वीरवरोऽपि "यथा आज्ञापयति देवः" इत्युक्त्वा चलितः। राज्ञा चिन्तितम्, "अयमेकाकी राजपुत्रो मया सूचीभेद्ये (ठ) तमसि प्रहितः। तदनुचितम् अहमपि गत्वा निरूपयामि किमेतदिति"। ततो राजाऽपि खड्गमादाय अनुसरणक्रमेण नगरद्वाराद् वहिर्निर्जगाम। ततो गत्वा वीरवरेण रुदती रूपयौवनसम्पन्ना सर्वालङ्कारभूषिता

---

सहितमधुरं कटुतिक्तं मधुरमित्यर्थः। क्षारं लवणरसयुक्तं कषायान्वितं कषायरसयुक्तं वातघ्नं वातरोगोपशमनं कफनाशनं कफदोषनिवारकं क्रमिहरं क्रमिदोषनाशनं दौर्गन्ध्यदोषापहं दुर्गन्धहरं वक्त्रस्य मुखस्य आभरणं शोभाजनकं मलापहं मलनाशनं कामाग्निसन्दीपनं रमणेच्छावर्द्धनं हे सखे! मन्त्रिन्! ताम्बूलस्य एते त्रयोदशगुणाः सन्तीति शेषः। अमी गुणाः स्वर्गेऽपि सुरलोकेऽपि दुर्लभाः दुष्प्रापाः।

(ञ) वर्तनविनियोगः—वर्तनस्य वेतनस्य विनियोगः यथायथविभागेन व्ययः।

(ट) सुनिभृतं—रहसि। (ठ) सूचीभेद्ये—अतिनिविड़े।

काचित् स्त्री दृष्टा, पृष्टा च, "का त्वं किमर्थं रोदिषीति?" स्त्रियोक्तम्, "अहमेतस्य शूद्रकस्य राज्ञो लक्ष्मीश्चिरादेतस्य भुजच्छायायां (ड) महता सुखेन विश्रान्ता, (ढ) देव्या अपराधेन तृतीयदिवसे राजा पञ्चत्वं यास्यति, अहमनाथा भविष्यामि। इदानीं न स्थास्यामि इति रोदिमि"। वीरवरो ब्रूते "कथं पुनरिहावासो (ण) भगवत्या भवति?" लक्ष्मीरुवाच, "यदि त्वमात्मनः पुत्रस्य शक्तिधरस्य (त) द्वात्रिंशल्लक्षणोपेतस्य मस्तकं स्वहस्तेन छित्त्वा भगवत्याः सर्वमङ्गलाया उपहारं करोषि, तदा राजा (थ) शतायुर्भविष्यति अहं सुखं निवसामि"। इत्युक्त्वाऽदृश्याऽभवत्। ततो वीरवरेण स्वगृहं गत्वा (द) निद्रालसा वधूः प्रबोधिता पुत्रश्च। तौ निद्रां परित्यज्योपविष्टौ। वीरवरस्तत्सर्वं लक्ष्मीवचनमुक्तवान्। तच्छ्रुत्वा शक्तिधरः सानन्दं ब्रूते, "धन्योऽहं एवम्भूतः, स्वामिराज्यरक्षार्थं यस्योपयोगः (ध)। तात! कोऽधुना विलम्बः? यतः,

---

(ड) भुजच्छायायां—भुजबलरूपच्छायायां, भुजबलेन रक्षिता सतीत्यर्थः।

(ढ) देव्याः—महिष्याः (देवी कृताभिषेकायामित्यमरः)।

(ण) आवासः—अवस्थितिः।

(त) द्वात्रिंशल्लक्षणोपेतस्य—द्वात्रिंशत्संख्यकमहापुरुषलक्षणोपेतस्य, यदुक्तं सामुद्रिके, "पञ्च सूक्ष्मः पञ्च दीर्घः सप्त रक्तः षडुन्नतः। त्रिह्रस्वपृथुगम्भीरो द्वात्रिंशल्लक्षणो महानिति"।

(थ) शतायुः—दीर्घजीवी। (द) निद्रालसा—निद्राभिभूता।

(ध) उपयोगः—कार्यकारिता।

कदापि तावदेवंविधे कर्मणि एतस्य देहस्य विनियोगः श्लाघ्यः"। शक्तिधरस्य माता ब्रूते, "अस्मत्कुलोचितं यद्येवं न कर्त्तव्यं, तदा गृहीतराजवर्त्तनस्य (न) निस्तारः कथं भवति ?" इत्यालोच्य सर्वे सर्वमङ्गलायतनं गताः। तत्र सर्वमङ्गलां सम्पूज्य वीरवरो ब्रूते, "देवि! प्रसीद, विजयतां शूद्रको महाराजः, गृह्यतामयमुपहारः"। इत्युक्त्वा पुत्रस्य शिरश्चिच्छेद। ततो वीरवरश्चिन्तयामास। "गृहीतराजवर्त्तनस्य निस्तारः कृतः, अधुना निष्पुत्रजीवनं (प) विडम्बनम्" इत्यालोच्यात्मनः शिरश्चिच्छेद। ततः स्त्रियाऽपि स्वामिनः पुत्रस्य च (फ) शोकार्त्तया तदनुष्ठितम् (ब)। एतत्सर्वं श्रुत्वा दृष्ट्वा च शूद्रकः साश्चर्यं चिन्तयामास,

"जीवन्ति च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः।
अनेन सदृशो लोके न भूतो न भविष्यति ॥ २०४ ॥

(भ) एतत्परित्यक्तेन राज्येनापि किं प्रयोजनम्"। ततः

---

(न) निस्तारः—परिशोधः।

(प) विडम्बनं—विफलम्। (फ) शोकार्त्तया—शोककातरया।

(ब) तदनुष्ठितम्—आत्मनः शिरश्छेद इत्यर्थः।

(११४) जीवन्तीति। मद्विधाः मादृशाः क्षुद्रजन्तवः लघुचित्ताः प्राणिनः जीवन्ति उत्पद्यन्ते म्रियन्ते च मृत्युं प्राप्नुवन्ति च। अनेन वीरवरेण सदृशः तुल्यः जनः उदारचेता इत्यर्थः लोके जगति न भूतः न जातः न भविष्यति उत्पत्स्यते च।

(भ) एतत्परित्यक्तेन—ईदृशमहापुरुषशून्येन।

स्वशिरश्छेत्तुमुन्नमितः (म) खड्गः शूद्रकेनापि। अथ भगवत्या सर्वमङ्गलया प्रत्यक्षभूतया राजा करे धृतः। "पुत्र! अलं साहसेन। इदानीं ते राज्यभङ्गो नास्ति"। राजा साष्टाङ्गं प्रणम्योवाच, देवि! न मे राज्येन जीवितेन श्रिया वा प्रयोजनमस्ति। यदि मम अनुकम्पा (य) क्रियते तदा मम (र) आयुःशेषेणाप्ययं सदारपुत्रो राजपुत्रो जीवतु। अन्यथाऽहं (ल) यथाप्राप्तां (व) गतिं गच्छामि"। भगवत्युवाच, "अनेन ते (श) सत्त्वोत्कर्षेण भृत्यवात्सल्येन च सर्वथा सन्तुष्टाऽस्मि। गच्छ विजयी भव। अयमपि सपरिवारो राजपुत्रो जीवतु"। ततो वीरवरः सपुत्रदारः प्राप्तजीवनः स्वगृहं गतः। राजा तैरलक्षितः (ष) प्रासादपृष्ठं गत्वा तथैव सुप्तः। अथ वीरवरो द्वारस्थः पुनर्भूपालेन पृष्टः सन्नुवाच, "देव! सा रुदती स्त्री मामवलोक्याऽदृश्याऽभवत्। न काऽप्यन्या वार्त्ता विद्यते"। तद्वचनमाकर्ण्य सन्तुष्टो राजा साश्चर्यं चिन्तयामास, "कथमयं (स) श्लाघ्यतां महासत्त्वः (ह)?

---

(म) उन्नमितः—कोषादुद्धृतः। (य) अनुकम्पा—दया।

(र) आयुःशेषेणापि—मदीयजीवितेनापि।

(ल) यथाप्राप्तां—शिरश्छेदनरूपाम् अवलम्बिताम्।

(व) गतिम्—उपायम्।

(श) सत्त्वोत्कर्षेण—औदार्यातिशय्येन।

(ष) अलक्षितः—अदृष्टः। (स) श्लाघ्यताम्—प्रशस्यताम्।

(ह) महासत्त्वः—विशुद्धान्तःकरणः सर्वलोकातिगौदार्यगुणयुक्त इत्यर्थः।

यतः, प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः ।
दाता सत्यावर्षी स्यात् प्रगल्भः स्यादनिष्ठुरः ॥१०५॥

एतन्महापुरुषलक्षणम् (च) एतस्मिन् सर्वमस्ति" । ततः स राजा प्रातः (क) शिष्टसभां कृत्वा सर्ववृत्तान्तं (ख) प्रस्तुत्य प्रसादात् तस्मै कर्णाटराज्यं ददौ । तत् किमागन्तुरेव (ग) विरुद्धः । तत्रापि उत्तमाधममध्यमाः सम्भवन्ति" । चक्रवाको ब्रूते,

"योऽकार्य्यं कार्य्यवच्छास्ति स किं मन्त्री नृपेच्छया ।
वरं स्वामिमनोदुःखं तन्नाशो न त्वकार्य्यतः ॥ १०६ ॥

---

(१०५) प्रियमिति । अकृपणः व्ययशीलः सन् प्रियं मधुरं ब्रूयात् कथयेत् मधुरसम्भाषणपूर्वकं दद्यादित्यर्थः । शूरः विक्रान्तोऽपीत्यर्थः, अविकत्थनः अनात्मश्लाघापरः स्यात् । दाता दानशीलः सन् सत्पात्रे गुणशालिनि दानयोग्ये इति यावत् वर्षतीति तथोक्तःस्यात् । प्रगल्भः उचितवादी सन् अनिष्ठुरः अनिर्दयः स्यात् भवेत् ।

(च) महापुरुषलक्षणम्—उदारचित्तस्य चिह्नम् ।

(क) शिष्टसभां—पण्डितसभाम् । (ख) प्रस्तुत्य—विज्ञाप्य ।

(ग) विरुद्धः—अपकारी ।

(१०६) य इति । यः नृपेच्छया राजाभिप्रायानुसारेण अकार्य्यम् अकर्त्तव्यं कार्य्यवत् कर्त्तव्यवत् शास्ति उपदिशति स किं मन्त्री स निन्दनीयः सचिवः । स्वामिनः राज्ञः मनोदुःखम् अभिप्रायानुसारेण कार्य्याकरणात् चित्तक्षोभः वरं श्रेयः किन्तु अकार्य्यतः अनुचितानुष्ठानात् तन्नाशः तस्य स्वामिनः नाशः विपत् न वरं श्रेयसी युक्तियुक्तेति यावत् ।

वैद्यो गुरुश्च मन्त्री च यस्य राज्ञः प्रियंवदः ।
शरीरधर्मकोषेभ्यः क्षिप्रं स परिहीयते ॥ १०७ ॥

शृणु देव ! पुण्याल्लब्धं यदेकेन तन्ममापि भविष्यति ।
हत्वा भिक्षुं यतो मोहान्निध्यर्थी नापितो हतः" ॥१०८

राजा पृच्छति, "कथमेतत् ?" मन्त्री कथयति, । "अस्त्ययोध्यायां पुरि चूड़ामणिर्नाम क्षत्रियः। तेन धनार्थिना कायक्लेशेन भगवांश्चन्द्रार्द्धचूड़ामणि (घ) श्चिरमाराधितः। ततः (ङ क्षीणपापोऽसौ स्वप्ने दर्शनं लब्ध्वा भगवतः प्रसादाद्(च) यक्षेश्वरेणादिष्टः, "त्वमद्य प्रातरेव क्षौरं कारयित्वा लगुड़हस्तः सन् स्वगृहद्वारि (छ) निभृतं स्थास्यसि । ततो

---

(१०७) वैद्य इति । वैद्यः चिकित्सकः गुरुः धर्मोपदेशकः मन्त्री सचिवश्च यस्य राज्ञः प्रियंवदः अयथाभूतेऽपि प्रभुचित्तलाभार्थं नर्मवादी स राजा शरीरधर्मकोषेभ्यः कायधर्मधनेभ्यः परिहीयते भ्रश्यते. तस्य शरीरादीनां हानिरवश्यं विभावनीयेत्यर्थः ।

(१०८) पुण्यादिति । यत् वस्तु एकेन जनेन पुण्यात् पुण्यबलेन तपश्चरणादिनेति यावत् लब्धं प्राप्तं तत् ममापि भविष्यति लब्धं भविष्यति इति चिन्ता न विधेया इत्यर्थः । यतः मोहात् लोभान्धतया भिक्षुं कश्चित् भिक्षुकं हत्वा निध्यर्थी धनाकाङ्क्षी कश्चित् नापितः क्षौरकारः हतः हतः राजपुरुषैर्व्यापादितः ।

(घ) चन्द्रार्द्धचूड़ामणिः—चन्द्रस्य अर्द्धं चन्द्रार्द्धं तत् चूड़ामणिः शिरोभूषणं यस्य सः, चन्द्रशेखरः ।

(ङ) क्षीणपापः—पापशून्यः । (च) यक्षेश्वरेण—कुवेरेण ।

(छ) निभृतं—तूष्णीम् ।

यमेवागतं भिक्षुकं (ज) प्राङ्गणे पश्यसि, तं (झ) निर्दयं लगुडप्रहारेण हनिष्यसि। ततोऽसौ भिक्षुकः तत्क्षणात् सुवर्णपूर्णकलशो भविष्यति। तेन त्वं यावज्जीवं सुखी भविष्यसि"। तदनन्तरं तथानुष्ठिते सति तद् वृत्तम्। ततः क्षौरकरणायानीतेन नापितेन तत्सर्वमालोक्य चिन्तितम्, "अहो (ञ) निधिप्राप्तेरयमुपायः। तदहमप्येवं किं न करोमि?" ततः प्रभृति स नापितः प्रतिदिनं तथाविधलगुडहस्तः भिक्षुकागमनमपेक्षते। एकदा तेन तथा प्राप्तो भिक्षुको लगुडेन हत्वा व्यापादितः। तेनापराधेन सोऽपि नापितो राजपुरुषैस्ताडितः पञ्चत्वं गतः। अतोऽहं ब्रवीमि, पुण्याल्लब्धं यदेकेन इत्यादि"।

राजाह, पुरावृत्तकथोद्गारैः कथं निर्णीयते परः।
किं स्यान्निष्कारणो बन्धुः किं वा विश्वासघातकः ॥१०९॥

यातु यातु, (ट) प्रस्तुतमनुष्ठीयताम्। (ठ) मलयाधित्य-

---

(ज) प्राङ्गणे—चत्वरे।

(झ) निर्दयं—गाढम्। (ञ) निधिप्राप्तेः—धनलाभस्य।

(१०९) पुरेति। कथं केन प्रकारेण पुरावृत्तस्य उपाख्यानस्य कथायाः प्रसङ्गस्य उद्गारैः कथनैः परः मयागतः किं निष्कारणबन्धुः अकृत्रिममित्रं वा अथवा किं विश्वासघातकः विश्वासहन्ता वा स्यात् निर्णीयते निश्चीयते। इतिहासकथानुशीलनेन न कथमपि शत्रुर्मित्रं वा निर्णेतुं शक्यते इत्यर्थः।

(ट) प्रस्तुतम्—उपस्थितम्।

(ठ) मलयाधित्यकायां—मलयपर्वतस्योपरि "उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यकेत्यमरः"।

कायां (ड) समावासितो वर्त्तते चित्रवर्णो नाम राजा।
तदधुना किं (ढ) विधेयम् ?" मन्त्री वदति, "देव ! आगत-
प्रणिधिमुखाच्छ्रुतं यन्महामन्त्रिणो गृध्रस्योपदेशे चित्र-
वर्णेन अनादरः कृतः। अतोऽसौ मूढो जेतुं शक्यः।
तथा चोक्तम्, लुब्धः क्रूरोऽवशोऽसत्यः प्रमादी भीरुरस्थिरः।
मूढो योधावमन्ता च सुखच्छेद्यो रिपुः स्मृतः" ॥११०॥
ततोऽसौ यावदस्मद्दुर्गावरोधं न विदधाति ताव-
न्नद्यद्रिवनवर्त्मसु तद्बलानि हन्तु सारसादयो नियुज्यन्तां
सेनापतयः।
तथा चोक्तम्, दीर्घवर्त्मपरिश्रान्तं नद्यद्रिवनसङ्कुलम्।
घोराग्निभयसन्त्रस्तं क्षुत्पिपासाहितक्लमम् ॥१११॥

---

(ड) समावासितः—कृतशिबिरसन्निवेशः।

(ढ) विधेयं—कर्त्तव्यम्।

(११०) लुब्ध इति। लुब्धः लोभपरवशः क्रूरः कपटः अवशः अजितेन्द्रियः असत्यः प्रतारकः प्रमादी अनवहितः भीरुः भयशीलः अस्थिरः अव्यवस्थितचित्तः मूढः मन्दबुद्धिः हिताहितविवेकशून्यः योधावमन्ता सैनिकावज्ञाकारी च रिपुः शत्रुः सुखच्छेद्यः अनायासेन उन्मूलयितुं शक्यः स्मृतः कथितः।

(१११) दीर्घेति। सङ्गीपातः एवम्भूतं परसैन्यं विघातयेदिति तृतीयश्लोकेनान्वयः। कीदृशं दीर्घेण वर्त्मना पथगमनेनेत्यर्थः परि-श्रान्तं क्लान्तं नद्यद्रिवनसङ्कुलं नदी सरित् अद्रिः पर्वतः वनम् अरण्यं तैः सङ्कुलं दुर्गतिं घोराग्निभयसन्त्रस्तं भीषणवह्निभय-व्याकुलं क्षुधा बुभुक्षया पिपासया तृष्णया आहितः जनितः क्लमः क्लान्तिर्यस्य तत् तथोक्तम्।

प्रमत्तं भोजनव्यग्रं व्याधिदुर्भिक्षपीड़ितम्।
असंस्थितमभूयिष्ठं वृष्टिवातसमाकुलम्॥ ११२॥
पङ्कपांशुजलाच्छन्नं सुव्यस्तं दस्युविद्रुतम्।
एवम्भूतं महीपालः परसैन्यं विघातयेत्॥११३॥

अन्यच्च, अवस्कन्दभयाद्राजा प्रजागरकृतश्रमम्।
दिवासुप्तं सदा हन्यान्निद्राव्याकुलसैनिकम्॥११४॥

अतस्तस्य (च) प्रमादिनो बलं गत्वा यथावकाशं सारसादयो दिवानिशं च निघ्नन्तु"। तथानुष्ठिते सैनिकास्चित्रवर्णस्य बहवः सेनापतयश्च निहताः। ततश्चित्रवर्णो विषण्णः स्वमन्त्रिणं दूरदर्शिनमाह, "तात! किमिति

---

(११२) प्रमत्तमिति। प्रमत्तं मद्यपानादिना विगतचेतनं भोजनव्यग्रम् आहारासक्तं व्याधिः रोगः दुर्भिक्षम् अन्नाभावः ताभ्यां पीड़ितं क्लान्तम् असंस्थितम् अनाश्रयम् अभूयिष्ठम् अल्पसंख्यकं वृष्ट्या वर्षेण वातेन शीतलवायुना शीतेनेत्यर्थः समाकुलं कातरम्।

(११३) पङ्केति। पङ्कः कर्दमः पांशवः रजांसि जलं वारि तैः आच्छन्नं व्याप्तं सुव्यस्तं विपदि पतित्वा तदुद्धारार्थं व्याकुलचित्तं दस्युविद्रुतं तस्कराद्युपद्रुतम् एवम्भूतं ज्ञात्वा महीपालः राजा परसैन्यं शत्रुसैन्यं विघातयेत् नाशयेत् सर्वथा विपदि पातयित्वा पराभवेदित्यर्थः।

(११४) अवस्कन्देति। राजा नरपतिः अवस्कन्दभयात् आक्रमणाशङ्कया प्रजागरकृशं निद्राभावकातरम् अतएव दिवा दिवसे सुप्तं निद्रितं निद्राव्याकुलसैनिकं निद्राकातरसैन्यं सदा नित्यकालं हन्यात् व्यापादयेत्।

(च) प्रमादिनः — अनवहितस्य, असुरक्षितस्येत्यर्थः।

त्वयास्मदुपेक्षा (त) क्रियते ? किं वा क्वापि अस्माकं (थ) अविनयोऽस्ति ।

तथा चोक्तम्, न राज्यं प्राप्तमित्येवं वर्त्तितव्यमसाम्प्रतम् ।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥११५॥

अन्यच्च,

दक्षः श्रियमधिगच्छति, पथ्याशी कल्यतां, सुखमरोगी ।
उद्योगी विद्यान्तं, धर्मार्थयशांसि च विनीतः" ॥११६॥

गृध्रोऽवदत्, "देव ! श्रूयताम्,

अविद्वानपि भूपालो विद्यावृद्धोपसेवया ।
परां श्रियमवाप्नोति जलासन्नतरुर्यथा ॥११७॥

---

(त) अस्मदुपेक्षा—अस्मान् प्रति औदासीन्यम् ।

(थ) अविनयः—त्वां प्रति अनादरः ।

(११५) नेति । राज्यं प्राप्तं लब्धम् अधिगतमिति यावत् इति मत्वेति शेषः असाम्प्रतम् अनुचितं यथा तथा न वर्त्तितव्यम् आचरितव्यं नोद्धतं व्यवहर्त्तव्यमित्यर्थः । कुत इत्याह, अविनयः औद्धत्यं जरा वार्द्धक्यम् उत्तमम् उत्कृष्टम् । रूपमिव सौन्दर्यमिव श्रियं सम्पदं हन्ति नाशयति । अविनयी सम्पदो भ्रश्यते इति भावः ।

(११६) दक्ष इति । दक्षः कार्य्यकुशलः जनः श्रियं सम्पदम् अधिगच्छति लभते । पथ्यं सुखभोज्यम् अश्नातीति पथ्याशी अदूषितभोज्यभक्षकः कल्यतां नीरोगित्वं सर्वत्र अधिगच्छतीत्यनेनान्वयः । अरोगी रोगहीनः सुखं मनःप्रसादम् । उद्योगी उत्साहयान् विद्यान्तं सर्वशास्त्रपारं विनीतः विनयसम्पन्नः धर्मः सदनुष्ठानजनितं पुण्यम् अर्थः धनं यशः कीर्त्तिः तानि च ।

(११७) अविद्वानिति । भूपालः राजा अविद्वान् शास्त्रज्ञानविहीनोऽपि विद्यया वृद्धाः वहुदर्शिनः तेषां सेवया विदुषाम् उपदेशं लब्ध्वा

अन्यच्च, पानं स्त्री मृगया द्यूतमर्थदूषणमेव च ।
वाग्दण्डयोश्च पारुष्यं व्यसनानि महीभुजाम् ॥११८॥

किञ्च, न साहसैकान्तरसानुवर्त्तिना
न वाप्युपायोपहतान्तरात्मना ।
विभूतयः शक्यमवाप्तुमूर्जिता
नये च शौर्य्ये च वसन्ति सम्पदः ॥११९॥

त्वया स्वबलोत्साहमवलोक्य (द) साहसैकरसिकेन मयोपन्यस्तेष्वपि (ध) मन्त्रेष्वनवधानं (न) वाक्पारुष्यं च

---

इत्यर्थः जलासन्नतरुः जलाशयसन्निहितवृक्षः यथा इव पराम् उत्तमां श्रियं सम्पदम् अन्यत्र प्रतिबिम्बितच्छायाम् अवाप्नोति लभते ।

(११८) पानमिति । पानं मद्यादिसेवा स्त्री परदारादिकं मृगया पशुहननं द्यूतम् अक्षक्रीड़ादि अर्थदूषणम् अन्यायतः अर्थग्रहणम् अपरिमितव्ययिता या वाक् च दण्डश्च तयोः वाग्दण्डयोः पारुष्यं कर्कशता एतानि सर्वाणि महीभुजां राज्ञां व्यसनानि विपत्तयः दोषा इत्यर्थः, एतैरेव राजा अवनतिं प्राप्नोति ।

(११९) नेति । साहसः दोषगुणावविचार्य्य कार्य्योद्योगः एव एकान्तः मुख्यः रसः भावानुबन्धः तम् अनुवर्त्तते यः स तेन न वा अथवा उपायेन कल्पितेनेत्यर्थः साधनेन उपहतः आक्रान्तः अन्तरात्मा यस्य सः तेन नापि ऊर्जिताः महत्यः विभूतयः ऐश्वर्य्याणि अवाप्तुं प्राप्तुं शक्यं नये नीतौ शौर्य्ये च विक्रमे च नीतिपूर्वके एव शौर्य्ये इत्यर्थः सम्पदः सम्पत्तयः वसन्ति तिष्ठन्ति ।

(द) साहसैकरसिकेन—साहसमात्रावलम्बिना ।

(ध) उपन्यस्तेषु—प्रदर्शितेषु उपदिष्टेष्वित्यर्थः ।

(न) वाक्पारुष्यं—वाक्यावधीरणम् ।

क्षतम् । अतो दुर्नीतेः (प) फलमिदमनुभूयते ।

तथा चोक्तम्, दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः ?

सन्तापयन्ति कमपथ्यभुजं न रोगाः ? ।
कं श्रीर्न दर्पयति ? कं न निहन्ति मृत्युः ?
कं स्त्रीकृता न विषयाः परितापयन्ति ? ॥१२०॥
मुदं विषादः, शरदं हिमागमः,
तमो विवस्वान् सुकृतं कृतघ्नता ।
प्रियोपपत्तिः शुचम् आपदं नयः,
श्रियं समृद्धामपि हन्ति दुर्णयः ॥१२१॥

ततो मयाप्यालोचितम्, (फ) प्रज्ञाहीनोऽयं नो चेत् कथं

---

(प) फलमिदं—सैन्यनाशरूपः परिणामः ।

(१२०) दुर्मन्त्रिणमिति । नीतिदोषाः नीत्यवमाननाजन्याः दोषाः कं मन्त्रिणं न उपयान्ति प्राप्नुवन्ति अपि तु सर्वमेव । अपथ्यभुजम् अहितकरभोज्यभक्षकं कं जनं रोगाः पीड़ाः न सन्तापयन्ति क्लिश्नन्ति। श्रीः सम्पत् कं जनं न दर्पयति गर्वितं करोति । मृत्युः कं न निहन्ति को न मृत्युवशं गतः । स्त्रीकृताः विषयाः स्त्रीजनकृतदुराचारा इत्यर्थः कं जनं न परितापयन्ति क्षोभयन्ति ।

(१२१) मुदमिति । विषादः दुःखं मुदं हर्षं हिमागमः हिमर्त्तुः शरदं शरत्कालं विवस्वान् सूर्य्यः तमः अन्धकारं कृतघ्नता उपकारास्वीकारः सुकृतं पुण्यं प्रियोपपत्तिः इष्टलाभः शुचं शोकं नयः नीतिः आपदं विपत्तिं दुर्णयः दुर्नीतिःसमृद्धां सर्वसम्पन्नामपि श्रियं लक्ष्मीं हन्ति नाशयन्ति ।

(फ) प्रज्ञाहीनः—विवेकरहितः मन्दमतिरित्यर्थः ।

(ब) नीतिशास्त्रकथाकौमुदीं (भ) वागुल्काभिस्तिमिरयति ?
यतः, यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ?।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ? ॥१२२॥
तेनाहमपि तूष्णीं स्थितः"। अथ राजा (य) बद्धाञ्जलिराह, "तात! अस्त्वयं ममापराधः। इदानीं यथाऽहमवशिष्टबलसहितः प्रत्यावृत्य विन्ध्याचलं गच्छामि तथोपदिश"। गृध्रः स्वगतं चिन्तयति, "कर्त्तव्योऽत्र प्रतीकारः।
यतः, देवतासु गुरौ गोषु राजसु ब्राह्मणेषु च।
नियन्तव्यः सदा कोपो बालवृद्धातुरेषु च" ॥१२३॥

---

(ब) नीतिशास्त्रकथाकौमुदीं—नीतिशास्त्रस्य कथा उपदेशवचनमेव कौमुदी ज्योत्स्ना कर्त्तव्यमार्गप्रदर्शकत्वात् चन्द्रिकास्वरूपा ताम्।

(भ) वागुल्काभिः—वाचः उल्काः धूमशिखाः ताभिः।

(म) तिमिरयति—आच्छादयति।

(१२२) यस्येति। यस्य जनस्य स्वयम् आत्मनः प्रज्ञा बुद्धिर्नास्ति तस्य जनस्य शास्त्रं किं करोति, बुद्धिहीने शास्त्रोपदेशः विफल एव। लोचनाभ्यां नेत्रद्वयेन विहीनस्य वर्जितस्य अन्धस्येत्यर्थः दर्पणः मुकुरः किं करिष्यति किमन्धस्य दर्पणेनेत्यर्थः।

(य) बद्धाञ्जलिः—कृताञ्जलिः।

(१२३) देवतास्विति। देवतासु देवेषु गुरौ पूजनीये जने गोषु धेनुषु राजसु नृपेषु ब्राह्मणेषु विप्रेषु बालः शिशुः वृद्धः प्राचीनः आतुरः रुग्णः तेषु सदा सर्वदा कोपः क्रोधः नियन्तव्यः संरोद्धव्यः न कथमपि प्रदर्शयितव्य इति यावत्।

ब्रूते च विहस्य, "देव! मा भैषीः, समाश्वसिहि। शृणु देव!

मन्त्रिणां भिन्नसन्धाने भिषजां सन्निपातके।

कर्मणा व्यज्यते प्रज्ञा सुस्थे को वा न पण्डितः? ॥१२४॥

अपरञ्च, आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च।

महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥१२५॥

देव! तव प्रतापादेव दुर्गं भङ्क्त्वा (र) कीर्त्तिप्रतापेन सहितं त्वामचिरेणैव कालेन विन्ध्याद्रिं नयामि"। राजाह, "कथमधुना स्वल्पबलेन तत्सम्पद्यते"। गृध्रो वदति, "देव! सर्वं भविष्यति। यतः, विजि-

---

(१२४) मन्त्रिणामिति। भिन्नस्य भेदं प्राप्तस्य शत्रोरित्यर्थः सन्धाने भेदादिना अभिप्रायज्ञाने मन्त्रिणाम् अमात्यानां तथा सन्निपातके वातपित्तश्लेष्मणां वैषम्योत्पादके विकारे रोगभङ्गे इति यावत् भिषजां चिकित्सकानां तथा अन्येषां कर्मणा कार्य्यसाधनेन प्रज्ञा बुद्धिः व्यज्यते प्रकाश्यते ज्ञायते इति यावत् सुस्थे अनपेक्षितबुद्धि-चातुर्य्ये विषये को जनः अमात्यादीनां मध्ये कः न पण्डितः पण्डित-मन्यः भवतीति शेषः।

(१२५) आरभन्त इति। अज्ञाः मन्दमतयः अल्पमेव क्षुद्रमेव आरभन्ते अल्पायाससाध्ये एव कार्य्ये प्रवर्त्तन्ते इत्यर्थः कामम् अत्यर्थं व्यग्राः तत्साधनार्थं व्याकुलाः भवन्ति अल्पारम्भे बहुक्रिया भवन्ती-त्यर्थः। कृतधियः बुद्धिमन्तो जनाः महान् आरम्भः कार्य्योद्योगः येषां ते तथोक्ताः महत् कार्य्यं साधयितुं प्रवर्त्तमाना अपि निरा-कुलाः अव्यग्राः तिष्ठन्ति, नाधिकां व्यग्रतां प्रकटयन्ति इत्यर्थः।

(र) कीर्त्तिप्रतापेन—यशःपौरुषाभ्यां सह।

गीघोऽदीर्घसूत्रता (ल) विजयसिद्धेः (व) अवश्यं भावः। तदद्य दुर्गद्वारावरोधो विधीयताम्।" अथ प्रणिधिना वकेनागत्य हिरण्यगर्भस्य कथितम्। "देव! स्वल्पबल एवायं राजा चित्रवर्णो गृध्रस्य (श) वचनोपष्टम्भादागत्य दुर्गद्वारावरोधनं करिष्यति"। राजहंसो ब्रूते, "भोः सर्वज्ञ! किमधुना विधेयम्। चक्रवाको वक्ति, "स्वबले (ष) सारासारविचारः क्रियताम्। ज्ञात्वा सुवर्णवस्त्रादि (स) यथार्हं प्रसाददानं ह) च क्रियताम्। तथा चोक्तम्,

> यः काकिनीमप्यपथप्रपन्नां
> समुद्धरेन्निष्कसहस्रतुल्याम्।
> कदापि कोटिष्वपि मुक्तहस्त-
> स्तं राजसिंहं न जहाति लक्ष्मीः॥ १२६॥

---

(ल) अदीर्घसूत्रता—दीर्घं चिरेण साध्यं सूत्रम् आरब्धं कर्म यस्य स न भवतीत्य दीर्घसूत्रस्तस्य भावः, अचिरक्रियता।

(व) विजयसिद्धेः—जयलाभस्य।

(श) वचनोपष्टम्भात्—उपदेशमवलम्ब्य।

(ष) सारासारः—बलाबलम्।

(स) यथार्हं—यथायोग्यम्। (ह) प्रसाददानं—पुरस्कारः।

(१२६) य इति। यो जनः अपथप्रपन्नाम् असत्पथगताम् अपव्ययितां काकिनीं कपर्दकमपि निष्कसहस्रतुल्यां सहस्रमुद्रातुल्यां परिगणय्येत्यर्थः, समुद्धरेत् पुनः संगृह्णीयात् कदाचित् कस्मिंश्चिदपि समये कोटिषु कोटिसंख्यकेषु बहुसंख्यकेषु धनेषु मुक्तहस्तः अतीवव्ययशीलश्च भवेदिति शेषः। तं राजसिंहं राजश्रेष्ठं लक्ष्मीः श्रीः न जहाति त्यजति। यथोचितव्ययशीलस्य न कदापि सम्पत् परिक्षीयते इति भावः।

अन्यच्च, क्रतौ विवाहे व्यसने रिपुक्षये
यशस्करे कर्म्मणि मित्रसङ्ग्रहे ।
प्रियासु नारीष्वधनेषु बन्धुषु
ह्यतिव्ययो नास्ति नराधिपाष्टसु ॥ १२७ ॥

यत, मूर्खः स्वल्पव्ययत्रासात् सर्वनाशं करोति हि ।
कः सुधीस्त्यजते भाण्डं शुल्कस्यैवातिसाध्वसात् ॥१२८॥

राजाह, "कथमिह समयेऽतिव्ययो युज्यते । उक्तं च,
आपदर्थं धनं रक्षेत्
मन्त्री ब्रूते,—श्रीमतां कुत आपदः ।
राजाह,—कदाचित् कुपिता लक्ष्मीः
पुनर्मन्त्री ब्रूते देव,—सञ्चितार्थो विनश्यति ॥ १२९ ॥

---

(१२७) क्रताविति । क्रतौ यज्ञे यागाद्यनुष्ठाने इत्यर्थः विवाहे विवाहकर्मणि व्यसने विपदि रिपुक्षये शत्रुविनाशे यशस्करे कीर्त्तिसाधने कर्मणि मित्रसंग्रहे मित्रोपार्जनविषये प्रियासु पतिच्छन्दानुवारिणीषु नारीषु स्त्रीषु अधनेषु दरिद्रेषु बन्धुषु तादृशबन्धूनां साहाय्यार्थम् एतेषु अष्टसु हे नराधिप ! राजन् ! अतिव्ययः अपव्ययिता नास्ति न विद्यते ।

(१२८) मूर्ख इति । मूर्खः मन्दबुद्धिर्जनः स्वल्पव्ययत्रासात् अल्पत्वादपि धनोपक्षयात् भयेन सर्वनाशं सर्वस्वक्षयं करोति । कः सुधीः बुद्धिमान् जनः शुल्कस्य राजप्रदेयकरस्यैव अतिसाध्वसात् अतिभयात् भाण्डं पण्यद्रव्यजातं त्यजते त्यजति (सङ्काविनिबन्धनत्वात् आत्मनेपदम्) विजहाति ।

(१२९) आपदिति । आपदर्थं आपन्नाशाय धनं वित्तं रक्षेत् सञ्चिनुयात् । एवं राज्ञा उक्ते सति मन्त्री ब्रूते श्रीमतां धनशालिनां जनानाम् आपदः कुतः सम्भवन्ति ऐश्वर्ययुक्तानां विपत्तिर्नास्ति इति

तदेव ! (ख) कार्पण्यं परित्यज्य (क) स्वसुभटाः दानमानाभ्यां पुरस्क्रियन्ताम्। तथा चोक्तम्,

परस्परज्ञाः संहृष्टाः त्यक्तप्राणाः सुनिश्चिताः।
कुलीनाः पूजिताः सम्यग्विजयन्ते द्विषां बलम् ॥१३०॥

अपरञ्च, सुभटाः शीलसम्पन्नाः संहताः कृतनिश्चयाः।
अपि पञ्चशतं शूरा घ्नन्ति रिपुवाहिनीः ॥ १३१ ॥

किञ्च, शिष्टैरप्यविशेषज्ञ उग्रश्च कृतनाशकः।

---

भावः। कदाचित् लक्ष्मीः श्रीः यदि कुपिता अप्रसन्ना भवेत्। इति राज्ञा प्रस्तुते मन्त्री ब्रूते, तदा सञ्चितार्थो ऽनः विनश्यति नष्टो भवति। आपदि ऐश्वर्य्ययुक्तानां सञ्चितानि धनानि "निर्गतमात्रं यदा लक्ष्मीर्गजभुक्तकपित्थवत्" इति न्यायेन नश्यन्ति इति भावः।

(ख) कार्पण्यं—व्ययकुण्ठतां कृपणतामिति यावत्।

(क) स्वसुभटाः—स्वकीयकुशलयोद्धृपुरुषाः।

(१३०) परस्परेति। परस्परम् अन्योन्यं जानन्तीति परस्परज्ञाः अन्योन्यसञ्जातसौहार्दाः परस्परसहायका इति यावत्। संहृष्टाः सन्तुष्टाः प्रसादलाभेन स्वामिनि हृष्टचित्ताः त्यक्ताः उपेक्षिताः प्राणाः यैस्ते जीवितेऽपि अपेक्षमाणाः सुनिश्चिताः शत्रुजयाय कृतसंकल्पाः कुलीनाः सत्कुलोत्पन्नाः पूजिताः उच्चपदवीप्रदानादिना सम्भाविताः स्वसैनिका इति शेषः। द्विषां शत्रूणां बलं सैन्यं सम्यक् सर्वतोभावेन विजयन्ते पराभवन्ति।

(१३१) सुभटा इति। शीलसम्पन्नाः सद्वंशजाताः संहताः परस्परं मिलिताः कृतनिश्चयाः स्थिरसंकल्पाः प्राणात्यये न निवर्त्तामहे इति प्रतिज्ञारूढाः पञ्चशतं पञ्चशतसंख्यका अपि शूराः विक्रमवन्तः निपुणयोद्धारः, रिपुवाहिनीः शत्रोश्चतुरङ्गसेनाः घ्नन्ति नाशयन्ति।

(१३२) शिष्टैरिति। अविशेषज्ञः आत्मपरभेदज्ञाने मूढः उग्रः

त्यज्यते किं पुनर्नान्यैः पक्षग्राह्यात्मम्भरिर्नरः ॥ १२२ ॥

यतः, सत्यं शौर्य्यं तथा त्यागो नृपस्यैते त्रयो गुणाः ।
एतैस्त्यक्तो महीपालः प्राप्नोति खलु वाच्यताम् ॥१२३॥

अमात्यास्तावदवश्यमेव पुरस्कर्त्तव्याः । तथा चोक्तम्,

यो येन प्रतिबद्धः स्यात् सह तेनोदयी व्ययी ।
सुविश्वस्तो नियोक्तव्यः प्राणेषु च धनेषु च ॥ १२४ ॥

यतः, धूर्त्तः स्त्री वा शिशुर्यस्य मन्त्रिणः स्युर्महीपतेः ।
अनीतिपवनक्षिप्तः कार्य्याब्धौ स निमज्जति ॥ १२५ ॥

---

सदा उद्धतप्रकृतिः कृतस्य नाशकः कृतनाशकः अकृतज्ञः आत्मम्भरिः स्वार्थपरः नरः लोकः पत्न्या भार्य्ययापि त्यज्यते परिहीयते अन्यैः अपरैः शिष्टैः विद्वद्भिः किं पुनः किमु वक्तव्यं सर्वथा त्यज्यते एवेत्यर्थः ।

(१२३) सत्यमिति । सत्यं सत्यवादिता शौर्य्यं वीरता पुरुषकार इति यावत् तथा त्यागः सत्पात्रे विनियोगः एते नृपस्य राज्ञः त्रयः गुणाः एतैः गुणैस्त्यक्तः महीपालः राजा खलु निश्चितं वाच्यतां निन्दनीयत्वं प्राप्नोति लभते ।

(१२४) य इति । यो जनः येन जनेन सह प्रतिबद्धः संबद्धः धनादिना उपकृत इत्यर्थः स्यात् भवेत् तेन सह उदयी अभ्युन्नतः व्ययी क्षयितधनश्च भवेदिति शेषः । प्राणेषु जीवितेषु जीवनरक्षार्थम् इत्यर्थः धनेषु धनरक्षार्थञ्च सुविश्वस्तः विश्वासमापन्नो जनः नियोक्तव्यः निधातव्यः ।

(१२५) धूर्त्त इति । धूर्त्तः शठः स्त्री नारीजनः शिशुर्बालकश्च इति त्रयः यस्य महीपतेः राज्ञः मन्त्रिणः मन्त्रदातारः स्युः भवेयुः स महीपतिः राजा अनीतिपवनक्षिप्तः अनीतिर्दुर्नय एव पवनः वायुः तेन क्षिप्तः चालितः सन् कर्त्तव्यात् भ्रष्टः सन्नित्यर्थः कार्य्यमेव अब्धिः सागरः तस्मिन् कार्य्यकलापसमुद्रे निमज्जति पतित्वा नश्यतीत्यर्थः ।

पश्य देव ! हर्षक्रोधौ यतौ यस्य कोषः स्वल्पव्ययेन च ।
नित्यं भृत्यान्ववेक्षा च तस्य स्याद्धनदा धरा ॥ १२६ ॥
येषां राज्ञा सह स्यातामुपचयापचयौ ध्रुवम् ।
अमात्यान् नीतिमान् राजा नावमन्येत कर्हिचित् ॥१२७॥
यतः, महीभुजो मदान्धस्य मज्जतः कार्य्यसागरे ।
स्खलतो हि करालम्बः सुशिष्टैरेव दीयते" ॥ १२८ ॥

अथागत्य प्रणम्य मेघवर्णो ब्रूते, "देव ! दृष्टिप्रसादं कुरु । एष युद्धार्थी विपक्षो दुर्गद्वारि तिष्ठति । तद्देवपादादेशाद् वहिर्निःसृत्य स्वविक्रमं दर्शयामि । तेन देवप्रसादस्य (ख) आनृण्यमुपगच्छामि ।" चक्रवाको ब्रूते, "मैवं यदि वहिर्निःसृत्य योद्धव्यः तदा दुर्गाश्रयणं निष्प्रयोजनम् ।

---

(१२६) हर्षेति । यस्य राज्ञः हर्षक्रोधौ आनन्दविषादौ यतौ संयतौ विपदि धैर्य्यम् सम्पतौ च क्षमेत्यर्थः स्वल्पव्ययेन परिमितव्ययविशिष्टश्च कोषः धनागारः नित्यं सर्व्वदा भृत्येषु अनुजीविषु अन्ववेक्षा समादरश्च तस्य धरा राज्यं धनदा स्यात् भवेत् ।

(१२७) येषामिति । येषाम् अमात्यानाम् उपचयापचयौ उन्नत्यवनती ध्रुवं निश्चितं राज्ञा न्टपेण सह स्यातां नीतिमान् राजा कर्हिचित् कदाचिदपि अमात्यान् तादृशानित्यर्थः न अवमन्येत न अवजानीयात् ।

(१२८) महीभुज इति । मदान्धस्य मदेन गर्व्वेण अन्धस्य विवेकरहितस्य कार्य्यसागरे कर्त्तव्यसमुद्रे मज्जतः निमग्नस्य किंकर्त्तव्यविमूढस्येत्यर्थः महीभुजः राज्ञः सम्बन्धे स्खलतः तीरादेव सुशिष्टैः पण्डितैः करालम्बः हस्तावलम्बनं दीयते, विद्वांस एव सदुपदेशेन तादृशं विपदः उद्धरन्तीत्यर्थः ।

(ख) आनृण्यम्—ऋणमुक्तिम् ।

अपरञ्च, विषमोऽपि यथा नक्रः सलिलान्निःसृतोऽवशः ।
वनात् तु प्रच्युतः सत्यं सिंहोऽपि स्याच्छृगालवत्" ॥१३९

वायसो ब्रूते, "स्वयं गत्वा युद्धं दृश्यताम् ।
यतः, पुरस्कृत्य बलं राजा योधयेदवलोकयन् ।
स्वामिनाऽधिष्ठितः श्वाऽपि किं न सिंहायते ध्रुवम् ?॥"१४०॥

अनन्तरं ते सर्वे दुर्गद्वारं गत्वा (ग) महाहवं कृतवन्तः । परेद्युश्चित्रवर्णो नाम राजा गृध्रमुवाच, "तात ! स्वप्रतिज्ञातमधुना विधीयताम् ।" गृध्रो ब्रूते, "शृणु तावत्,

अकालसहमत्यल्पं मूर्खव्यसनिनायकम् ।
अगुप्तं भीरुयोधं च दुर्गव्यसनमुच्यते ॥ १४१ ॥

---

(१३९) विषम इति । यथा येन प्रकारेण विषमः भीषणोऽपि नक्रः कुम्भीरः जलात् सलिलात् निःसृतः निर्गतः अवशः आत्मरक्षणेऽपि असमर्थः भवति सिंहोऽपि पशुराजोऽपि वनात् प्रच्युतः निःसृतः शृगालवत् जम्बूक इव हीनविक्रम इत्यर्थः सत्यं निश्चितं स्यात् तथा दुर्गात् बहिःस्थितः महाबलः योद्धापि हीनबलः स्यादिति भावः ।

(१४०) पुरस्कृत्येति । राजा अवलोकयन् पश्यन् सन् स्वयम् उपस्थायेत्यर्थः, बलं सैन्यं पुरस्कृत्य अग्रे कृत्वा योधयेत् युद्धं कारयेत् । तथात्वे बलानां विशेषः उत्साहो जायते इत्याह स्वामिना प्रभुणा कुक्कुरः अपि किं न ध्रुवं निश्चितं सिंहायते सिंह इव आचरति ।

(ग) महाहवं—तुमुलसंग्रामम् ।

(१४१) अकालसहमिति । अकालसहं कालं सहते यत् तत् कालसहं तन्न भवतीत्यकालसहम् अदृढम् अत्यल्पम् अप्रशस्तं मूर्खः व्यस-

तत्तावदत्र नास्ति,

उपजापश्चिरारोधोऽवस्कन्दस्तीव्रपौरुषम्।
दुर्गस्य लङ्घनोपायाश्चत्वारः कथिता इमे॥ १४२॥

अत्र च यथाशक्ति क्रियते यत्नः।" चित्रवर्णः कथयत्येवमेव। ततः अनुदिते भास्करे प्रातःकाले चतुर्ष्वपि द्वारेषु युद्धे प्रवृत्ते दुर्गाभ्यन्तरे गृहे गृहे काकैरेकदा अग्निर्निक्षिप्तः (घ)। ततो गृहीतं दुर्गमिति कोलाहलं श्रुत्वा अनेकगृहेषु च पावकं प्रदीप्तं प्रत्यक्षेणावलोक्य राजहंसस्य सैनिका बहवो दुर्गनिवासिनः सत्वरं ह्रदं प्रविष्टाः।

यतः, सुमन्त्रितं सुविक्रान्तं सुयुद्धं सुपलायितम्।
प्राप्तकाले यथाशक्ति कुर्य्यान्न तु विचारयेत्॥ १४३॥

---

ध्यानविलीनः व्यसनी पानादिव्यसनासक्तश्च नायकः सेनाध्यक्षः यस्मिन् तत् अगुप्तम् अरक्षितं भीरवः भयशीलाः योधाः यस्मिन् तत् च दुर्गव्यसनं दुर्गविपत्तिः उच्यते कथ्यते।

(१४२) उपजाप इति। उपजापः दुर्गस्थसैन्यमध्ये परस्परभेदसंघटनं चिरम् आरोधः आरोधनं निर्गमप्रवेशप्रतिषेधः अथवा चिरम् आरोधः असम्यक्रोधः अवरोधः अवस्कन्दः बलादाक्रमणं तीव्रपौरुषम् अत्यर्थसाहसप्रदर्शनञ्च इमे चत्वारः दुर्गस्य लङ्घनोपायाः लङ्घनस्य अधिकारस्य उपायाः साधनानि।

(घ) निक्षिप्तः—दत्तः।

(१४३) प्राप्तकाले तथावसरे सुमन्त्रितं सुमन्त्रणां (सर्वत्र भावे क्तः) सुविक्रान्तं सुविक्रमं सुयुद्धं सुयोधनं सुपलायितं सम्यक् पलायनञ्च कुर्य्यात् विदध्यात् न विचारयेत् अन्यथा विचिन्त्य कालक्षेपं कुर्य्यादित्यर्थः।

राजहंसस्य सुखिस्वभावात् मन्दगतिः सारसद्वितीयः चित्रवर्णस्य सेनापतिना कुक्कुटेनागत्य वेष्टितः। हिरण्यगर्भो राजाह, "सेनापते सारस! ममानुरोधादात्मानं न व्यापादयिष्यसि, अधुनाऽहं गन्तुमसमर्थः। त्वं गन्तुमधुनाऽपि समर्थः। तद्गत्वा जलं प्रविश। मत्पुत्रं चूडामणिनामानं सर्वज्ञस्य सम्मत्या राजानं करिष्यसि।" सारसो ब्रूते देव! न वक्तव्यमेवं दुःसहं वचः। यावत् चन्द्रार्कौ दिवि तिष्ठेते तावद्विजयतां देवः।
अहं देव! दुर्गाधिकारी, तन्मम मांसासृग्विलिप्तेन (ङ) द्वारवर्त्मना तावत् प्रविशतु शत्रुः, अपरञ्च देव!

क्षमी दाता गुणग्राही स्वामी भाग्येन लभ्यते।"

राजाह "अस्त्येवं किन्तु,

शुचिर्दक्षोऽनुरक्तश्च भृत्यः खलु सुदुर्लभः॥" १४४॥

सारसो ब्रूते, "शृणु देव!

यदि समरमपास्य नास्ति मृत्यो-
र्भयमिति युक्तमितोऽन्यतः प्रयातुम्।

---

(ङ) मांसासृग्विलिप्तेन—मांसञ्च असृक् च मांसासृजौ ताभ्यां विलिप्तेन, मां हत्वेत्यर्थः।

(१४४) क्षमीति। क्षमी क्षमावान् दाता दानशीलः गुणग्राही गुणग्रति कृतादरः स्वामी प्रभुः भाग्येन पुण्यबलेन लभ्यते प्राप्यते। राजाह, शुचिः विशुद्धस्वभावः दक्षः कार्य्यकुशलः अनुरक्तः प्रभुपरायणः भृत्यः खलु निश्चितं सुदुर्लभः दुष्प्रापः।

(१४५) यदीति। यदि समरं युद्धम् अपास्य त्यक्त्वा समरात् पला-

अपिच स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोषो बलं सुहृत्।
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ॥ १४८ ॥

अत्रापि प्रधानाङ्गं राजा।" अथ कुक्कुटेनागत्य राजहंसस्य शरीरे (च) खरतरनखाघातः कृतः। ततः सत्वरमुपसृत्य सारसेन स्वदेहान्तरितो राजा। अनन्तरं कुक्कुटेन नखमुखप्रहारैर्जर्जरीकृतेन (छ) सारसेन स्वाङ्गेनाच्छाद्य राजा जले प्रक्षिप्तः। कुक्कुटोऽपि सेनापतिना सारसेन स्वचञ्चुप्रहारेण व्यापादितः। पश्चात् सारसोऽपि बहुभिः पक्षिभिः (ज) सम्भूय व्यापादितः। अथ चित्रवर्णो दुर्गं प्रविश्य दुर्गावस्थितं द्रव्यं ग्राहयित्वा (झ) वन्दिभिर्जयशब्देनानन्दितो जगाम। राजपुत्रैरुक्तम्, "तस्मिन् राजहंसबले पुण्यवान् सारस एव। येन स्वदेहदानेन स्वामी रक्षितः।

---

पद्मानिव नरेशे राजनि निमीलति मृते सति अयं जीवलोकः सर्व एव जनः निमीलति म्रियते उदीयमाने जीवति सति उदेति उदयं गच्छति जीवतीत्यर्थः।

(१४८) स्वामीति। स्वामी राजा अमात्यः मन्त्री राष्ट्रं राज्यं दुर्गं सेनावासः कोषः भाण्डागारः बलं सैन्यं सुहृत् मित्रभावापन्नाः राजानः प्रकृतयः प्रजाः पौराणां नागरिकाणां श्रेणयः समूहाश्च एतानि राज्याङ्गानि एतैरेव राज्यं सम्पन्नं भवतीत्यर्थः।

(च) खरतरनखाघातः—तीव्रनखप्रहारः।

(छ) जर्जरीकृतेन—क्षतविक्षतेन। (ज) सम्भूय—मिलित्वा।

(झ) वन्दिभिः—स्तुतिपाठकैः।

अथ मरणमवश्यमेव जन्तोः

किमिति मुधा मलिनं यशः क्रियेत ॥ १४५ ॥

अन्यच्च, भवेऽस्मिन् पवनोद्भ्रान्तवीचिविभ्रमभङ्गुरे।

जायते पुण्ययोगेन परार्थे जीवितव्ययः ॥ १४६ ॥

त्वं देव! सर्वदा स्वामी रक्षणीयः।

यतः, प्रकृतिः स्वामिना त्यक्ता समृद्धापि न जीवति।

अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि? ॥ १४७ ॥

अपरञ्च, नरेशे जीवलोकोऽयं निमीलति निमीलति।

उदेत्युदीयमाने च रवाविव सरोरुहम् ॥ १४८ ॥

---

विशेषार्थः शत्रोर्भयं नास्ति इति तदा इतः समरस्थानात् अन्यतः अन्यस्मिन् स्थाने प्रयातुं पलायितुमित्यर्थः युक्तम् उचितम्, अथ यदि जन्तोः प्राणिनः मरणम् अवश्यमेव भविष्यतीति शेषः, तदा यशः कीर्त्तिः किमिति मुधा वृथा मलिनं कलुषितं क्रियेत।

(१४६) भव इति। पवनेन वायुना उद्भ्रान्ताः चालिताः वीचयः तरङ्गास्तेषां विभ्रमः विलासवत् भङ्गुरे विपदास्पदे क्षणभङ्गुरे असारे इति यावत् अस्मिन् भवे संसारे परार्थे परोपकाराय जीवितव्ययः प्राणोत्सर्गः पुण्ययोगेन पुण्यबलेन जायते उत्पद्यते। अवश्यविध्वंसिनां प्राणानां परार्थे उत्सर्गः पुण्यलक्षणमिति भावः।

(१४७) प्रकृतिरिति। स्वामिना राज्ञा त्यक्ता विरहिता प्रकृतिः प्रजा समृद्धापि सर्वैश्वर्यसम्पन्नापि न जीवति न सुखं तिष्ठतीत्यर्थः। अपि प्रश्ने, गतम् आयुः जीवनकालो यस्य तस्मिन् आसन्नमृत्यौ जने धन्वन्तरिः वैद्यः चिकित्सकोऽपि किं करोति? धन्वन्तरिरपि विफलप्रयत्नो भवेदित्यर्थः।

(१४८) नरेशे इति। रवौ उदिते अस्तमिते चेत्यर्थः सरोरुहं

यतः, जनयन्ति सुतान् गावः सर्वानेव गवाकृतीन्।
विषाणोल्लिखितस्कन्धं कश्चिदेव गवाम्पतिम्" ॥१५०॥

विष्णुधर्मेषोक्तम्, "स तावत् (ञ) सत्त्वक्रीतानक्षय-लोकान् (ट) विद्याधरीपरिजनोऽनुभवतु महासत्त्वः।
तथा चोक्तम्,

आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः।
भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥ १५१ ॥

यत्र तत्र हतः शूरः शत्रुभिः परिवेष्टितः।
अक्षयान् लभते लोकान् यदि क्लैव्यं न गच्छति ॥१५२॥

---

(१५०) जनयन्तीति। गावः सर्वानेव सकलानेव गवाकृतीन् गोसदृशाकारयुक्तान् सुतान् वत्सान् जनयन्ति उत्पादयन्ति। तेषु मध्ये इति भावः विषाणोल्लिखितस्कन्धं विषाणाभ्यां शृङ्गाभ्याम् उल्लिखितः अतः सृष्ट इति यावत् स्कन्धः अंसो यस्य स तं तादृशं गवां पतिं वृषभं कश्चिदेव बहुषु एकमेवेत्यर्थः जनयन्तीति शेषः।

(ञ) सत्त्वक्रीतान्—शौर्य्योपार्जितान्।

(ट) अक्षयलोकान्—नित्यपदानि।

(१५१) आहवेष्विति। ये शूराः वीराः आहवेषु युद्धेषु स्वाम्यर्थं त्यक्तजीविताः स्वामिराज्यरक्षार्थं मृताः भर्तृभक्ताः प्रभुपरायणाः कृतज्ञाः कृतमुपकारं स्वीकुर्वन्तश्च ते नराः स्वर्गगामिनः। स्वर्गगामोचिताः।

(१५२) यत्रेति। यत्र तत्र यस्मिन् कस्मिन्नपि देशे शत्रुभिः अरिभिः परिवेष्टितः समन्तात् वेष्टितः आवृतः हतः मृतः शूरः वीरपुरुषः अक्षयान् नित्यान् लोकान् लभते यदि क्लैव्यं भीरुत्वं न गच्छति युद्धात् न पराङ्मुखो भवति।

विग्रहः श्रुतो भवद्भिः ।" राजपुत्रैरुक्तम्, "श्रुत्वा सुखिनो भूता वयम् ।" विष्णुशर्माऽब्रवीत्, "अपरमप्येवमस्तु ।
विग्रहः करितुरङ्गपत्तिभिर्नो कदापि भवतां महीभृताम् ।
नीतिमन्त्रपवनैः समाहताः संश्रयन्तु गिरिगह्वरं द्विषः" १५२

इति हितोपदेशे विग्रहो नाम
तृतीयः कथासंग्रहः ।

---

## सन्धिः ।

पुनः कथारम्भकाले राजपुत्रैरुक्तम्" "आर्य ! विग्रहः श्रुतोऽस्माभिः । सन्धिरधुनाभिधीयताम् ।" विष्णुशर्मणो-क्तम्, श्रूयताम्, "सन्धिमपि कथयामि यस्यायमाद्यः श्लोकः ।

---

(१५२) विग्रह इति । महीं बिभ्रतीति महीभृतः तेषां राज्ञां कदापि कस्मिंश्चिदपि काले करितुरङ्गपत्तिभिः हस्त्यश्वरथपादातिभिः चतुरङ्गबलैः नो विग्रहः समरः भवतां भवतु (आत्मनेपदमिच्छन्ति कश्चित् परस्मैपदिन इति आत्मनेपदं) तदा कथं शत्रवो निरसनीयाः इत्याह नीत्या सह मन्त्राः नीतिमन्त्राः त एव पवनास्तैः समाहताः ताड़िताः परिभूता इति यावत् सन्तः द्विषः शत्रवः गिरिगह्वरं पर्वत-गुहां संश्रयन्तु आश्रयन्तु पलायित्वा तत्र तिष्ठन्तु इत्यर्थः ।

इति हितोपदेशे विग्रहो नाम तृतीयः कथासंग्रहः ।

वृत्ते महति संग्रामे राज्ञोर्निहतसेनयोः ।
स्थेयाभ्यां गृध्रचक्राभ्यां वाचा सन्धिः कृतः क्षणात् ॥१॥

राजपुत्रा ऊचुः, "कथमेतत् ?" विष्णुशर्मा कथयति, ततस्तेन राजहंसेनोक्तम्, "केन अस्मद्दुर्गे निक्षिप्तोऽग्निः ? किं वा पारक्येण, (क) अथवा अस्मद्दुर्गवासिना केनचिद् विपक्षप्रयुक्तेन ?" चक्रवाको वदति, "देव ! भवतो निष्कारणबन्धुरसौ मेघवर्णः सपरिवारो नावलोक्यते । तन्मन्ये तस्य (ख) विचेष्टितमिदम् ।" राजा क्षणं विचिन्त्याह, "अस्ति तावदेवं, मम दुर्भाग्यमेतत् ।

तथा चोक्तम्, अपराधः स दैवस्य न पुनर्मन्त्रिणामयम् ।
कार्य्यं सुघटितं यत्नात् दैवयोगाद्विनश्यति ॥२॥

मन्त्री ब्रूते, उक्तमेवैतत्,

---

(१) वृत्त इति । निहता विनष्टा सेना ययोस्तयोः राज्ञोः हिरण्यगर्भचित्रवर्णयोः महति तुमुले संग्रामे युद्धे वृत्ते समारब्धे सति स्थेयाभ्यां विवादनिर्णेतृभ्यां मध्यस्थाभ्यामिति यावत् गृध्रचक्राभ्यां गृध्रचक्रवाकाभ्यां क्षणात् स्वल्पकालेनैव सन्धिः कृतः सम्पादितः ।

(क) पारक्येण—विपक्षपक्षीयेण। (ख) विचेष्टितं—कार्य्यम् ।

(२) अपराध इति । यत्नात् बहुायासेन सुघटितं निश्चितत्वेन साधितप्रायमपि कर्म दैवयोगात् दैवदुर्विपाकवशात् विनश्यति ध्वंसते यत् अयं कार्य्यध्वंसरूपः अपराधः प्रमादः दैवस्य विधेरेव न पुनः मन्त्रिणां कार्य्यसहायानां न कोऽपि दैवस्य द्वाराणि पिधातुं शक्नोति इति भावः ।

विषमां हि दशां प्राप्य दैवं गर्हयते नरः ।
आत्मनः कर्मदोषांश्च नैव जानात्यपण्डितः ॥ ३ ॥
अपरञ्च, सुहृदां हितकामानां यो वाक्यं नाभिनन्दति ।
स कूर्म इव दुर्बुद्धिः काष्ठाद् भ्रष्टो विनश्यति ॥" ४ ॥

राजाह, "कथमेतत् ?" मन्त्री कथयति "अस्ति मगध-देशे फुल्लोत्पलाभिधानं सरः । तत्र चिरात् सङ्कटविकट-नामानौ हंसौ निवसतः । तयोर्मित्रं कम्बुग्रीवनामा कूर्मः प्रतिवसति । अथैकदा धीवरैरागत्य तत्रोक्तम्, "यदत्र अस्माभिरद्योषित्वा प्रातर्मत्स्यकूर्मादयो व्यापादयि-तव्याः ।" तदाकर्ण्य कूर्मो हंसावाह, "सुहृदौ ! श्रुतोऽयं धीवरालापः ? अधुना किं मया कर्त्तव्यम् ?" हंसावाहतुः, "ज्ञायतां तावत्, पश्चाद् यदुचितं तत्कर्त्तव्यम् ।" कूर्मो ब्रूते, "मैवम् । यतो (ग) दृष्टव्यतिकरोऽहमत्र ।

---

(३) विषमामिति । अपण्डितः मूढः नरः विषमां क्लेशबहुलां दशाम् अवस्थां प्राप्य दैवं विधिं भाग्यमिति यावत् गर्हयते निन्दति तु किन्तु आत्मनः स्वस्य कर्मदोषान् स्वकार्य्यकृतप्रमादान् नैव जानाति बुध्यते स्वीकरोतीत्यर्थः ।

(४) सुहृदामिति । यः हितकामानां हितैषिणां सुहृदां बन्धूनां वाक्यं वचनं न अभिनन्दति न अनुसरति, स दुर्बुद्धिः काष्ठात् भ्रष्टः पतितः स्खलित इति यावत् कूर्मः कच्छप इव विनश्यति म्रियते ।

(ग) दृष्टव्यतिकरोऽहं—दृष्टः प्रत्यक्षीकृतः व्यतिकरः व्यसनं येन स तथोक्तः अस्मिन् सरसि अनुत्तमस्य वा विपद् घटिता वा मया प्रत्यक्षीकृतेत्यर्थः ।

तथा चोक्तम्, अनागतविधाता च प्रत्युत्पन्नमतिस्तथा ।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति ॥" ५ ॥

तावाहतुः, "कथमेतत् ?" कूर्म्मः कथयति, "पुरा एतस्मिन्नेव सरसि एवंविधेष्वेव धीवरेषु उपस्थितेषु मत्स्यत्रयेणालोचितम् । तत्र अनागतविधाता नाम एको मत्स्यस्तेनोक्तम्, "अहं तावत् जलाशयान्तरं गच्छामि" इत्युक्त्वा स ह्रदान्तरं गतः । अपरेण प्रत्युत्पन्नमतिनाम्ना मत्स्येनाभिहितम्, "भविष्यदर्थे प्रमाणाभावात् (घ) कुत्र मया गन्तव्यम् । तदुत्पन्ने कार्य्ये यथाकार्य्यमनुष्ठेयम् । तथा चोक्तम्,

उत्पन्नामापदं यस्तु समाधत्ते स बुद्धिमान् ।
वणिजो भार्य्यया जारः प्रत्यक्षे निह्नुतो यथा ॥" ६ ॥

यद्भविष्यः पृच्छति, "कथमेतत् ?" प्रत्युत्पन्नमतिः कथ-

---

(५) अनागतेति । अनागतस्य अनुपस्थितस्य विधाता प्रतिविधानकर्त्ता, प्रत्युत्पन्नमतिः प्रत्युत्पन्ना कार्य्यकाले उपस्थिता मतिः बुद्धिर्यस्य सः, तथा यत् भविष्यति तत् भविष्यत्येवेति ज्ञानं यस्य स यद्भविष्यश्चेति त्रयो मत्स्याः एषां प्रथमौ द्वौ सुखं सुखेन एधेते वर्द्धेते तृतीयः विनश्यति ।

(घ) भविष्यदर्थे प्रमाणाभावात्—भविष्यन् भावी योऽर्थस्तस्मिन् प्रमाणे निश्चयाभावात् ।

(६) उत्पन्नामिति । यस्तु उत्पन्नाम् उपस्थिताम् आपदं समाधत्ते प्रतिकरोति स बुद्धिमान् । यथा वणिजः कस्यचित् वैश्यस्य व्यवसायिनः इति यावत् भार्य्यया स्त्रिया प्रत्यक्षे चक्षुर्गोचरे एव जारः उपपतिः निह्नुतः निगूहितः आच्छादित इति यावत् ।

यति, "अस्ति विक्रमपुरे समुद्रदत्तो नाम वणिक्। तस्य रत्नप्रभा नाम्नी वधूः केनापि स्वसेवकेन समं सर्वदा रमते। यतः, न स्त्रीणामप्रियः कश्चित् प्रियो वापि न विद्यते।

गावस्तृणमिवारण्ये प्रार्थयन्ते नवं नवम्॥ ७॥

अथैकदा सा रत्नप्रभा तस्य सेवकस्य मुखे चुम्बनं ददती समुद्रदत्तेनालोकिता। ततः सा (ङ) बन्धकी सत्वरं भर्त्तुः समीपमुपगम्याह, "नाथ! एतस्य सेवकस्य महती निर्वृतिः (च)। यतो युष्मदर्थं नीयमानं कर्पूरमश्नाति, (छ) कर्पूरगन्धः प्रत्यक्षोऽस्य मुखे मया घ्रातः। तथा चोक्तम्,

आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा।

षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः॥" ८।

तदाकर्ण्य सेवकेनाप्युपक्रुश्य (ज) उक्तम्, "यस्य गृहे ईदृशी गृहिणी, तत्र सेवकेन कथं स्थातव्यम्? यत्र च प्रतिक्षणं गृहिणी सेवकस्य मुखं जिघ्रति।" ततोऽसावुत्थाय चलितः।

---

(७) नेति। स्त्रीणाम् अप्रियः अनभिमतः कश्चित् न नास्ति। प्रियः अनुरागभाजनञ्च न विद्यते। गावः अरण्ये वने तृणमिव शष्पमिव नवं नवं पुरुषं प्रार्थयन्ते वाञ्छन्ति।

(ङ) बन्धकी—कुलटा। (च) निर्वृतिः—सुखाभिलाषः।

(छ) अश्नाति—भक्षयति।

(८) आहार इति। स्त्रीणाम् अबलानाम् आहारः भोजनं द्विगुणः, तासां बुद्धिः चतुर्गुणा सर्वत्र पुरुषापेक्षयेति शेषः, व्यवसायः चेष्टा षड्गुणः, कामः रमणेच्छा च अष्टगुणः स्मृतः पण्डितैः उक्तः।

(ज) उपक्रुश्य—क्रोधं दर्शयित्वा।

ततोऽसौ साधुना यत्नात् सम्बोध्य धृतः। अतोऽहं ब्रवीमि। उत्पन्नामापदमित्यादि"। ततो यद्भविष्येणोक्तम्,

"यदभावि न तद् भावि भावि चेन्न तदन्यथा।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते?" ॥ ९ ॥

ततः प्रातर्जालेन बद्धः प्रत्युत्पन्नमतिर्मृतवदात्मानं सन्दर्श्य स्थितः। ततो जालादपसारितः स्थलादुत्प्लुत्य गभीरं नीरं प्रविष्टः। यद्भविष्यश्च धीवरैः प्राप्तो व्यापादितः। अतोऽहं ब्रवीमि। अनागतविधातेत्यादि।" तद् यथाहमन्यह्रदं प्राप्नोमि, तदद्य विधीयताम्।" हंसावाहतुः, "जलाशयान्तरे प्राप्ते तव कुशलं, स्थले गच्छतस्ते को विधिः (झ)।" कूर्मो ब्रूते, "यथाहं भवद्भ्यां सह आकाशवर्त्मना (ञ) यामि स उपायो विधीयताम्।" हंसौ ब्रूतः, "कथमुपायः सम्भवति।" कच्छपो वदति, "युवाभ्यां चञ्चुधृतं काष्ठमेकं मया मुखेनावलम्बितव्यम्। अतो भवतोः पक्षबलेन (ट) मयापि सुखेन गन्तव्यम्।" हंसौ ब्रूतः, "सम्भवत्येष उपायः, अस्त्वेवम्।

---

(९) यदिति। यत् अभावि अभावनीयं तत् न भावि न भविष्यति। भावि चेत् अवश्यं भविष्यच्चेत् तदन्यथा तद्विपरीतं न भविष्यतीत्यर्थः। इति चिन्ताविषघ्नः चिन्ताजनित-दुःखरूप-क्लेशनाशकः अगदः नास्ति गदो रोगः यस्मात् सः औषधं किं कथं न पीयते न सेव्यते। एवं निश्चित्य चिन्ता निवारणीयेति भावः।

(झ) को विधिः—का गतिः, कः उपायः।

(ञ) आकाशवर्त्मना—शून्यमार्गेण।

(ट) पक्षबलेन—पक्षसाहाय्येन।

किन्तु, उपायं चिन्तयन् प्राज्ञस्त्वपायमपि चिन्तयेत्।
पश्यतो वकमूर्खस्य नकुलैर्भक्षिताः सुताः ॥" १० ॥

कूर्मः पृच्छति, "कथमेतत्?" हंसौ कथयतः, "अस्त्युत्तरापथे गृध्रकूटो नाम पर्वतः। तत्रैव रेवातीरे न्यग्रोधपादपे वका निवसन्ति। तस्य वटस्याधस्ताद् विवरे सर्पस्तिष्ठति। स च वकानां बालापत्यानि खादति। ततः शोकार्त्तानां वकानां प्रलापं श्रुत्वा केनचिद् वृद्धवकेनोक्तम्, "भो! एवं कुरुथ यूयम्। मत्स्यानानीय नकुलविवरादारभ्य सर्पविवरं यावत् पङ्क्तिक्रमेण एकैकशो मत्स्यान् विकीर्य्य धरिष्यथ। ततस्तदाहारवर्त्मना नकुलेनागत्य द्रष्टव्यः स्वभावद्वेषात् व्यापादयितव्यः सर्पः।" तथानुष्ठिते सति तद् वृत्तम्। अथ नकुलैर्वृक्षोपरि पक्षिशावकानां रावः श्रुतः। पश्चात् तेन नकुलेन वकशावकाः खादिताः। अत आवां ब्रूवः, उपायं चिन्तयन्नित्यादि। आवाभ्यां नीयमानं त्वां दृष्ट्वा लोकैः किञ्चिद् वक्तव्यमेव। तदाकर्ण्य यदि त्वमुत्तरं ददासि तदा तव मरणं भविष्यति। तत् सर्वथा अत्रैव स्थीयताम्।" कूर्मो वदति, "तत् किमहमप्राज्ञः? न किमपि मया वक्तव्यम्।" तत एवमनुष्ठिते सति आकाशे नीयमानं तं कूर्ममालोक्य सर्वे गोरक्षकाः पश्चाद् धावन्ति

---

(१०) उपायमिति। प्राज्ञः बुद्धिमान् जनः उपायं चिन्तयन् उद्भावयन् अपायं विपदमपि चिन्तयेत् आशङ्केत। नकुलैः वकमूर्खस्य मूर्खस्य वकस्य पश्यतः प्रत्यक्षमवलोकयतः पश्यन्तं वकम् अनादृत्येत्यर्थः (षष्ठी चानादरे इति षष्ठी) सुताः भक्षिताः खादिताः।

वदन्ति च, “अहो महदाश्चर्य्यं पक्षिभ्यां कूर्म्मः समुह्यते ।” तत्र कश्चिदाह, “यद्ययं कूर्म्मः पतति, तदा अत्रैव पक्त्वा खादितव्यः ।” कोऽपि (ठ) निगदति, “गृहं नेतव्यः ।” कश्चिद् वदति, “सरसःसमीपे पक्त्वा भक्षितव्यः ।” तत् (ड) परुषवचनमाकर्ण्य क्रोधाद् (ढ) विस्मृतसंस्कारोऽवदत्, “युष्माभिर्भस्म भक्षितव्यम्” इति वदन्नेव काष्ठात् पतितो (ण) गोरक्षकैर्व्यापादितः । अतोऽहं ब्रवीमि, सुहृदां हितकामानामित्यादि ।” अथ प्रणिधिर्बकस्तत्रागत्योवाच, “देव ! प्रागेव मया निवेदितम्, “दुर्गशोधनं प्रतिक्षणं कर्त्तव्यमिति । तच्च युष्माभिर्न कृतम् । अतस्तदनवधानस्य फलमिदमनुभूतम् । दुर्गदाहश्चायं मेघवर्णनाम्ना वायसेन गृध्रप्रयुक्तेन कृतः ।” राजा निःश्वस्याह,

”प्रणयादुपकाराद्वा यो विश्वसिति शत्रुषु ।
स सुप्त इव वृक्षाग्रात् पतितः प्रतिबुध्यते ॥” ११ ॥

अथ प्रणिधिरुवाच, “इतो दुर्गदाहं विधाय यदागतो मेघवर्णस्तदा चित्रवर्णेन (त) प्रसादितेनोक्तम्, अयं मेघवर्णोऽत्र कर्पूरद्वीपराज्येऽभिषिच्यताम् ।

---

(ठ) निगदति—वदति । (ड) परुषवचनं—कर्कशवाक्यम् ।

(ढ) विस्मृतसंस्कारः—विस्मृतः संस्कारः न मया किञ्चिद्वक्तव्यमिति निश्चयो येन स तथोक्तः । (ण) गोरक्षकैः—गोपालैः ।

(११) प्रणयादिति । प्रणयात् सौहार्दात् उपकारात् उपकारकरणाद्वा यः शत्रुषु विश्वसिति प्रत्येति स सुप्तः सन् वृक्षाग्रात् पतित इव प्रतिबुध्यते चैतन्यं लभते विपदि पतित्वा तं जानातीत्यर्थः ।

(त) प्रसादितेन—पुरस्कृतेन ।

तथा चोक्तम्, कृतकृत्यस्य भृत्यस्य कृतं नैवं प्रणाशयेत् ।
फलेन मनसा वाचा दृष्ट्या चैनं प्रहर्षयेत् ॥१२॥

चक्रवाको ब्रूते, "देव ! श्रुतं यत् प्रणिधिः कथयति ।" राजा "ततस्ततः ।" प्रणिधिरुवाच, "ततः प्रधानमन्त्रिणा गृध्रेणोक्तम्, "देव ! नेदमुचितम् । (ख)प्रसादान्तरं किमपि क्रियताम् ।

यतः, अधिकारेण यो युक्तः कथं तस्यास्ति खण्डनम् ।
नीचेषूपकृतं राजन् ! बालुकास्विव मुद्रितम् ॥१३॥

महतामास्पदे नीचः कदापि न कर्त्तव्यः ।

तथा चोक्तम्, नीचः श्लाघ्यपदं प्राप्य स्वामिनं हन्तुमिच्छति ।
मूषिको व्याघ्रतां प्राप्य मुनिं हन्तुं गतो यथा ॥"१४

---

(१२) कृतेति । कृतं सम्पादितं कृत्यं स्वीकर्त्तव्यं येन तस्य भृत्यस्य अनुजीविनः कृतं साधितं कर्म नैव प्रणाशयेत् असन्तोषप्रकाशेन नैव विफलीकुर्य्यात् । प्रत्युत फलेन पुरस्कारादिप्रदानेन मनसा हृष्टतसन्तोष-भावप्रकटनेन वाचा वाक्येन दृष्ट्या प्रसन्नावलोकनेन च एनं भृत्यं प्रहर्षयेत् सन्तोषयेत् ।

(ख) प्रसादान्तरं—पुरस्कारान्तरम् ।

(१३) अधिकारेणेति । यः जनः अधिकारेण शासनादिराज्य-कर्मणा युक्तः यस्मिन् कार्य्यभारोऽस्तीत्यर्थः, तस्य जनस्य कथं केन प्रकारेण खण्डनम् आशाभङ्गः पदच्युतिरिति यावत् अस्ति ? न सम्भ-वतीत्यर्थः । किन्तु हे राजन् ! नीचेषु क्षुद्रचित्तेषु विषये उपकृतम् उप-कारः बालुकासु सिकतासु मुद्रितम् अङ्कितमिव क्षणेनैव विलुप्यतीत्यर्थः ।

(१४) नीच इति । नीचो जनः क्षुद्रो जनः श्लाघ्यपदम् उच्चैः पदवीं प्राप्य लब्ध्वा स्वामिनं लोप्तुं हन्तुम् इच्छति काङ्क्षति । यथा येन प्रका-

चित्रवर्णः पृच्छति, "कथमेतत्?" गृध्रः कथयति, "अस्ति गौतमारण्ये महातपा नाम मुनिः। तेन आश्रमसन्निधाने मूषिकशावकः काकमुखाद् भ्रष्टो दृष्टः। ततो दयायुक्तेन तेन मुनिना नीवारकणैः (द) संवर्द्धितः। तं च मूषिकं खादितुमनुधावन् विड़ालो मुनिना दृष्टः। पश्चात् तपःप्रभावात् तेन मुनिना मूषिको बलिष्ठो विड़ालः कृतः। स विड़ालः कुक्कुराद् बिभेति। ततोऽसौ कुक्कुरः कृतः। कुक्कुरस्य व्याघ्रान्महद्भयम्। तदनन्तरं स व्याघ्रः कृतः। अथ व्याघ्रमपि तं मूषिकनिर्विशेषं पश्यति मुनिः। अतः सर्वे तत्रस्था जनास्तं व्याघ्रं दृष्ट्वा वदन्ति अनेन मुनिना मूषिकोऽयं व्याघ्रतां नीतः। एतत् श्रुत्वा स व्याघ्रः (ध) सव्यथोऽचिन्तयत्। "यावदनेन मुनिना जीवितव्यं, तावदिदं मम (न) स्वरूपाख्यानमकीर्त्तिकरं (प) न पलायिष्यते (फ)।" इति समालोच्य मुनिं हन्तुं समुद्यतः। मुनिस्तस्य चिकीर्षितं (ब) ज्ञात्वा "पुनर्मूषिको भव इत्युक्त्वा मूषिक एव कृतः, अतोऽहं ब्रवीमि। नीचः

---

रेण मूषिकः कश्चित् क्षुद्रः इन्दुरः व्याघ्रतां व्याघ्रत्वं प्राप्य मुनिं हन्तुं गतः उद्यतः आसीदिति शेषः।

(द) नीवारकणैः—शालिचूर्णैः।

(ध) सव्यथः—दुःखितान्तःकरणः।

(न) स्वरूपाख्यानं—मूषिकोऽयमिति वृत्तान्तः।

(प) अकीर्त्तिकरम्—अयशस्करम्। (फ) पलायिष्यते—न विलुप्यति।

(ब) चिकीर्षितम्—अभिप्रायम्।

श्लाघ्यपदं प्राप्येत्यादि। अपरं च देव! सुकरमिदमिति न मन्तव्यम्। शृणु,

भक्षयित्वा बहून् मत्स्यानुत्तमाधममध्यमान्।
अतिलौल्याद् बको मूर्खो मृतः कर्कटसङ्ग्रहात्॥ १५॥

चित्रवर्णः पृच्छति, "कथमेतत्?" मन्त्री कथयति, "अस्ति मालवविषये पद्मगर्भाभिधानं सरः। तत्रैको वृद्धबकः सामर्थ्यहीनस्तथोद्विग्नमिवात्मानं दर्शयित्वा स्थितः। स च केनचित् कुलीरेण दूरादेव दृष्टः। किमिति भवान् अत्र आहारपरित्यागेन तिष्ठति। बकेनोक्तम्, "मत्स्या मम जीवनहेतवः। मत्स्यास्तावत्रावश्यमेव कैवर्त्तैर्व्यापादयितव्या इति नगरोपान्ते कैवर्त्तालाप (भ) आकर्णितः। तदितो वर्त्तनाभावादस्मन्मरणमुपस्थितमिति ज्ञात्वा आहारस्यापि निरादरः (म) कृतः। ततः सर्वैर्मत्स्यैरालोचितम्। इह समये तावदुपकारक एवायमुपलक्ष्यतेऽस्माकम्। तदयमेव यथाकर्त्तव्यं पृच्छ्यताम्।

तथा चोक्तम्, उपकर्त्राऽरिणा सन्धिर्न मित्रेणापकारिणा।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः॥ १६॥

---

(१५) भक्षयित्वेति। उत्तमाधममध्यमान् बहून् बहुविधान् मत्स्यान् भक्षयित्वा खादित्वा अतिलौल्यात् अतिलोभात् मूर्खो बकः कर्कटसंग्रहात् कुलीरकं धृत्वा मृतः पञ्चत्वं गतः।

(भ) कैवर्त्तालापः—धीवराणां परस्परकथनम्।

(म) निरादरः—अनादरः।

(१६) उपकर्त्रेति। उपकर्त्रा उपकारकेण अरिणा शत्रुणा

मत्स्या ऊचुः, "भो बक ! अस्माकं कुत्र रक्षणोपायः ?" बको ब्रूते, "अस्ति रक्षणहेतुर्जलाशयान्तरम् । तत्राह-मेकैकशो युष्मान् नयामि ।" मत्स्यैरपि भयादुक्तमेवमस्तु । ततोऽसौ दुष्टबकस्तान् मत्स्यानेकैकान् नीत्वा कस्मिंश्चिद्देशे खादित्वा पुनरागत्य वदति । "ते मया जलाशयान्तरे स्थापिताः ।" अनन्तरं कुलीरस्तमुवाच, "भो बक ! मामपि तत्र नय ।" ततो बकोऽप्यपूर्वकुलीरमांसार्थी (य) सादरं तं नीत्वा स्थले धृतवान् । कुलीरोऽपि (र) मत्स्य-कण्टकाकीर्णां भूमिं दृष्ट्वा अचिन्तयत् । "हा ! हतोऽस्मि मन्दभाग्यः । भवतु, इदानीं समयोचितं व्यवहरामि । यतः,

तावद्भयात् तु भेतव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रवर्त्तव्यमभीतवत् ॥ १७ ॥

---

सन्धिः कर्त्तव्य इति शेषः; अपकारिणा मित्रेणापि न कर्त्तव्य इति शेषः । कुतः यतः उपकारापकारौ एतयोः मित्रामित्रयोः लक्ष्यं विशेष्यः लक्षणं विशेषकम् । उपकारेणापकारेण मित्रामित्रे परि-ज्ञायते इत्यर्थः ।

(य) अपूर्वकुलीरमांसार्थी — अपूर्वम् अनास्वादितपूर्वं यत् कुलीर-मांसं तदर्थयते यः स तथोक्तः ।

(र) मत्स्यकण्टकाकीर्णां—मत्स्यास्थिसङ्कुलाम् ।

(ल) समयोचितं—यथोपस्थितम् ।

(१७) तावदिति । यावत् यावत्कालं भयं भयकारणम् अना-गतम् अनुपस्थितं तावत् भयात् भेतव्यं, तु किन्तु भयम् आगतम् उपस्थितं दृष्ट्वा अभीतवत् निर्भीक इव प्रवर्त्तव्यम् आचरितव्यम् ।

अपरञ्च, अभियुक्तो यदा पश्येन्न किञ्चिद्धितमात्मनः ।
 युध्यमानस्तदा प्राज्ञो म्रियते रिपुणा सह ॥" १८ ॥

इत्यालोच्य स कुलीरस्तस्य बकस्य ग्रीवां चिच्छेद । अथ स बकः पञ्चत्वं गतः । अतोऽहं ब्रवीमि । भक्षयित्वा बहून् मत्स्यानित्यादि " ततः पुनरपि राजा चित्रवर्णोऽब्रवीत्, "शृणु तावदमात्य! मयैतदालोचितम् । तदत्रावस्थितेनानेन मेघवर्णेन राज्ञा यावन्ति कर्पूरद्वीपस्योत्तमवस्तूनि तावन्त्यस्माकमुपनेतव्यानि (ब) । तेन महता विलासेनास्माभिर्विन्ध्याचले स्थातव्यम् ।" दूरदर्शी विहस्याह, "देव !

 अनागतवतीं चिन्तां कृत्वा यस्तु प्रहृष्यति ।
 स तिरस्कारमाप्नोति भग्नभाण्डो द्विजो यथा ॥ १९॥

राजाह कथमेतत् ? दूरदर्शी कथयति । "अस्ति देवकोट्टनगरे देवशर्मा नाम ब्राह्मणः । तेन (भ)विषुवत्सं

---

(१८) अभियुक्त इति । प्राज्ञः पण्डितो जनः यदा यस्मिन् काले अभियुक्तः आक्रान्तः आत्मनः स्वस्य हितं न पश्येत् तदा रिपुणा शत्रुणा सह युध्यमानः सन् म्रियेत प्राणांस्त्यजेत् ।

(ब) उपनेतव्यानि—उपहर्त्तव्यानि ।

(१९) अनागतवतीमिति । यस्तु जनः अनागतवतीं भविष्यत्सुख-विषयिणीं चिन्तां कृत्वा प्रहृष्यति सन्तुष्यति आशामात्रमवलम्ब्य आत्मानं निश्चिन्तं मन्येत सः भग्नभाण्डः भग्नमृत्पात्रः द्विजो यथा विप्र इव तिरस्कारं विषादम् आप्नोति लभते ।

(भ) विषुवत्संक्रान्तौ—चैत्रसंक्रान्त्याम् ।

क्रान्तो सक्तुपूर्णशरावः प्राप्तः । ततस्तमादायासौ (प)भाण्ड-
पूर्णकुम्भकारमण्डपिकायां रौद्रेणाकुलितः सुप्तः । ततः
सक्तुरक्षार्थं हस्ते दण्डमादायाचिन्तयत् । "यद्यहमिमं
सक्तुशरावं विक्रीय दश कपर्दकान् प्राप्नोमि, तदा तैरिह
समये कपर्दकैर्घटशरावादिकमुपक्रीय अनेकधा (ब) वृद्धै-
स्तैर्धनैः पुनः पुनः पूगवस्त्रादिकमुपक्रीय विक्रीय वाणिज्यं
कृत्वा लक्षसङ्ख्याकधनानि उत्पाद्य विवाहचतुष्टयं करोमि ।
ततस्तासु पत्नीषु या रूपयौवनवती तस्यामधिकानुरागं
करोमि । तदनन्तरं (ह) सञ्जातेर्ष्यास्ताः सपत्न्यः अन्यो-
ऽन्यं यदा (च) द्वन्द्वं करिष्यन्ति तदाऽहं (क) कोपाकुलः
सर्वाः सपत्नीर्लगुडेन ताडयिष्यामि ।" इत्यभिधाय तेन
लगुडः प्रक्षिप्तः सक्तुशरावश्चूर्णितो भाण्डानि च भग्नानि ।
ततो भग्नभाण्डश्रवणादागत्य कुम्भकारेण गले हस्तं
दत्त्वा मण्डपिकाद्बहिःकृतः । अतोऽहं ब्रवीमि, 'अनागत-
वतीं चिन्तामित्यादि ।" ततो राजा रहसि गृध्रं मन्त्रिणं
पप्रच्छ । "तात ! यथा कर्त्तव्यं तथोपदिश ।" गृध्रो वदति,

"मदोद्धतस्य नृपतेः प्रकीर्णस्येव दन्तिनः ।
गच्छन्त्युन्मार्गगा तस्य नेतारः खलु वाच्यताम् ॥ २० ॥

---

(प) भाण्डपूर्णकुम्भकारमण्डलिकायां—मृत्पात्र पूर्ण कुम्भकार गृहे ।

(ब) वृद्धैः—वृद्धिं प्राप्तैः ।

(ह) सञ्जातेर्ष्याः—सञ्जाता उत्पन्ना ईर्ष्या विद्वेषभावः यासां ताः ।

(च) द्वन्द्वं—कलहम् । (क) कोपाकुलः—क्रोधाभिभूतः ।

(२०) मदोद्धतस्येति । प्रकीर्णस्य मदस्राविणः मदमत्तस्येत्यर्थः ।

शृणु तावद् देव! किमस्माभिर्बलदर्पात् (ख) दुर्गं भग्नं? नो वा भवतः (ग) प्रतापाधिष्ठितेनोपायेन?" राजाह, "भवतामुपायेन" गृध्रो ब्रूते, "यद्यस्मद्वचनं क्रियते तदा स्वदेशे गम्यताम्। अन्यथासन्ने (घ) वर्षाकाले (ङ) तुल्यबलेन सह पुनर्विग्रहे सत्यस्माकं परभूनिष्ठानां (च) स्वदेशगमनमपि दुर्लभं भविष्यति। (छ) सुखशोभार्थं सन्धाय गम्यताम्। दुर्गं भग्नं, कीर्त्तिश्च लब्धैव। मम सम्मतं तावदेतत्।

यतः, यो हि धर्मं पुरस्कृत्य हित्वा भर्त्तुः प्रियाप्रियम्।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥२१॥

---

दन्तिनः हस्तिन इव मदोद्धतस्य मदगर्वितस्य तस्य नृपतेः राज्ञः नेतारः नायकाः एकत्र हस्तिपकाः अन्यत्र मन्त्रिणः खलु निश्चितम् उन्मार्गगाः कुनीतिमार्गप्रस्थिताः सन्त अन्यत्र विपथगामिन इत्यर्थः। वाच्यतां निन्द्यतां गच्छन्ति प्राप्नुवन्ति निन्दनीया भवन्तीति शेषः।

(ख) बलदर्पात्—सामर्थ्यमात्रमवलम्ब्य।

(ग) प्रतापाधिष्ठितेन—प्रभावातिशय रूपेणोपायेन।

(घ) आसन्ने—उपस्थिते।

(ङ) तुल्यबलेन—समसामर्थ्येन प्रतिद्वन्द्विनेति यावत्।

(च) परभूनिष्ठानाम्—अपर राज्यस्थितानाम्।

(छ) सुखशोभार्थं—सुखं मनः शान्तिः शोभा राज्यस्य निरुपद्रवजनितं गौरवं ते अर्थः प्रयोजनं यस्मिन् तत्।

(२१) य इति। यो मन्त्री भर्त्तुःस्वामिनः प्रियाप्रियम् अभिमतानभिमतं हित्वा त्यक्त्वा भर्त्रा कृतमनुचितमादेशमुपेक्ष्येत्यर्थः धर्मं पुरस्कृत्य कर्त्तव्यानुष्ठानरूपं धर्मं अनुसृत्य अप्रियाणि अमनोहराण्यपि पथ्यानि हितानि आह उपदिशति तेन तादृशेन मन्त्रिणा राजा

अपरञ्च, सन्धिमिच्छेत् समेनापि सन्दिग्धो विजयो युधि ।
न हि संशयितं कुर्य्यात् इत्युवाच बृहस्पतिः ॥ २२ ॥
अन्यच्च, सुहृद्बलं तथा राज्यमात्मानं कीर्त्तिमेव च ।
युधि सन्देहदोलस्थं को हि कुर्य्यादबालिशः ॥ २३ ॥
परन्तु, युद्धे विनाशो भवति कदाचिदुभयोरपि ।
सुन्दोपसुन्दावन्योऽन्यं समवीर्य्यौ हतौ न किम् ?" ॥२४
राजोवाच, "कथमेतत् ?" मन्त्री कथयति, पुरा दैत्यौ सहोदरौ सुन्दोपसुन्दनामानौ महता कायक्लेशेन (ज) त्रैलोक्यराज्यकामनया चिरात् (झ) चन्द्रशेखरमारा-

---

सहायवान् स एव प्रकृतः कार्य्यसहायः । हितं मनोहारि च दुर्लभं यच्च इति भावः ।

(२२) सन्धिमिति । समेनापि तुल्यबलेनापि किमुताधिकबलेनेति भावः । सन्धिं मिलनं कुर्य्यात् । कुतः यतः युधि युद्धे विजयः सन्दिग्धः संशयारूढ़ः अनिश्चित इति यावत् । संशयितं संशयारूढ़ं कार्य्यं नहि कुर्य्यात् इति बृहस्पतिः नीतिशास्त्रज्ञत् देवगुरुः उवाच उपदिदेश ।

(२३) सुहृदिति । सुहृत् मित्रं तेन बलं सैन्यं तथा राज्यम् आत्मानं स्वजीवनं कीर्त्तिं यशः कोहि अबालिशः अमूर्खः पण्डित इति यावत् युधि युद्धे सन्देहदोलस्थं संशयदोलायमानं कुर्य्यात् न कोऽपीत्यर्थः ।

(२४) युद्ध इति । कदाचित् युद्धे समरे उभयोरपि युध्यमानयो-र्द्वयोरपि विनाशः जीवनत्यागः भवति । समं तुल्यं वीर्य्यं पराक्रमः ययोस्तौ समकक्षौ सुन्दोपसुन्दौ तदाख्यौ द्वावसुरौ किं न हतौ विना-शितौ किम् ? ।

(ज) त्रैलोक्यराज्य कामनया—त्रिभुवनाधिपत्यलाभेच्छया ।

(झ) चन्द्रशेखरं—चन्द्रमौलिं शिवम् ।

धितवन्तौ। ततस्तयोर्भगवान् परितुष्टः सन् "वरं वरयतम्" इत्युवाच। अनन्तरं तयोः (ञ) समधिष्ठितया सरस्वत्या तावन्यद्वक्तुकामावन्यदभिहितौ। "यद्यावयोर्भगवान् परितुष्टस्तदा स्वप्रियां पार्वतीं परमेश्वरो ददातु।"। अथ भगवता क्रुद्धेन वरदानस्यावश्यकतया (ट) मूढतया च पार्वती प्रदत्ता। ततस्तस्या (ठ) रूपलावण्यलुब्धाभ्यां (ड) जगद्घातिभ्यां मनसोत्सुकाभ्यां (ढ) पापतिमिराभ्यां ममेत्यन्योऽन्यकलहाभ्यां (ण) "प्रमाणपुरुषः कश्चित् पृच्छ्यतामिति।" (त) मतौ (थ) कृतायां स (द) भट्टारको वृद्धद्विजरूपी समागत्य तत्रोपस्थितः। अनन्तरम् "आवाभ्यामियं स्वबललब्धा कस्येयमावयोर्भवति" इति ब्राह्मणमपृच्छताम्। ब्राह्मणो ब्रूते,

"ज्ञानश्रेष्ठो द्विजः पूज्यः क्षत्रियो बलवानपि।
धनधान्याधिको वैश्यः शूद्रस्तु द्विजसेवया॥ २५॥

---

(ञ) समधिष्ठितया—आविष्टया। (ट) मूढतया—कोपाभिभूततया।

(ठ) रूपलावण्यलुब्धाभ्यां—रूपलावण्यजनिताभ्याम्।

(ड) जगद्घातिभ्यां—जगद् विनाशकाभ्याम्।

(ढ) उत्सुकाभ्याम्—उत्कटेच्छाधीनाभ्याम्।

(ण) प्रमाण पुरुषः—मध्यस्थः विवादनिर्णायक इति यावत्।

(त) मतौ—मध्यस्थाभिप्राये। (थ) कृतायां—निश्चितायाम्।

(द) भट्टारकः—प्रभुः महेश्वरः।

(२५) ज्ञान श्रेष्ठ इति। द्विजः ज्ञानेन विद्यया श्रेष्ठः प्रधानः सन् पूज्यः पूजनीयः बलवान् विक्रान्तः क्षत्रियोऽपि सर्वत्र पूज्य इत्यनेनान्वयः। धनधान्याधिकः धनेन सम्पदा धान्येन पण्यद्रव्येण च अधिकः समृद्धः वैश्यः द्विजसेवया विप्रशुश्रूषया शूद्रः।

तयोर्यां सन्धिविग्रहधर्मोणो युद्ध एव युद्धयोर्नियमः।" (ध) इत्यभिहिते सति साधूक्तमनेनेति ज्ञात्वा पश्योऽन्यतुल्यवीर्यौ समकालेऽन्योन्यघातेन विनाशमुपगतौ। अतोऽहं ब्रवीमि सन्धिमिच्छेत समेनापीत्यादि।" राजाह, "तत् किं प्रागेव नेदमुपदिष्टम्।" मन्त्री वदति, "तदा किं मम वचनमवसानपर्यन्तं (न) श्रुतं भवद्भिः? । तदापि मम सम्मत्या नायं विग्रहारम्भः। यतः (प) सन्धेयगुणयुक्तोऽयं हिरण्यगर्भो न विग्राह्यः। तथा चोक्तम्,

सत्यार्य्यौ धार्मिकोऽनार्य्यो भ्रातृसङ्घातवान् बली।
अनेकयुद्धविजयी सन्धेयाः सप्त कीर्त्तिताः॥ २६॥
सत्योऽनुपालयन् सत्यं सन्धितो नैति विक्रियाम्।
प्राणबाधेऽपि सुव्यक्तमार्य्यो नायात्यनार्य्यताम्॥ २७॥

---

(ध) नियमः—निश्चायकः।

(न) अवसान पर्य्यन्तं—परिसमाप्ति पर्य्यन्तम्।

(प) सन्धेयगुणयुक्तः—सत्यार्य्यादि गुणसम्पन्नः। सर्वथा सन्धिस्थापन योग्यः।

(२६) सत्येति। सत्यः सत्यपरायणः आर्य्यः सदाचारः धार्मिकः धर्मपरायणः अनार्य्यः असदाचारः दुष्टप्रकृतिरिति यावत्। भ्रातृसङ्घातवान् सौभ्रात्रेण मिलितः बली प्रभूतबलवीर्य्यसम्पन्नः। अनेकेषु बहुषु युद्धेषु विजयते यः स तथोक्तः बहुषु समरेषु प्राप्तजयः। एते सप्त सन्धेयाः सन्धिस्थापनयोग्याः कीर्त्तिताः कथिताः।

(२७) सत्य इति। सत्यः सत्यपरायणः सत्यं अनुपालयन् अनुसरन् सन्धितः कृतसन्धिः सन् अथवा सन्धितः सन्धिमुपलभ्य (ल्यबर्थे पञ्चमी तस्मात्सन्) न विक्रियां कृतस्यान्यथा नैति न याति न वैपरीत्य-

धार्म्मिकस्याभियुक्तस्य सर्व्व एव हि युध्यते ।
प्रजानुरागाद्धर्म्माच्च दुःखच्छेद्यो हि धार्म्मिकः ॥ २८ ॥
सन्धिः कार्य्योऽप्यनार्य्येण विनाशे समुपस्थिते ।
विना तस्याश्रयेणार्य्यः कुर्य्यान्न कालयापनम् ॥ २९ ॥
संहतत्वाद्यथा वेणुर्निविडः कण्टकैर्वृतः ।
न शक्यते समुच्छेत्तुं भ्रातृसङ्घातवांस्तथा ॥ ३० ॥
बलिना सह योद्धव्यमिति नास्ति निदर्शनम् ।
प्रतिवातं न हि घनः कदाचिदुपसर्पति ॥ ३१ ॥

---

आचरति । आर्य्यः श्रेष्ठाचारः प्राणबाधेऽपि प्राणनाशेऽपि सुव्यक्तं स्फुटम् अनार्य्यतां नीचाशयतां न आयाति न गच्छति ।

(२८) धार्म्मिकस्येति । अभियुक्तस्य शत्रुभिरुपद्रुतस्य धार्म्मिकस्य सर्व्व एव युध्यते युक्तः अनुकूलो भवतीत्यर्थः । धार्म्मिको राजा प्रजानां अनुरागात् स्वामिनि भक्त्या धर्म्मात् प्रजानुरञ्जनरूपात् सदनुष्ठानात् च दुःखेन च्छिद्यते न स तथोक्तः दुर्जयः भवतीति शेषः ।

(२९) सन्धिरिति । विनाशे सर्व्वनाशे समुपस्थिते समुत्पन्ने सति अनार्य्येण नीचाशयेनापि सन्धिः कार्य्यः कर्त्तव्यः तस्य दुष्टस्य आश्रयेण अवलम्बनेन विना कालयापनं कालातिपातं न कुर्य्यात् न जीवितं धारयेत् ।

(३०) संहतेति । यथा निविडः घनसन्निविष्टः कण्टकैर्वृत व्याप्तः वेणुर्वंशः संहतत्वात् समुच्छेत्तुं विदारयितुं न शक्यते तथा भ्रातृसङ्घातवान् भ्रातृभिः सह सौभ्रात्रेण मिलितः जनः न समुच्छेत्तुं शक्यते इति शेषः ।

(३१) बलिनेति । बलिना आत्मनोऽधिकबलेन शत्रुणा सह योद्धव्यं विग्रहीतव्यं इति एवं निदर्शनम् उदाहरणम् उपमा नास्ति ।

जमदग्नेः सुतस्येव सर्वः सर्वत्र सर्वदा।
अनेकयुद्धजयिनः प्रतापादेव भुज्यते ॥ ३२ ॥
अनेकयुद्धविजयी सन्धानं यस्य गच्छति।
तत्प्रतापेन तस्याशु वशमायान्ति शत्रवः ॥ ३३ ॥

तदत्र बहुभिर्गुणैरुपेतः (फ) सन्धेयोऽयं राजहंसः। चक्रवाकोऽवदत्, "प्रणिधे! सर्वमवगतम्? व्रज पुनरागमिष्यसि। अथ हिरण्यगर्भश्चक्रवाकं पृष्टवान्। "मन्त्रिन्! असन्धेयाः कति। तान् विज्ञातुमिच्छामि।" मन्त्री ब्रूते, "देव! कथयामि।

शृणु, बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः।
भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा ॥ ३४ ॥

---

घनः मेघः कदाचिदपि प्रतिवातं वायोः प्रतिकूलं नहि उपसर्पति चलति।

(३२) जमदग्नेरिति। जमदग्नेः सुतस्य परशुरामस्य इव अनेकयुद्धविजयिनः बहुषु युद्धेषु लब्धजयस्य राज्ञः प्रतापात् प्रभावात् विक्रमाद्यर्जितमेवेत्यर्थः सर्वः जनः सर्वत्र सर्वस्मिन् स्थाने सर्वदा सर्वकाले च भुज्यते परराज्यं अधिकरोति।

(३३) अनेकेति। अनेकयुद्धविजयी बहुषु युद्धेषु लब्धजयः पुरुषः यस्य राज्ञः सन्धानं मिलनं गच्छति येन सह सन्धिं करोति। तत्प्रतापेन तस्य अनेकयुद्धविजयिनः प्रभावेणैव तस्य कृतसन्धेः राज्ञः शत्रवः आशु शीघ्रं वशं वश्यताम् आयान्ति प्राप्नुवन्ति।

(फ) उपेतः—अन्वितः।

(३४) बाल इति। बालः बालकः वृद्धः प्रवयाः दीर्घरोगी चिररोगी तथा ज्ञातिभिः बहिष्कृतः ताडितः भीरुकः स्वयं भीरुस्वभावः

विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् ।
अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः ॥ २५ ॥
दैवोपहतकश्चैव दैवचिन्तक एव च ।
दुर्भिक्षव्यसनोपेतो बलव्यसनसङ्कुलः ॥ २६ ॥
अदेशस्थो बहुरिपुर्युक्तः कालेन यश्च न ।
सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥ २७ ॥
एतैः सन्धिं न कुर्वीत विगृह्णीयात् तु केवलम् ।
एते विगृह्यमाणा हि क्षिप्रं यान्ति रिपोर्वशम् ॥ २८ ॥

---

भीरुकजनो भीरुकः भीतस्वभावः जनः अमात्यादिर्यस्य सः । लुब्धः स्वयम् अर्थलोलुपः लुब्धजनः लुब्धामात्यादिश्च । अमी असन्धेया इति परेणान्वयः ।

(२५) विरक्तेति । विरक्ताः स्वामिनि विकृतिमापन्नाः प्रकृतयः प्रजाः यस्य सः विषयेषु भोगेषु अतिसक्तिमान् अत्यासक्तः अनेकेषां चित्ते मनसि मन्त्रः मन्त्रणा यस्य सः अगोपितमन्त्रः देवब्राह्मणनिन्दकः देवे ब्राह्मणे च अभक्तः ।

(२६) दैवेति । दैवेन विधिना उपहतकः विफलीकृतसर्वचेष्टः दैवचिन्तकः चेष्टां विना भाग्यपरायणः दुर्भिक्षव्यसनोपेतः दुर्भिक्षरूपविपदा अभिभूतः बलस्य सैन्यस्य व्यसनेन आसक्त्येन पीडादिविपत्त्या च सङ्कुलः व्याकुलः ।

(२७) अदेशेति । अदेशस्थः भिन्नराज्यस्थितः बहुरिपुः अनेकशत्रुः यश्च कालेन युद्धोचित समयेन न युक्तः अप्राप्तावसरः सत्यात् धर्मात् च व्यपेतः च्युतः अमी विंशतिः पुरुषाः ।

(२८) एतैरिति । एतैः ईदृशैः शत्रुभिः सह सन्धिं न कुर्वीत केवलं विगृह्णीयात् युध्येत । एते विगृह्यमाणाः युध्यमानाः सन्तः हि निश्चितं क्षिप्रं शीघ्रं रिपोः शत्रोर्वशं यान्ति गच्छन्ति ।

बालस्याल्पप्रभावत्वान्न लोको योद्धुमिच्छति ।
युद्धायुद्धफलं यस्मात् ज्ञातुं शक्तो न बालिशः ॥ ३९ ॥
उत्साहशक्तिहीनत्वाद् वृद्धो दीर्घामयस्तथा ।
स्वैरेव परिभूयेते द्वावप्येतावसंशयम् ॥ ४० ॥
सुखोच्छेद्यश्च भवति सर्वज्ञातिबहिष्कृतः ।
त एवैनं विनिघ्नन्ति ज्ञातयस्त्वात्मसात्कृताः ॥ ४१ ॥
भीरुर्युद्धपरित्यागात् स्वयमेव प्रणश्यति ।
तथैव भीरुकजनः संग्रामे तैर्विमुच्यते ॥ ४२ ॥
लुब्धस्यासंविभागित्वान्न युध्यन्तेऽनुजीविनः ।
लुब्धानुजीविकैरेष दानहीनैर्निहन्यते ॥ ४३ ॥

---

(३९) बालस्येति । बालस्य बालकस्य अल्पप्रतापत्वात् क्षुद्रप्रभावत्वात् लोकः योद्धुं तेन सह विग्रहीतुं न इच्छति अभिलषति । यस्मात् स बालिशः अनभिज्ञः बालः युद्धायुद्धफलं युद्धकरणाकरणफलं ज्ञातुं विदितुं न शक्तः समर्थः ।

(४०) उत्साहेति । वृद्धः तथा दीर्घामयः चिररोगी जनः एतौ द्वौ उत्साहशक्तिहीनत्वात् वार्द्धक्यजनितदौर्बल्यात् असंशयं निश्चितं स्वैरेव आत्मनैव परिभूयेते पराजीयेते ।

(४१) सुखेति । सर्वज्ञातिबहिष्कृतः ज्ञातिभिः ताडितः रिपुः सुखच्छेद्यः अनायासेनोन्मूलयितुं शक्यः भवति । यतः ते ज्ञातय एव आत्मसात्कृताः अस्य धनादिकं गृहीत्वा एनं विनिघ्नन्ति नाशयन्ति ।

(४२) भीरुरिति । भीरुः भीतस्वभावः युद्धपरित्यागात् युद्धपराङ्मुखत्वात् स्वयमेव प्रणश्यति तथैव तद्वदेव भीरुकजनः तैः सपक्षीयैः जनैः संग्रामे युद्धे विमुच्यते त्यज्यते ।

(४३) लुब्धेति । असंविभागात् अयथायथविभागेन लुब्धस्य

सन्त्यज्यते प्रकृतिभिर्विरक्तप्रकृतिर्युधि ।
सुखाभियोज्यो भवति विषयेष्वतिसक्तिमान् ॥ ४४ ॥
अनेकचित्तमन्त्रस्तु द्वेष्यो भवति मन्त्रिणाम् ।
अनवस्थितचित्तत्वात् कार्य्ये तैः स उपेक्ष्यते ॥ ४५ ॥
सदा धर्म्मबलीयस्त्वाद्देवब्राह्मणनिन्दकः ।
विशीर्य्यते स्वयं ह्येव दैवोपहतकस्तथा ॥ ४६ ॥
सम्पत्तेश्च विपत्तेश्च दैवमेव हि कारणम् ।
इति दैवपरो ध्यायन् नात्मानमपि चेष्टयेत् ॥ ४७ ॥

---

लोभपरवशस्य स्वामिनः अनुजीविनः सैनिकाः न युध्यन्ते युद्धं कुर्वन्ति । लुब्धाः धनलोलुपाः अनुजीविनः तैः दानहीनैः अपुरस्कृतैः सद्भिः एषः स्वामी हन्यते विनाश्यते त्यज्यते इत्यर्थः ।

(४४) सन्त्यज्यत इति । विरक्ताः विकृतिमापन्नाः प्रकृतयः प्रजा यस्य स तथाभूतः प्रकृतिभिः प्रजाभिः संत्यज्यते विहीयते । विषयेषु विषयभोगेषु अतिसक्तिमान् अत्यासक्तः सुखाभियोज्यः सुखेन अनायासेन अभियोज्यः पराभवनीयः भवति ।

(४५) अनेकेति । अनेकचित्तमन्त्रः बहुजनज्ञातमन्त्रः नृपतिः मन्त्रिणां सचिवानां द्वेष्यः विद्वेषभाजनं भवति । अनवस्थितत्वात् अव्यवस्थितचित्तत्वात् कार्य्ये तैः मन्त्रिभिः स राजा उपेक्ष्यते त्यज्यते ।

(४६) सदेति । धर्म्मबलीयस्त्वात् धर्म्मबलात् यतो धर्म्मः ततो जय इति स्थिते इत्यर्थः । देवब्राह्मणनिन्दकः देवविप्राणाम् अवज्ञाकारी अधार्म्मिक इत्यर्थः तथा दैवोपहतकः दैवपरायणश्च राजा स्वयमेव आत्मनैव विशीर्य्यते अवसीदति ।

(४७) सम्पत्तेरिति । सम्पत्तेः सम्पदः विपत्तेः विपदश्च दैवमेव कारणं हेतुः इति ध्यायन् चिन्तयन् दैवपरः दैवमात्रावलम्बी जनः आत्मानम् अपि न चेष्टयेत् न कार्य्येषु नियोजयेत् प्रत्युत अलसो भवति ।

दुर्भिक्षव्यसनी चैव स्वयमेवावसीदति ।
बलव्यसनयुक्तस्य योद्धुं शक्तिर्न जायते ॥ ४८ ॥
अदेशस्थो हि रिपुणा स्वल्पकेनापि हन्यते ।
ग्राहोऽल्पीयानपि जले गजेन्द्रमपि कर्षति ॥ ४९ ॥
बहुशत्रुस्तु सन्त्रस्तः श्येनमध्ये कपोतवत् ।
येनैव गच्छति पथा तेनैवासौ विपद्यते ॥ ५० ॥
अकालसैन्ययुक्तस्तु हन्यते कालयोधिना ।
कौशिकेन हतज्योतिर्निशीथ इव वायसः ॥ ५१ ॥
सत्यधर्मव्यपेतेन न सन्दध्यात् कदाचन ।
स संहितोऽप्यसाधुत्वादचिराद्याति विक्रियाम् ॥ ५२ ॥

---

(४८) दुर्भिक्षेति । दुर्भिक्षव्यसनी दुर्भिक्षपीडितप्रजः स्वयमेव आत्मनैव अवसीदति दुर्बलो भवति । बलव्यसनयुक्तस्य सैन्यव्यसनेन व्यसनिनः योद्धुं शक्तिः सामर्थ्यं न जायते न भवति ।

(४९) अदेशस्थ इति । अदेशस्थः अपरराज्यस्थितः राजा स्वल्पकेनापि क्षुद्रेणापि रिपुणा हन्यते बध्यते । अथ दृष्टान्तमाह । अल्पीयान् क्षुद्रोऽपि जलजन्तुः जले निजस्थाने स्थितः सन् गजेन्द्रमपि मत्तगजमपि कर्षति पराजयते ।

(५०) बह्विति । बहुशत्रुषु बहुसंख्यकेषु शत्रुषु मध्ये संत्रस्तः भीतः जनः श्येनमध्ये कपोतवत् कपोत इव येनैव पथा मार्गेण गच्छति तेनैव पथा असौ संत्रस्तः विपद्यते विपन्नो भवति ।

(५१) अकाल इति । अकाले युद्धस्यानुचितसमये वर्षादौ सैन्यैः सेनाभिः युक्तः अन्वितः कालयोधिना यथोचितकाले युध्यते यः तेन निशीथे अर्द्धरात्रे हतज्योतिः विनष्टदर्शनशक्तिः वायसः काकः कौशिकेन पेचकेनैव हन्यते अनायासेनैव पराभूयते इत्यर्थः ।

(५२) सत्येति । कदाचन कस्मिंश्चिदपि काले सत्यधर्मव्यपेतेन

अपरमपि कथयामि। (ब) सन्धिविग्रहासनयानसंश्रय-द्वैधीभावाः षाड्गुण्यम्। कर्मणामारम्भोपायः, पुरुष-द्रव्यसम्पद्, देशकालविभागो, विनिपातप्रतीकारः, कार्य्य-सिद्धिः, पञ्चाङ्गो मन्त्रः। सामदानभेददण्डाश्चत्वार उपायाः। उत्साहशक्तिर्मन्त्रशक्तिः प्रभुशक्तिरिति शक्ति-त्रयम्। एतत्सर्वमालोच्य नित्यं विजिगीषवो भवन्ति महान्तः।

यतः, या हि प्राणपरित्यागमूल्येनापि न लभ्यते।

सा श्रीर्नीतिविदां वेश्म चञ्चलापि प्रधावति॥ ५३॥

तथा चोक्तम्, वित्तं यदा यस्य समं विभक्तं

गूढश्च चारो निभृतश्च मन्त्रः।

न चाप्रियं प्राणिषु यो ब्रवीति

स सागरान्तां पृथिवीं प्रशास्ति॥ ५४॥

---

सत्यात् धर्माच्च भ्रष्टेन सह न सन्दध्यात् सन्धिं कुर्य्यात् स सत्यधर्महीनः संहितः सन्धिना सैन्यैः मिलितोऽपि असाधुत्वात् पापशीलत्वात् अचिरात् शीघ्रमेव विक्रियां वैपरीत्यं सहायहीनत्वमिति यावत् याति प्राप्नोति।

(ब) सन्धिरिति—सन्धिः मैत्रीभावः विग्रहः युद्धम् आसनं कालापेक्षा, यानं यात्रा संश्रयः आश्रयग्रहणं द्वैधीभावः छलम्।

(५३) येति। या श्रीः लक्ष्मीः प्राणत्यागः जीवनोत्सर्ग एव मूल्यं तेनापि न लभ्यते प्राप्यते सा श्रीः चञ्चलापि स्वभावचपलापि नीतिविदां नीतिशास्त्रानुसारेण कार्य्यं कुर्वतां वेश्म गृहम् उद्दिश्य प्रधावति तत्र स्थिरा तिष्ठतीत्यर्थः।

(५४) वित्तमिति। यस्य राज्ञः यदा यस्मिन् समये वित्तं धनं

किन्तु देव ! यद्यपि महामन्त्रिणा गृध्रेण सन्धानमुपन्यस्तं (भ) तथापि तेन राज्ञा सम्प्रति भूतजयदर्पान्न मन्तव्यम् । तदेवं क्रियताम् । अस्मन्मित्रं सिंहलद्वीपस्य महाबलो नाम सारसो राजा जम्बुद्वीपे कोपं जनयतु । यतः,

सुगुप्तिमाधाय सुसंहतेन बलेन वीरो विचरन्नरातिम् ।
सन्तापयेद्येन समं सुतप्तस्तप्तेन सन्धानमुपैति तप्तः ॥ ५५ ॥

राजाह, "एवमस्तु" इत्युक्त्वा विचित्रो नाम बकः सुगुप्तलेखं (म) दत्त्वा सिंहलद्वीपं प्रस्थापितः । अथ प्रणिधिः पुनरागत्य उक्तवान् "देव ! श्रूयतां तावत् तत्रत्यप्रस्तावः । एवं तत्र गृध्रेणोक्तम् । "देव ! मेघवर्णस्तत्र चिरमुषितः । स वेत्ति किं सन्धेयगुणयुक्तो हिरण्यगर्भो राजा न वेति ।" ततोऽसौ मेघवर्णश्चित्रवर्णेन राज्ञा समाहूय

---

समं तुल्यं विभक्तं यथायथविभागेन अनुजीविभ्यः दत्तं, चारः दूतश्च गूढः गूढभावेन अनुसन्धानः मन्त्रश्च निभृतः गुप्तः नान्यसन्निधौ प्रकाशितः । यश्च प्राणिषु जनेषु अप्रियं परुषं न ब्रवीति कथयति स सागरान्तां ससागरां पृथिवीं शास्ति पालयति स सम्राट् भवतीत्यर्थः ।

(भ) उपन्यस्तं—प्रस्तुतम् ।

(५५) सुगुप्तिमिति । वीरः विक्रान्तो राजा सुगुप्तिं गूढभावं आधाय अवलम्ब्य अतीव रक्षणीत्यर्थः । सुसंहतेन अनुरक्तेन समवेतेन च बलेन अरातिं शत्रुं विचरन् आक्रमन् सन्तापयेत् पीड़येत् येन पीड़नेन समं तुल्यं सुतप्तः अवकम्पितः भवतीति शेषः । कुत इत्याह यतः तप्तः उग्रत्वमापन्नः तप्तेन उत्तेजितेन सह सन्धानं सन्धिम् उपैति लभते । तुल्यबलः अनायासेन सन्धेयो भवतीत्यर्थः ।

(म) सुगुप्तलेखं—गूढपत्रिकाम् ।

पृष्टः । "वायस ! "वायस ! कीदृशोऽसौ हिरण्यगर्भो राजा ? चक्रवाको मन्त्री वा कीदृशः ?" मेघवर्णो ब्रूते, "देव ! स हिरण्यगर्भो राजा युधिष्ठिरसमो महाशयः सत्यवाक् । चक्रवाकसदृशो मन्त्री न क्वाप्यवलोक्यते ?" राजाह, "यद्येवं तदा कथमसौ त्वया वञ्चितः । मेघवर्णो विहस्य ब्रूते,

"देव ! विश्वासप्रतिपन्नानां वञ्चने का विदग्धता ।
अङ्कमारुह्य सुप्तं हि हत्वा किं नाम पौरुषम् ? ॥५६॥

शृणु देव ! "तेन मन्त्रिणाहं प्रथमदर्शन एव विज्ञातः । किन्तु महाशयोऽसौ राजा । तेन मया विप्रलब्धः ।

तथा चोक्तम्,

आत्मौपम्येन यो वेत्ति दुर्जनं सत्यवादिनम् ।
स एव वञ्चितस्तेन ब्राह्मणश्छागतो यथा ॥ ५७ ॥

राजाह, कथमेतत् ? मेघवर्णः कथयति, "अस्ति

---

(५६) विश्वासेति विश्वासप्रतिपन्नानाम् अतीव कृतविश्वासानां वञ्चने प्रतारणायां का विदग्धता नैपुण्यम् । विश्वासघातको हि स्वल्पेनैवोपायेन प्रतारयितुं समर्थ इत्यर्थः । अङ्कं क्रोड़म् आरुह्य आश्रित्य सुप्तं जनम् अतीव विश्वस्तमित्यर्थः हत्वा किं नाम पौरुषं पुरुषकारः न किमपीत्यर्थः ।

(५७) आत्मौपम्येनेति । आत्मनः स्वस्य उपमा एव औपम्यम् आत्मौपम्यं तेन आत्मतुलनया यो जनः दुर्जनं दुष्टप्रकृतिं सत्यवादिनं वेत्ति जानाति स एव जनः छागतः छागात् ब्राह्मणः यथा ब्राह्मण इव तेन जनेन वञ्चितः प्रतारितः भवतीति शेषः ।

गौतमारण्ये (य) प्रस्तुतयज्ञः कश्चिद् ब्राह्मणो ग्रामान्तरं गत्वा छागमुपक्रीय स्कन्धे धृत्वा गच्छन् धूर्त्तत्रयेणावलोकितः। ततस्ते धूर्त्ता "यद्येष छागः केनाप्युपायेन लभ्यते ? तदा मतिप्रकर्षो भवति" इत्यालोच्य प्रान्तरवृक्षत्रयतले तस्य ब्राह्मणस्य वर्त्मनि उपविश्य स्थिताः। तत्रैकेन धूर्त्तेन स ब्राह्मणोऽभिहितः। "भो ब्राह्मण! किमिति त्वया कुक्कुरः स्कन्धे नोह्यते ? विप्रेणोक्तम्। "नायं श्वा, यज्ञ-छागोऽयम्।" अनन्तरं पुनर्द्वितीयेन क्रोशमात्रस्थितेन तदेवोक्तम्। तदाकर्ण्य ब्राह्मणश्छागं भूमौ निधाय मुहुर्मुहुर्निरीक्ष्य पुनः स्कन्धे कृत्वा दोलायमानमतिश्चलितः।

यतः, मतिर्दोलायते नूनं सतामपि खलोक्तिभिः।

ताभिर्विश्वासितो योऽसौ म्रियते चित्रकर्णवत् ॥५८॥

राजा पृच्छति कथमेतत् ? स कथयति, "अस्ति-कस्मिंश्चिद्वनोद्देशे मदोत्कटो नाम सिंहः। तस्यानुचरास्त्रयः। काको व्याघ्रः शृगालश्च। अथ तैर्भ्रमद्भिः सार्थाद्भ्रष्ट उष्ट्रो दृष्टः पृष्टश्च। "कुतो भवानागतः ?" स चात्मवृत्तान्तमकथयत्। ततस्तैर्नीत्वासौ सिंहाय

(य) प्रस्तुतयज्ञ—आरब्धयागः।

(५८) मतिरिति। नूनं निश्चितं सतां साधूनामपि मतिः बुद्धिः खलोक्तिभिः खलवचनैः दोलायते विचलति यः असौ साधुः ताभिः खलोक्तिभिः विश्वासितः खलत्वपि कृतविश्वासः सन् चित्रकर्णवत् चित्रकर्ण इव म्रियते मृत्युं याति।

समर्पितः। तेन चाभयवाचं दत्त्वा चित्रकर्ण इति नाम कृत्वा स्थापितः। एवं काले गच्छति, अथ कदाचित् सिंहस्य शरीरवैकल्यात् भूरिवृष्टिकारणाच्चाहारमलभमानास्ते व्यग्रा बभूवुः। ततः काकव्याघ्रगोमायुभिरालोचितम्। "चित्रकर्णमेव यथा स्वामी व्यापादयति तथानुष्ठीयताम्। किमनेन (र) कण्टकभुजा अस्माकम्।" व्याघ्रो ब्रूते, "स्वामिना अभयवाचं दत्त्वा गृहीतोऽयम्। कथमेवं सम्भवति?।" वायसो वदति। इह समये परिक्षीणः स्वामी पापमपि करिष्यति।

यतः, त्यजेत् क्षुधार्त्ता महिलापि पुत्रं
खादेत् क्षुधार्त्ता भुजगी स्वमण्डम्।
बुभुक्षितः किं न करोति पापं
क्षीणा नरा निष्करुणा भवन्ति ॥ ५९ ॥

अन्यच्च, मत्तः प्रमत्तश्चोन्मत्त आर्त्तः क्रोधी बुभुक्षितः।
लुब्धो भीरुस्त्वरायुक्तः कामुकश्च न धर्म्मवित् ॥६०॥"

---

(र) कण्टकभुजा—कण्टकमयतृणभोजिना।

(५९) त्यजेदिति। महिलापि स्त्री अपि क्षुधार्त्ता क्षुधाकातरा सती पुत्रमपि त्यजेत्। भुजगी सर्पी क्षुधार्त्ता स्वं स्वकीयम् अण्डं खादेत् भक्षयेत्। बुभुक्षितः क्षुधातुरो जनः किं पापं न करोति आचरति। क्षीणाः बलहीनाः नराः निष्करुणाः निर्दयाः भवन्ति। दुर्बलानामेव पापप्रवृत्तिरधिका जायते इत्यर्थः।

(६०) मत्त इति। मत्तः विकृतचित्तः प्रमत्तः कार्य्येषु अनवहितः उन्मत्तः वातुलः आर्त्तः विपन्नः क्रोधी कोपनस्वभावः बुभुक्षितः क्षुधा-

इति निश्चित्य सर्वे सिंहान्तिकं जग्मुः । सिंहेनोक्तम् । "आहारार्थं प्राप्तं किञ्चित् ।" काको ब्रूते, "देव ! यत्नादपि न प्राप्तं किञ्चित् ।" सिंहोऽवदत् । "कोऽधुना जीवनोपायः ?" काको वदति । स्वाधीनाहारपरित्यागात् सर्वनाशोऽयमुपस्थितः । सिंहेनोक्तम् । अत्राहारः कः ? कश्च स्वाधीनः ? काकः कर्णे कथयति । "चित्रकर्ण इति ।" सिंहो भूमिं स्पृष्ट्वा कर्णौ स्पृशति । "मयास्मै अभयवाग् दत्ता । तत् कथमेवं सम्भवति ? । तथा हि,

न भूप्रदानं न सुवर्णदानं न गोप्रदानं न तथान्नदानम् ।
यथा वदन्तीह महाप्रदानं सर्वप्रदानेष्वभयप्रदानम् ॥ ६१ ॥

अन्यच्च, सर्वकामसमृद्धस्य अश्वमेधस्य यत् फलम् ।
तत् फलं लभते सम्यक् रक्षिते शरणागते ॥ ६२ ॥

---

तुरः लुब्धः लोलुपः भीरुः भयशीलः त्वरायुक्तः अविमृश्यकारी कामुकः इन्द्रियपरायणश्च धर्मवित् धार्मिको न भवतीति शेषः ।

(६१) नेति । इह जगति यथा वदत् सर्वप्रदानेषु सर्वविधेषु दानेषु अभयप्रदानम् अभयदानम् आश्रयदानमिति यावत् । महादानं महापुण्यजनकं दानं वदन्ति आमनन्ति विद्वांस इति शेषः । तथा भूप्रदानं भूमिदानं न, सुवर्णदानं कनकदानं न, गो प्रदानं गो दानं न, अन्नदानं भोजनदानं न, वदन्तीत्यनेनान्वयः ।

(६२) सर्वेति । सर्वैः सर्वप्रकारैः कामैः अभिलषितैः समृद्धस्य सम्पन्नस्य सर्वाभीष्टप्रदस्य अश्वमेधस्य यत् फलं जायते । शरणागते शरणमापन्ने आर्त्ते सम्यक् सविशेषेण रक्षिते आपदः मोचिते सति तत् फलं तादृशं पुण्यं लभते प्राप्नोति रक्षक इति शेषः ।

काको ब्रूते, "नासौ स्वामिना व्यापादयितव्यः। किन्त्वस्माभिरेव तथा कर्त्तव्यं यथासौ स्वदेहदानमङ्गीकरोति" तच्छ्रुत्वा सिंहस्तूष्णीं स्थितः। ततोऽसौ लब्धावकाशः (ख) कूटं कृत्वा सर्वानादाय सिंहसमीपमागतः। अथ काकेनोक्तम्। देव! यत्नादप्याहारो न प्राप्तः। अनेकोपवासक्लिष्टश्च स्वामी। तदिदानीं मदीयमांसमुपभुज्यताम्।

यतः, स्वामिमूला भवन्त्येताः सर्वाः प्रकृतयः खलु।

समूलेषु हि वृक्षेषु प्रयत्नः सफलो नृणाम् ॥ ६२ ॥

सिंहेनोक्तम्। "भद्र! वरं प्राणपरित्यागो न पुनरीदृशे कर्म्मणि प्रवृत्तिः।" जम्बुकेनापि तथोक्तम्। "मैवम्" इति सिंहेनोक्तम्। अथ व्याघ्र उवाच, "मद्देहेन जीवतु स्वामी" सिंहेनोक्तम् "न कदाचिदेवमुचितम्।" अथ चित्रकर्णोऽपि (ग) जातप्रत्ययः तथैवात्मदेहदानमाह तद्वचनेवासौ द्वीपिना कुक्षिं विदार्य्य व्यापादितः सर्वैर्भक्षितश्च। अतोऽहं ब्रवीमि। मतिर्दोलायते नूनमित्यादि।" तदनन्तरं तृतीयधूर्त्तवचनं श्रुत्वा स विप्रो भ्रमं निश्चित्य छागं त्यक्त्वा

---

(ख) कूटं—व्याजं, कापट्यं छलमिति यावत्।

(१) स्वामिमूलेति। एताः सर्वाः सकलाः प्रकृतयःप्रजाः खलु निश्चितं स्वामिमूलं स्वामी प्रभुरेव मूलं जीवनरक्षण कारणं यासां ताः स्वामिनि जीवति सर्वा एव प्रजा जीवन्ति। हि तथाहि नृणां नराणां समूलेषु मूलयुक्तेषु वृक्षेषु तरुषु न तु छिन्नमूलेष्विति भावः। प्रयत्नः प्रयत्नप्रयासः सफलः फलप्रदः भवतीति शेषः।

(ग) जातप्रत्ययः—काकादीनां वचसि कृतविश्वासः।

स्नात्वा गृहं ययौ। छागश्च नीत्वा धूर्त्तैः खादितः।
अतोऽहं ब्रवीमि। 'आत्मौपम्येन यो वेत्तीत्यादि।"
राजाह मेघवर्ण! 'कथं त्वया शत्रुमध्ये सुचिरमुषितम्।
कथं वा तेषां मनुनयः कृतः।" मेघवर्ण आह, "देव!
स्वामिकार्य्यार्थिना स्वप्रयोजनवशाद्वा किं किं न क्रियते।'
पश्य, लोको वहति किं राजन्! न मूर्ध्ना दग्धुमिन्धनम्।
क्षालयन्नपि वृक्षाङ्घ्रिं नदीवेगो निकृन्तति ॥६४॥
तथा चोक्तम्,

स्कन्धेनापि वहेच्छत्रून् कार्य्यमासाद्य बुद्धिमान्।
यथा वृद्धेन सर्पेण मण्डूका विनिपातिताः॥ ६५ ॥

राजाप्याह, "कथमेतत्?" मेघवर्णः कथयति, "अस्ति
जीर्णोद्याने मन्दविसर्पी नाम सर्पः। सोऽतिजीर्णतया
स्वाहारमप्यन्वेष्टुमक्षमः। सरस्तीरे पतित्वा स्थितः। ततो
दूरात् केनचिन्मण्डूकेन दृष्टः पृष्टश्च, "किमिति भवानाहारं
नान्विष्यति?" सर्पो ब्रूते, "भद्र! गच्छ किं ते मम मन्द-

---

(६४) लोक इति। हे राजन्! दग्धुं दाहार्थम् इन्धनं काष्ठं ज्वलनकाष्ठं किं मूर्ध्ना शिरसा न वहति दग्धुमेव वहन्ति न तु तत् रक्षितुमित्यर्थः। अन्यदपि उदाहरणं प्रदर्शयति नदीवेगः नदीस्रोतः वृक्षाङ्घ्रिं वृक्षचरणं वृक्षमूलमित्यर्थः क्षालयन् प्रक्षालयन्नपि पादसेवां कुर्वन्नपीति भावः निकृन्तति उत्पाटयति।

(६५) स्कन्धेनेति। बुद्धिमान् प्राज्ञो जनः कार्य्यं स्वकर्मसिद्धिम् आसाद्य प्राप्य कार्य्यसाधनार्थमित्यर्थः। शत्रून् अरीन् स्कन्धेनापि वहेत् धारयेत् यथा वृद्धेन सर्पेण मण्डूकाः भेकाः विनिपातिताः निहताः।

भाग्यस्य (श) वृत्तान्तप्रश्नेन ?" ततः सञ्जातकौतुकः स भेकः सर्वथा कथ्यतामिति तं सर्पमाह, सर्पो ब्रूते, "भद्र ! अत्र ब्रह्मपुरे कौण्डिन्यनाम्नः श्रोत्रियस्य पुत्रो (ष) विंशतिवर्षदेशीयः सर्वगुणसम्पन्नो दुर्दैवान्मया नृशंसेन दष्टः । ततः सुशीलनामानं पुत्रं मृतमवलोक्य कौण्डिन्यः शोकेन मूर्च्छितः पृथिवीतले लुलोठ । अनन्तरं ब्रह्मपुरवासिनः सर्वे बान्धवास्तस्य तत्रागत्योपविष्टाः । तथा चोक्तम्,

आहवे व्यसने चैव दुर्भिक्षे शत्रुविग्रहे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ ६६ ॥

ततः कपिलो नाम (स) स्नातकोऽवदत्, अरे कौण्डिन्य ! (ह) मूढोऽसि, येनैवं विलपसि ।

शृणु, क्रोडीकरोति प्रथमं यदा जातमनित्यता ।
धात्रीव जननी पश्चात् तदा शोकस्य कः क्रमः ? ६७॥

---

(श) वृत्तान्तप्रश्नेन—वार्त्ताजिज्ञासया ।

(ष) विंशतिवर्षदेशीयः—विंशतिवर्षप्रायः ( ईषदूने कल्पदेश्यदेशीया इति देशीयः ) ।

(६६) आहव इति । आहवे युद्धे व्यसने विपदि दुर्भिक्षे अन्नाभावसमये शत्रुविग्रहे शत्रुणा आक्रमणसमये राजद्वारे विचारालये श्मशाने अन्त्येष्टिकर्मणि च यः तिष्ठति यः अनुकूलयति स बान्धवः प्रकृतोबन्धुः ।

(स) स्नातकः—ब्रह्मचर्य्यं समाप्य गृहस्थाश्रमं प्रविष्टः ।

(ह) मूढः—अविवेकी ।

(६७) क्रोडीति । यदा यस्मिन् समये अनित्यता विनश्वरता प्रथमं धात्री उपमाता पश्चात् जननी गर्भधारिणी इव जातं वरं

तथा च, क्व गताः पृथिवीपालाः ससैन्यबलवाहनाः ।
वियोगसाक्षिणी येषां भूमिरद्यापि तिष्ठति ॥६८॥

अपरञ्च, प्रतिक्षणमयं कायः क्षीयमाणो न लक्ष्यते ।
आमकुम्भ इवाम्भःस्थो विशीर्णः सन् विभाव्यते ॥६९॥

आसन्नतरतामेति मृत्युर्जन्तोर्दिने दिने ।
आघातं नीयमानस्य बध्यस्येव पदे पदे ॥ ७० ॥

यतः, अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः ।
ऐश्वर्य्यं प्रियसंवासो मुह्येत् तत्र न पण्डितः ॥ ७१ ॥

---

क्रोड़ीकरोति एकत्र विषयीकरोति अन्यत्र अङ्कमारोपयति । यदा जातस्य मरणं अवश्यम्भावीत्यर्थः । तदा शोकस्य कः क्रमः नियमः । अवश्यम्भाविनि विषये शोकं माकार्षीरित्यर्थः ।

(६८) क्वेति । सैन्येन सेनया बलेन चतुरङ्गबलेन वाहनैः याना-दिभिश्च सह वर्त्तमानाः सैन्यबलवाहनसहिताः पृथिवीपालाः राजानः क्व कुत्र गताः मृता इत्यर्थः । येषां पृथिवीपालानां वियो-गसाक्षिणी येषा मभावेन विपर्य्यस्तेत्यर्थः भूमिः अद्यापि अधुनापि तिष्ठति वर्त्तते ।

(६९) प्रतिक्षणमिति । अयं कायः शरीरं प्रतिक्षणं प्रति-मुहूर्त्तं क्षीयमाणः क्षयं प्राप्नुवन्नपि न लक्ष्यते तथात्वेन न दृश्यते । प्रत्युत आमकुम्भः वह्निदाहाभावेन अपरिपक्वः । अम्भःस्थः जलमध्यस्थः कुम्भः घट इव विशीर्णः विगलितः सन् विभाव्यते स्पष्टं दृश्यते ।

(७०) आसन्नेति । मृत्युः मरणकालः जन्तोः प्राणिनः दिने दिने प्रतिदिनम् आघातं वधार्थं वधसाधन स्थानमित्यर्थः नीयमानस्य प्राप्यमानस्य पदे पदे प्रतिपदं वध्यस्य वधार्हस्येव आसन्नतरतां क्रमशः सन्निहितत्त्वं एति प्राप्नोति । प्रतिदिनमेवायुः क्षीयते इत्यर्थः ।

(७१) अनित्यमिति । यौवनं युवाकालः अनित्यम् अस्थिरं सर्वत्र

यथा काष्ठञ्च काष्ठञ्च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद् भूतसमागमः ॥ ७२ ॥
यथा हि पथिकः कश्चिच्छायामाश्रित्य तिष्ठति ।
विश्रम्य च पुनर्गच्छेत् तद्वद्भूतसमागमः ॥ ७३ ॥
अन्यच्च, पञ्चभिर्निर्मिते देहे पञ्चत्वं च पुनर्गते ।
स्वां स्वां योनिमनुप्राप्ते तत्र का परिदेवना ? ॥ ७४ ॥
यावतः कुरुते जन्तुः सम्बन्धान् मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ ७५ ॥

---

विभक्ति विपरिणामेन अनित्यमित्यनेनान्वयः । रूपं सौन्दर्य्यं जीवितं प्राणाः द्रव्यसञ्चयः भोग्यविलास द्रव्यसंग्रहः ऐश्वर्य्यं सम्पत् प्रियसम्वासः प्रियजनैः पुत्रकलत्रादिभिः सह एकत्रावस्थितिः । तत्र । तेषु पण्डितः विवेकी जनः न मुह्येत् तदर्थं न शोचेत् ।

(७२) यथेति । यथा महोदधौ महासमुद्रे काष्ठञ्च काष्ठञ्च भासमाने द्वे काष्ठे इत्यर्थः समेयाताम् आत्मनैव संगच्छेयातां समेत्य क्षणं मिलित्वा पुनः व्यपेयातां वियुज्येतां तद्वत् तथा भूतसमागमः । पुत्रादिभिः सह सङ्गमः ।

(७२) यथेति । यथा कश्चित् जनः पथि अध्वनि छायाम् आश्रित्य अवलम्ब्य तिष्ठति विश्राम्यति विश्रम्य परिश्रमं अपनीय पुनः गच्छेत् यायात् तद्वत् तादृशः भूतसमागमः प्रियजनैः सह मिलनमित्यर्थः ।

(७४) पञ्चभिरिति । पञ्चभिः क्षित्यादि पञ्चभूतैः निर्मिते आरब्धे देहे शरीरे पुनः पञ्चत्वं क्षित्यादि प्रकृतिं गते प्राप्ते स्वां स्वां योनिं प्रकृतिम् अनुप्राप्ते लब्धे सति तत्र तस्मिन् देहे का परिदेवना विलापः मरणं प्रकृतिः शरीरिणां विकृतिः जीवितमिति विचिन्त्य तदर्थं न शोकः कर्त्तव्य इत्यर्थः ।

(७५) यावत इति । जन्तुः प्राणी यावतः यावत् संख्यकान्

नायमत्यन्तसंवासो लभ्यते येन केनचित्।
अपि स्वेन शरीरेण किमुतान्येन केनचित्? ॥ ७६ ॥

अपिच, संयोगो हि वियोगस्य संसूचयति सम्भवम्।
अनतिक्रमणीयस्य जन्म मृत्योरिवागमम् ॥ ७७ ॥

आपातरमणीयानां संयोगानां प्रियैः सह।
अपथ्यानामिवान्नानां परिणामो हि दारुणः ॥ ७८ ॥

अपरञ्च, व्रजन्ति न निवर्त्तन्ते स्रोतांसि सरितां यथा।
आयुरादाय मर्त्यानां सदा रात्र्यहनी तथा ॥ ७९ ॥

---

मनसः प्रियान् सम्बन्धान् स्नेहबन्धनानि कुरुते अस्य जन्तोः हृदये मनसि तावन्तः तस्य स्वकाः शोकशङ्कवः शोकरूपशैल्यानि निखन्यन्ते विध्यन्ते स्नेहानुरूपमेशानुतापं भजन्ते इत्यर्थः।

(७६) नायमिति। येन केनचित् किमधिकं स्वेन शरीरेणापि अयम् ईदृशः अत्यन्तसंवासः चिरावस्थानं न लभ्यते प्राप्यते उत भोः कौण्डिन्य! अन्येन पुत्रादिना केनचित् किं न कथमपि सम्भाव्यते इत्यर्थः।

(७७) संयोग इति। जन्म उत्पत्तिः अनतिक्रमणीयस्य अवश्यम्भाविन इत्यर्थः मृत्योः मरणस्य आगमम् उपस्थितिमिव संयोगः मिलनं वियोगस्य अवश्यम्भाविन इति भावः सम्भवं समागमं संसूचयति ज्ञापयति।

(७८) आपातेति। अपथ्यानाम् अहितकराणाम् अन्नानां भोज्यवस्तूनाम् इव आपातरमणीयानां क्षणप्रीति प्रदानां प्रीत्या क्षणोपभोगक्षमाणामित्यर्थः प्रियैः सह पुत्रादिप्रियजनैः सह संयोगानां मिलनानां परिणामः चरमः दारुणः भीषणः असुखजनको भवतीति शेषः।

(७९) व्रजन्तीति। यथा सरितां नदीनां स्रोतांसि प्रवाहाः व्रजन्ति गच्छन्ति न निवर्त्तन्ते प्रत्यागच्छन्ति। तथा सर्वदा रात्र्यहनी रात्रिश्च दिवा च मर्त्यानां प्राणिनाम् आयुः जीवितं जीवनकाल-

सुखास्वादपरो यस्तु संसारे सत्समागमः ।
स वियोगावसानत्वात् दुःखानां धुरि युज्यते ॥ ८० ॥
अतएव हि नेच्छन्ति साधवः सत्समागमम् ।
यद्वियोगासिलूनस्य मनसो नास्ति भेषजम् ॥ ८१ ॥
सुकृतान्यपि कर्म्माणि राजभिः सगरादिभिः ।
अथ तान्येव कर्म्माणि ते चापि प्रलयं गताः ॥ ८२ ॥

सञ्चिन्त्य सञ्चिन्त्य तमुग्रदण्डं
मृत्युं मनुष्यस्य विचक्षणस्य ।
वर्षाम्बुसिक्ता इव चर्म्मबन्धाः
सर्व्वे प्रयत्नाः शिथिलीभवन्ति ॥ ८३ ॥

---

मित्यर्थः आदाय गृहीत्वा गच्छतः व्रजतः न निवर्त्तते इति पूर्व्वेणान्वयः ।

(८०) सुखेति । संसारे भूतले यस्तु सत्समागमः साधुसङ्गः सुखास्वादपरः परमसुखास्पदं स हि सत्समागमः वियोगावसानत्वात् वियोगपरिणामत्वात् दुःखानां दुःखसमूहानां धुरि अग्रे युज्यते स एव चरमे दुःखदायको भवतीत्यर्थः ।

(८१) अत इति । अतएव दुःखपरिणामत्वादेव साधवः विवेकिनः सत्समागमं साधुसङ्गं प्रियसङ्गतिमिति यावत् न इच्छन्ति अभिलषन्ति । येन सह वियोगः यद्वियोगः स एव असिः खड्गः तेन लूनस्य छिन्नस्य यद्वियोगासिलूनस्येत्यर्थः मनसः चित्तस्य भेषजं औषधं नास्ति न विद्यते ।

(८२) सुकृतान्यपीति । सगरः सूर्य्यवंशीयो नृपतिविशेषः स एवादिर्येषां तैः महाबलसम्पन्नैर्नरपतिभिः सुकृतानि सुसम्पादितान्यपि कर्म्माणि अश्वमेधाद्यनुष्ठानानि अथ तान्येव कर्म्माणि ते राजानश्च प्रलयं नाशं गताः इत्यर्थः ।

(८३) सञ्चिन्त्येति । उग्रदण्डं तीव्रशासनं मृत्युं सञ्चिन्त्य

यामेव रात्रिं प्रथमामुपैति गर्भे निवासं नरवीरलोकः।
ततः प्रभृत्यस्खलितप्रयाणः स प्रत्यहं मृत्युसमीपमेति ॥८४॥

अथ संसारं विचार्य शोकोऽयमज्ञानस्य प्रपञ्चः (च)।

पश्य, अज्ञानं कारणं न स्याद्वियोगो यदि कारणम्।
शोको दिनेषु गच्छत्सु वर्द्धतामपयाति किम् ?॥८५॥

तद्भद्र ! आत्मानमनुसन्धेहि,(क) शोकचर्चां(ख) च परिहर।

यतः, अकाण्डपातजातानामस्त्राणां मर्मभेदिनाम्।
गाढशोकप्रहाराणामचिन्तैव महौषधम् ॥ ८६ ॥

---

पुनः पुनर्मनसि ध्यात्वा—विचक्षणस्य विदुषः अपि मनुष्यस्य सर्वे प्रयत्नाः प्रयासाः वर्षाम्बुसिक्ताः वर्षाजलार्द्राः चर्मबन्धाः चर्मरज्जव इव शिथिलीभवन्ति विफला भवन्ति। निर्ममाः भवितुं यतन्ते इत्यर्थः।

(८४) यामिति। नरवीरलोकः नरेषु मध्ये वीरो जनः यामेव प्रथमां रात्रिं गर्भे निवासं वसतिम् उपैति प्राप्नोति ततः प्रभृत्येव जन्मदिनमारभ्य अस्खलितप्रयाणः अस्खलितगतिः सन् स नरवीरः प्रत्यहं प्रतिदिनं मृत्युसमीपं मृत्योः अन्तिकम् एति गच्छति।

(च) अज्ञानस्य प्रपञ्चः—मोहस्य विकृतिः।

(८५) अज्ञानमिति। यदि वियोग एव कारणं दुःखस्य हेतुः अज्ञानं मोहः कारणं न स्यात् भवेत् तदा दिनेषु गच्छत्सु प्रतिदिन-मित्यर्थः शोको वर्द्धतां वृद्धिं गच्छतु किं किमर्थं शोकः अपयाति अप-गच्छति। न कथमपीत्यर्थः। अतः अज्ञानमेव शोकस्य कारणमिति भावः।

(क) अनुसन्धेहि—स्थिरीकुरु। विचिन्तय।

(ख) शोकचर्चां—शोकाभिभूतताम्।

(८६) अकाण्डेति। अकाण्डे असमये पातः पतनं तेन जातानाम्

ततस्तद्वचनं निशम्य(ग) प्रबुद्ध इव कौण्डिन्य उत्थायाब्रवीत्। "तदलमिदानीं गृहनरकवासेन। वनं गच्छामि" पुनः कपिलो ब्रूते,

वनेऽपि दोषाः प्रभवन्ति रागिणां
गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः।
अकुत्सिते कर्म्मणि यः प्रवर्त्तते
निवृत्तरागस्य गृहं तपोवनम्॥ ८७॥

यतः, दुःखितोऽपि चरेद्धर्म्मं यत्र कुत्राश्रमे रतः।
समः सर्वेषु भूतेषु न लिङ्गं धर्म्मकारणम्॥ ८८॥

---

अचिन्तितपूर्वाणां गाढशोकप्रहाराणां तीव्रशोकाघातानां मर्म्मभेदिनां मर्म्मविदारकाणाम् अस्त्राणामिव अचिन्तैव अनालोचनैव महौषधं प्रधानं भेषजम्।

(ग) प्रबुद्ध इव—चैतन्यमापादित इव।

(८७) वने इति। वनेऽपि रागिणां विषयासक्तचेतसां दोषाः मोहादयः प्रभवन्ति जायन्ते। गृहेऽपि पञ्चानां चक्षुःकर्णादीनाम् इन्द्रियाणां निग्रहः संयमः तपः धर्म्मानुष्ठानम्। यः अकुत्सिते अनिन्दनीये पुण्ये इति यावत् कर्म्मणि प्रवर्त्तते पुण्यमाचरति निवृत्तरागस्य विषयासक्तिरहितस्य वीतस्पृहस्येति यावत् गृहं तपोवनं तपोवनवत् धर्म्मानुष्ठानस्थानम्।

(८८) दुःखित इति। यत्र कुत्र यस्मिन् कस्मिन्नपि आश्रमे रतः अनुरक्तः दुःखितोऽपि धर्म्मं चरेत् अनुतिष्ठेत् सर्वेषु भूतेषु प्राणिषु समः समभावः आत्मवत् ज्ञानं धर्म्मस्य हेतुः लिङ्गं ब्रह्मचर्य्याद्याश्रमव्यञ्जकं चिह्नं न धर्म्मकारणमिति शेषः।

उत्ताश्च, वृत्त्यर्थं भोजनं येषां सन्तानार्थञ्च मैथुनम् ।
वाक् सत्यवचनार्थञ्च दुर्गाण्यपि तरन्ति ते ॥ ८९ ॥

तथा हि,

आत्मा नदी संयमपुण्यतीर्था सत्योदका शीलतटा दयोर्मिः ।
तत्राभिषेकं कुरु पाण्डुपुत्र ! न वारिणा शुध्यति चान्तरात्मा ॥९०
विशेषतश्च, जन्ममृत्युजराव्याधिवेदनाभिरभिद्रुतम् ।
संसारमिदमत्यन्तमसारं त्यजतः सुखम् ॥ ९१ ॥
दुःखमेवास्ति न सुखं यस्मात् तदुपलक्ष्यते ।
दुःखार्त्तस्य प्रतीकारे सुखसंज्ञा विधीयते ॥ ९२ ॥

---

(८९) वृत्त्यर्थमिति । येषां नराणां वृत्तिः जीविका अर्थः प्रयोजनं यस्य तत् जीविकार्थं न तु लोभसंवरणार्थमिति भावः । भोजनम् आहारः सन्तानार्थं मैथुनम् अपत्यार्थं स्त्रीसम्भोगः न तु कामोपभोगाय । सत्यवचनार्थं सत्यरक्षार्थं वाक् वचनप्रयोगः ते दुर्गाणि अलङ्घनीयानि स्थानान्यपि तरन्ति अतिक्रामन्ति ।

(९०) आत्मेति । संयमः इन्द्रियनिग्रह एव पुण्यं पवित्रं तीर्थं सोपानं यस्याः सा सत्यम् उदकं जलं यस्याः सा शीलं चरित्रं तटं यस्याः सा दया ऊर्मिः तरङ्गमाला यस्याः तथा भूता आत्मा नदी तत्र तस्यां हे पाण्डुपुत्र ! अभिषेकं कुरु वारिणा केवलेन जलेन च अन्तरात्मा चेतः न शुध्यति शुद्धिं लभते ।

(९१) जन्मेति । जन्म उत्पत्तिः मृत्युः मरणं जराः वार्द्धक्यं व्याधिः रोगः वेदना शोकः तैरभिद्रुतं सङ्कुलम् अत्यन्तम् अतिशयेन असारम् इदं संसारं त्यजतो जनस्य सुखं भवतीति शेषः ।

(९२) दुःखमिति । दुःखमेव अस्ति विद्यते सुखं नास्ति कुत इत्याह यस्मात् तत् दुःखमेव उपलक्ष्यते अनुभूयते दुःखार्त्तस्य दुःखका-

कौण्डिन्यो ब्रूते, एवमेव। ततोऽहं तेन (घ) शोकाकुलेन ब्राह्मणेन शप्तः। "यदद्यारभ्य मण्डूकानां वाहनं भविष्यसीति"। कपिलो ब्रूते, सम्प्रत्युपदेशासहिष्णु (ङ) र्भवान्, शोकाविष्टं ते हृदयम्। तथापि कार्य्यं शृणु।

सङ्गः सर्वात्मना त्याज्यः स चेत् त्यक्तुं न शक्यते।
स सद्भिः सह कर्तव्यः सतां सङ्गो हि भेषजम् ॥ ९३ ॥

अन्यच्च, कामः सर्वात्मना हेयः स चेद्धातुं न शक्यते।
स्वभार्य्यां प्रति कर्त्तव्यः सैव तस्य हि भेषजम् ॥९४॥

एतच्छ्रुत्वा स कौण्डिन्यः (च) कपिलोपदेशामृतप्रशान्तशोकानलो यथाविधि दण्डग्रहणं कृतवान्। ततो ब्राह्मण-

---

तस्य प्रतीकारे दुःखोपशमे सति सुखसंज्ञा सुखेति नाम विधीयते क्रियते।

(घ) शोकाकुलेन—शोकार्त्तेन।

(ङ) उपदेशासहिष्णुः—दुःखाभिपन्नहृदयत्वात् उपदेशश्रवणानर्हः।

(९३) सङ्ग इति। सङ्गः आसक्तिः विषयानुरागः सर्वात्मना सर्वथा त्याज्यः परिहर्त्तव्यः। स सङ्गः त्यक्तुं न शक्यते चेत् तर्हि स सङ्गः सद्भिः साधुभिः सह कर्त्तव्यः हि यतः सतां साधूनां सङ्गः भेषजं चित्तग्लानिपरिहारार्थं महौषधिः। सतां सद्भिः सङ्गः कथमपि हि दुःखेन भवतीति भावः।

(९४) काम इति। कामः रतीच्छा सर्वात्मना सर्वथा हेयः त्याज्यः स हातुं त्यक्तुं न शक्यते चेत् तर्हि स्वभार्य्यां धर्मपत्नीं प्रति कर्त्तव्यः सैव स्वभार्य्यैव तस्य कामस्य भेषजम् औषधम्।

(च) कपिलोपदेशामृत प्रशान्त शोकानलः—कपिलस्य उपदेशः

शापं भोक्तुं मण्डूकान् उद्वोढुमेव तिष्ठामि ।" अनन्तरं तेन मण्डूकेन गत्वा मण्डूकनाथस्य जालपादस्य तत् कथितम् । ततोऽसावागत्य स मण्डूकनाथः सर्पमधिष्ठितवान् । स सर्पस्तं पृष्ठे कृत्वा (छ) चित्रपदक्रमं बभ्राम । परेद्युश्चलितुमसमर्थं तं मण्डूकनाथोऽवदत् । "किमिति भवानद्य मन्दगतिः ?" सर्पो ब्रूते, "देव ! आहारविरहाद् दुर्बलोऽस्मि ।" मण्डूकनाथोऽवदत्, "अस्मदाज्ञया मण्डूकान् भक्षय । ततः "गृहीतोऽयं (ज) महाप्रसादः" इत्युक्त्वा क्रमशः स मण्डूकान् खादति, अथ निर्मण्डूकं सरो विलोक्य मण्डूकनाथोऽपि तेन खादितः । अतोऽहं ब्रवीमि । स्कन्धेनापि वहेच्छत्रून् इत्यादि । देव ! यात्विदानीं पुरावृत्ताख्यानकथनं सर्वथा सन्धेयोऽयं हिरण्यगर्भो राजा सन्धीयतामिति मे मतिः । "राजोवाच, कोऽयं भवतां (झ) विचारः ? यतो जितस्तावदयमस्माभिः । ततो यद्यस्मदाज्ञया सेवायां वसति, तदास्तां नो चेत्विगृह्यताम् ।" अत्रान्तरे जम्बुद्वीपादागत्य शुकेनोक्तम्, "देव ! सिंहलद्वीपस्य सारसो राजा सम्प्रति जम्बुद्वीपमाक्रम्या-

---

प्रबोधवचनमेव अमृतं तेन प्रशान्तः निर्वापितः शोकानलः शोकदहनो यस्य सः, कपिलोपदेशेन लब्धशम इत्यर्थः ।

(छ) चित्रपदक्रमं—चित्रः विचित्रः पदानां क्रमो विक्षेपः पादन्यासो यस्मिन् तत् ।

(ज) महाप्रसादः—महानुग्रहः ।

(झ) विचारः—नीतिः ।

धितिष्ठति ।" राजा तं ससम्भ्रममाह, "किं किम् ?" शुकः पूर्वोक्तं कथयति । गृध्रः स्वगतमुवाच, "साधु रे चक्रवाक ! मन्त्रिन् ! साधु. राजा सकोपमाह, "आस्तां तावदयं, क्षणमेव गत्वा समूलमुन्मूलयामि ।" दूरदर्शी विहस्याह,

न शरन्मेघवत् कार्य्यं वृथैव घनगर्जितम् ।
परस्यार्थमनर्थं वा प्रकाशयति नो महान् ॥ ८५ ॥

अपरञ्च, एकदा न विगृह्णीयात् बहून् राजा विवादिनः ।
सदर्पोऽप्युरगः कीटैर्बहुभिर्नाशितो ध्रुवम् ॥ ८६ ॥

देव ! किं इतो विना सन्धानं गमनमस्ति ? यत अस्माकं पश्चात् प्रकोपः कर्त्तव्यः ।

अपरञ्च, योऽर्थतत्त्वमविज्ञाय क्रोधस्यैव वशं गतः ।
स तथा तप्यते मूढो ब्राह्मणो नकुलादिव ॥ ८७ ॥

---

(८५) नेति । शरन्मेघवत् शरत्कालीनमेघ इति वृथैव विफलमेव घनगर्जितं गभीरगर्जनं न कार्य्यं कर्त्तव्यं महान् जनः परस्य शत्रोः अर्थम् इष्टम् अनर्थम् अमङ्गलं वा न प्रकाशयति न वाङ्मात्रेण प्रकटयति ।

(८६) एकदेति । राजा एकदा युगपत् बहून् विवादिनः विरोधिनः शत्रून् इति यावत् न विगृह्णीयात् विरुन्ध्यात् सदर्पः सगर्वः उरगः सर्पोऽपि बहुभिः कीटैः पिपीलिकादिभिः ध्रुवं निश्चितं नाशितः हतः ।

(८७) य इति । यो जनः अर्थतत्त्वं कोपस्य प्रकृतकारणम् अविज्ञाय अज्ञात्वा क्रोधस्यैव कोपस्यैव वशम् अधीनतां गतः मूढः मूर्खः नकुलात् ब्राह्मण इव तथा तप्यते अनुतापं लभते ।

राजा पृच्छति, कथमेतत्? दूरदर्शी कथयति, "अस्त्युज्जयिन्यां माधवो नाम ब्राह्मणः। तस्य ब्राह्मणी प्रसूता। सा बालापत्यरक्षार्थं ब्राह्मणमवस्थाप्य स्नातुं गता। अथ ब्राह्मणस्य कृते राज्ञः पार्वणश्राद्धं दातुमागतो जनः। तं दृष्ट्वा ब्राह्मणः सहजदारिद्र्यादचिन्तयत्। "यदि सत्वरं न गच्छामि तदाऽन्यः कश्चिच्छ्राद्धं ग्रहीष्यति।

उक्तञ्च, आदेयस्य प्रदेयस्य कर्त्तव्यस्य च कर्मणः।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम्॥ ९८॥

शिशोश्चात्र रक्षकः कोऽपि नास्ति? तत् किं करोमि? भवतु तावत् चिरकालपालितममुं (ञ) सुतनिर्विशेषं नकुलं बालकरक्षार्थं व्यवस्थाप्य गच्छामि"। तथा कृत्वा गतः। ततस्तत्र नकुलेन बालकसमीपमागच्छन् कृष्णसर्पो व्यापादितः खण्डितश्च। अथासौ नकुलो ब्राह्मणमायान्तमवलोक्य (ट) रक्तविलिप्तमुखपादः सत्वरमुपगम्य ब्राह्मणस्य चरणयोर्लुलोठ। ततोऽसौ ब्राह्मणस्तं तथाविधं दृष्ट्वा मम

---

(९८) आदेयस्येति। आदेयस्य आदातुं योग्यस्य अन्यकर्त्तृकसम्प्रदानविषयीभूतस्य प्रदेयस्य स्वयं सम्प्रदातुं योग्यस्य कर्त्तव्यस्य अवश्यसम्पादनीयस्य च कर्मणः क्षिप्रं शीघ्रम् अक्रियमाणस्य असम्पद्यमानस्य अतः कालः समयः तत् रसं पिबति गृह्णाति तत्कार्य्यं विफलीकरोतीत्यर्थः।

(ञ) सुतनिर्विशेषम्—अपत्यवत् स्नेहास्पदम्।

(ट) रक्तविलिप्तमुखपादः—रक्तमिश्रितसर्वाङ्गः।

पुत्रोऽनेन भक्षित इत्यविचार्य्य तं व्यापादितवान्। अनन्तरं यावदुपसृत्य पश्यति ब्राह्मणस्तावद् बालकः सुस्थः स्वपिति, सर्पस्तु व्यापादितस्तिष्ठति। ततोऽसौ ब्राह्मणो विषादमुपगतः। अतोऽहं ब्रवीमि। योऽर्थतत्त्वमविज्ञाय इत्यादि।

अपरञ्च, कामः क्रोधस्तथा लोभो हर्षो मानो मदस्तथा।
षड्वर्गमुत्सृजेदेनमस्मिंस्त्यक्ते सुखी भवेत्॥ ९९॥

राजाह, "मन्त्रिन्! एष ते निश्चयः। मन्त्री ब्रूते, "एवमेव"।

यतः, स्मृतिश्च परमार्थेषु वितर्को ज्ञाननिश्चयः।
दृढ़ता मन्त्रगुप्तिश्च मन्त्रिणः परमो गुणः॥ १००॥

तथा च, सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः १०१

---

(९९) काम इति। कामः विषयभोगलिप्सा क्रोधः कोपः तथा लोभः धनलिप्सा हर्षः सन्तोषः मानः सम्मानं तथा मदः गर्वः एनं षड्वर्गम् उत्सृजेत् अस्मिन् त्यक्ते सति लोकः सुखी भवेत्।

(१००) स्मृतिरिति। परमार्थेषु धर्मतत्त्वेषु स्मृतिः अभिनिवेशः वितर्कः विवेकबुद्धिः ज्ञाननिश्चयः बुद्धिस्थिरता दृढ़ता अविचलितप्रतिज्ञता मन्त्रगुप्तिः रहस्यसंगोपनं मन्त्रिणः सचिवस्य परमो गुणः प्रधानो गुणः।

(१०१) सहसेति। सहसा अविविच्य क्रियां न विदधीत न कुर्य्यात् अविवेकः विवेकराहित्यम् आपदां विपदां परं प्रधानं पदम्। गुणलुब्धाः गुणवत् पक्षपातिन्यः सम्पदः स्वयमेव विमृश्यकारिणं विवेकिनं वृणुते प्रार्थयन्ते।

तद्देव ! यदि इदानीमसम्भ्रमं क्रियते तदा सन्धाय गम्य ताम्। यतः,

"यद्यप्युपायाश्चत्वारो निर्दिष्टाः साध्यसाधने।
संख्यामात्रं फलं तेषां सिद्धिः साम्नि व्यवस्थिता ॥"१०२

राजाह, "कथमेवं सत्वरं सम्भाव्यते?" मन्त्री ब्रूते "देव! सत्वरं भविष्यति।
यतः, मृद्घटवत् सुखभेद्यो दुःसन्धानश्च दुर्जनो भवति।
सुजनस्तु कनकघटवत् दुर्भेद्यश्चाशु सन्धेयः॥ १०३॥
अपरञ्च, अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः।
ज्ञानलवदुर्विदग्धं ब्रह्माऽपि नरं न रञ्जयति॥ १०४
विशेषतश्च, असौ धर्मज्ञो राजा सर्वज्ञो मन्त्री च ज्ञात

---

(१०२) यदीति। यद्यपि साध्यसाधने अभिष्टसिद्धिविषये चत्वार उपायाः सामदानादयः निर्दिष्टाः तथापि तेषाम् उपायानां संख्या मात्रफलम् अधिकसंख्या दर्शनमात्रं फलं सिद्धिः कार्य्यसाधनं साम्नि उपाये एव व्यवस्थिता निरूपिता।

(१०३) मृदिति। दुर्जनः दुराचारः मृद्घटवत् मृण्मयकुम्भ इव सुखेन अनायासेन भेद्यः पराजेयः दुः कष्टसाध्यं सन्धानं सन्धिर्येन तथोक्तः दुःसन्धेयश्च भवति। सुजनः सत्प्रकृतिलोकस्तु कनकघटव सुवर्णमयकलश इव दुर्भेद्यः आशु शीघ्रं सन्धेयश्च भवति।

(१०४) अज्ञ इति। अज्ञो विद्वान् मूर्ख इति यावत् सुखं यथ तथा आराध्यः प्रसादयितव्यः विशेषज्ञः विवेकधीसम्पन्नश्च सुखतर अधिकसुखं यथा तथा आराध्यते सेव्यते। ज्ञानलवदुर्विदग्धं किञ्चि ज्ञानगर्वितं नरं ब्रह्मापि न रञ्जयति न सन्तो षयति।

मेतन्मया पूर्वं, मेघवर्णवचनात्, तत्कृतकार्य्यसन्दर्शनाच्च। यतः,
कर्म्मानुमेयाः सर्वत्र परोक्षे गुणवृत्तयः।
तस्मात् परोक्षवृत्तीनां फलैः कर्म विभावयेत्॥" १०५

राजाह, "अलमुत्तरोत्तरेण। यथाभिप्रेतमनुष्ठीयताम्" एतन्मन्त्रयित्वा गृध्रो महामन्त्री तत्र यथार्हं कर्त्तव्यमित्युक्त्वा दुर्गाभ्यन्तरं प्रचलितः। ततः प्रणिधिबकेनागत्य राज्ञो हिरण्यगर्भस्य निवेदितम्। "देव! सन्धिं कर्त्तुं महामन्त्री गृध्रोऽस्मत् समीपमागच्छति।" राजहंसो ब्रूते, "मन्त्रिन्! पुनः (ठ) अभिसन्धिना केनचिदत्रागन्तव्यम्। सर्वज्ञो विहस्याह, "देव! न शङ्कास्पदमेतत्। यो महाशयोऽसौ दूरदर्शी। अथ वा (ड) स्थितिरियं मन्दमतीनां कदाचित् शङ्कैव न क्रियते। कदाचित् सर्वशङ्का। तथा हि, सरसि बहुशस्ताराच्छाये क्षणात् परिवञ्चितः
कुमुदविटपान्वेषी हंसो निशासु विचक्षणः।

---

(१०५) कर्म्मेति। सर्वत्र सर्वस्मिन् देशे परोक्षे अप्रत्यक्षे गुणवृत्तयः गुणशालिनः आत्मगुणमप्रख्यापयन्तः कर्म्मणा अनुमेयाः फलैः ज्ञातव्याः। तस्मात् परोक्षवृत्तीनां गूढाकारेङ्गितानां नृपादीनां कर्म्मफलैः मन्त्रणानुयायिभिः कार्य्यैः विभावयेत् निश्चिनुयात्।

(ठ) अभिसन्धिना—व्याजेन। (ड) स्थितिः—नियमः।

(१०६) सरसीति। कुमुदविटपम् अन्विष्यतीति कुमुदविटपान्वेषी कुमुदकुड्मलग्रहणार्थमुद्यतः विचक्षणः सुचतुरः हंसः निशासु रात्रिषु बहुशः अनेकशः सरसि ताराच्छाये नक्षत्रप्रतिबिम्बे क्षणात् परिवञ्चितः

न दशति पुनस्ताराशङ्की दिवापि सितोत्पलं
कुहकचकितो लोकः सत्येऽप्यपायमपेक्षते ॥ १०६ ॥
दुर्जनदूषितमनसः सुजनेष्वपि नास्ति विश्वासः ।
बालः पायसदग्धो दध्यपि ननु फुत्कृतं भुङ्क्ते ॥१०७॥

तद्देव ! यथाशक्ति तत्पूजार्थं रत्नोपहारादिसामग्री सज्जीक्रियताम् ।" तथानुष्ठिते सति स गृध्रो मन्त्री दुर्ग-द्वाराच्चक्रवाकेण सत्कृत्यानीय राजदर्शनं कारितो दत्तासने चोपवेशितः । चक्रवाक उवाच, "मन्त्रिन् ! (ढ) युष्मदायत्तं सर्वं स्वेच्छयोपभुज्यतामिदं राज्यम् ।" राजहंसो ब्रूते, "एवमेव ।" दूरदर्शी ब्रूते, "एवमेवैतत्, किन्त्विदानीं (ण) निष्प्रयोजनम् । यतः,

लुब्धमर्थेन गृह्णीयात् स्तब्धमञ्जलिकर्मणा ।
मूर्खं छन्दानुवृत्तेन याथातथ्येन पण्डितम् ॥ १०८ ॥

---

प्रतारितः सन् नक्षत्रप्रतिबिम्बे कुमुदबुद्ध्या वञ्चितः सन् दिवापि दिव सेऽपि ताराशङ्की नक्षत्रभ्रान्त्या पुनः सितोत्पलं श्वेतपद्मं न दशति न गृह्णाति । कुहकेन छलेन चकितः विभ्रान्तचित्तः लोकः सत्येऽपि प्रकृतेऽपि अपायम् अनिष्टम् अपेक्षते मन्यते आशङ्कते इति यावत् ।

(१०७) दुर्जनेन वञ्चकेन दूषितं कलुषितं मनश्चित्तं यस्य तस्य खलप्रतारितस्येत्यर्थः सुजनेषु साधुषु अपि विश्वासः नास्ति न विद्यते अत्र दृष्टान्तमाह । ननु निश्चितं पायसेन दग्धः पायसदग्धः बाल दध्यपि फुत्कृतं फुत्कृत्वा भुङ्क्ते खादति उष्णभ्रान्त्येति भावः ।

(ढ) युष्मदायत्तं—युष्मदधीनम् ।

(ण) बहुप्रपञ्चनं—बहुवाक्यविस्तारः ।

(१०८) लुब्धमिति : लुब्धं लोभपरवशं जनम् अर्थेन धनेन गृह्णी

न्यच्च, सद्भावेन हरेन्मित्रं सम्भ्रमेण तु बान्धवान् ।

स्त्रीभृत्यान् दानमानैश्च दाक्षिण्येनेतरं जनम् ॥१०९॥

तदिदानीं सन्धाय गम्यताम् महाप्रतापश्चित्रवर्णो
ाजा ।" चक्रवाको ब्रूते, "यथा सन्धानं कार्य्यं तदप्युच्य-
ताम् ।" राजहंसो ब्रूते, "(त) कतिप्रकाराः सन्धीनां
भवन्ति ?" गृध्रो वदति, कथयामि, श्रूयताम् ।

बलीयसाभियुक्तस्तु नृपोऽनन्यप्रतिक्रियः ।

आपन्नः सन्धिमन्विच्छेत् कुर्वाणः कालयापनम् ॥११०॥

कपाल उपहारश्च सन्तानः सङ्गतस्तथा ।

उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः ॥ १११ ॥

---

ात् स्तब्धं गर्वितं जनम् अञ्जलिकर्मणा विनयेन मूर्खं छन्दानुवृत्तेन
भिप्रेतकार्य्यानुष्ठानेन पण्डितं यथातथ्येन यथार्थज्ञापनेन ।

(१०९) सद्भावेनेति । सद्भावेन प्रणयेन मित्रं बन्धुं हरेत् वशी-
यात् सम्भ्रमेण सम्मानेन बान्धवान् आत्मीयान् ज्ञातिप्रभृतीन् स्त्री-
त्यान् भार्य्यानुजीविनः दानमानैः अर्थदानेन आदरेण च दाक्षिण्येन
ानुकूल्येन इतरम् उदासीनं जनम् ।

(त) कतिप्रकाराः—कतिविधाः ।

(११०) बलीयसेति । बलीयसा प्रबलेन शत्रुणा अभियुक्तस्तु नृपो
ाजा नास्ति अन्या सन्धिव्यतिरिक्ता प्रतिक्रिया प्रतिविधानं यस्य स
थाभूतः अनन्योपायस्तथा विपन्नः विपदि पतितः कालयापनं सम-
ातिपातं कुर्वाणः विदधानः सन्धिम् अन्विच्छेत् प्रार्थयेत ।

(१११) कपाल इति । सन्धिप्रकारमाह कपालः उपहारः सन्तानः
ङ्गतः तथा उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः अदृष्टनरः
ादिष्टः आत्मादिष्टः उपग्रहः परिक्रयः तथा उच्छिन्नः तथा पर-

अदृष्टनर आदिष्ट आत्मादिष्ट उपग्रहः ।
परिक्रयस्तथोच्छिन्नस्तथा च परभूषणः ॥ ११२ ॥
स्कन्धोपनेयः सन्धिश्च षोड़शैते प्रकीर्त्तिताः ।
इति षोड़शकं प्राहुः सन्धिं सन्धिविचक्षणाः ॥११३॥
कपालसन्धिर्विज्ञेयः केवलं समसंश्रितः ।
सम्प्रदानाद्भवति य उपहारः स उच्यते ॥ ११४ ॥
सन्तानसन्धिर्विज्ञेयो दारिकादानपूर्वकः ।
सद्भिस्तु सङ्गतः सन्धिर्मैत्रीपूर्वं उदाहृतः ॥ ११५ ॥
यावदायुःप्रमाणस्तु समानार्थप्रयोजनः ।
सम्पत्तौ वा विपत्तौ वा कारणैर्यो न भिद्यते ॥११६॥
सङ्गतः सन्धिरेवायं प्रकृष्टत्वात् सुवर्णवत् ।
तथान्यैः सन्धिकुशलैः काञ्चनः स उदाहृतः ॥ ११७ ॥

---

भूषणः स्कन्धोपनेयः एते षोड़श सन्धयः प्रकीर्त्तिताः कथिताः । सन्धिविचक्षणा इति पूर्वोक्तरूपं षोड़शकं षोड़शविधं सन्धिं प्राहुः कथयन्ति ॥ १११ ॥ ११२ ॥ ११३ ॥

(११४) कपालेति । केवलं समसंश्रितः समनाम्ना प्रसिद्धः सन्धिः कपालसन्धिः विज्ञेयः विदितव्यः । सम्प्रदानात् अर्थप्रदानात् यः भवति स उपहारः उपहारसन्धिः उच्यते कीर्त्यते ।

(११५) सन्तानेति । दारिकादानपूर्वकः कन्यादानारम्भकः कन्याप्रदानेन सम्बन्धेन सम्बन्धः सन्तानसन्धिः विज्ञेयः ज्ञातव्यः । सद्भिः सज्जनैः मैत्रीपूर्वः मित्रतापूर्वकः सन्धिः सङ्गतसन्धिः उदाहृतः कथितः ।

(११६।११७) यावदिति । यावदायुःप्रमाणः यावज्जीवनस्थायी समानं तुल्यम् अर्थस्य प्रयोजनं यस्मिन् स समधनसम्पन्नः सम्पत्तौ सम्पत्काले विपत्तौ विपत्काले वा कारणैः कैश्चिदपि हेतुभिः यः न भिद्यते भेदमाप्नोति । अयम् एतादृश एव सङ्गतः सन्धिः प्रकृष्टत्वात्

द्रव्यात्मकार्य्यसिद्धिं तु समुद्दिश्य क्रियेत यः ।
स उपन्यासकुशलैरुपन्यास उदाहृतः ॥ ११८ ॥
मयास्योपकृतं पूर्वं ममाप्येष करिष्यति ।
इति यः क्रियते सन्धिः प्रतीकारः स उच्यते ॥ ११९ ॥
उपकारं करोम्यस्य ममाप्येष करिष्यति ।
अयं चापि प्रतीकारो रामसुग्रीवयोरिव ॥ १२० ॥
एकार्थां सम्यगुद्दिश्य क्रियां यत्र हि गच्छति ।
सुसंहितप्रमाणस्तु स च संयोग उच्यते ॥ १२१ ॥

---

सर्वोत्कृष्टत्वात् सुवर्णवत् सुवर्णतुल्यः सुवर्णवत् नश्यते नच भिद्यते इति भावः। स सन्धिः अन्यैः अपरैः सन्धिकुशलैः काञ्चनः काञ्चननाम्ना उदाहृतः कथितः ।

(११८) द्रव्येति । यः सन्धिः द्रव्यं सम्पत् आत्मा देहः कार्य्यं कर्त्तव्यं कर्म एतेषां सिद्धिं सम्पादानं समुद्दिश्य अभिप्रेत्य क्रियेत साध्येत उपन्यासकुशलैः स उपन्याससन्धिः उदाहृतः कीर्त्तितः ।

(११९) मयेति । पूर्वं प्राक् मया अस्य जनस्य उपकृतम् उपकारः कृतः एषः पूर्वोपकृतः जनः ममापि करिष्यति उपकारमिति शेषः इति बुद्ध्वा यः सन्धिः क्रियते स्थाप्यते स प्रतीकारः उच्यते ।

(१२०) उपकारमिति । अस्य उपकारं करोमि एष ममापि करिष्यति उपकारमिति शेषः। अयञ्चापि अपरविधः रामसुग्रीवयोरिव प्रतीकारः प्रतीकारसन्धिः ।

(१२१) एकार्थामिति । यत्र सन्धौ एकः अद्वितीयः अर्थः प्रयोजनं यस्याः सा तां क्रियाम् उद्दिश्य गच्छति सन्धिं बध्नाति सुसंहितम् अन्योन्यसंश्लिष्टं प्रमाणं हेतुः यस्य दृढबद्धः स च सन्धिः संयोगः संयोगसन्धिः उच्यते कथ्यते ।

आवयोर्योधमुख्यैस्तु मदर्थः साध्यतामिति ।
यस्मिन् पणस्तु क्रियते स सन्धिः पुरुषान्तरः ॥१२२॥
त्वयैकेन मदीयोऽर्थः सम्प्रसाध्यस्त्वसाविति ।
यत्र शत्रुः पणं कुर्य्यात् सोऽदृष्टपुरुषः स्मृतः ॥१२३॥
यत्र भूम्येकदेशेन पणेन रिपुवर्जितः ।
सन्धीयते सन्धिविद्भिः आदिष्टः स उदाहृतः ॥१२४॥
स्वसैन्येन तु सन्धानमात्मादिष्ट उदाहृतः ।
क्रियते प्राणरक्षार्थं सर्वदानादुपग्रहः ॥ १२५ ॥
कोषांशेनार्द्धकोषेण सर्वकोषेण वा पुनः ।
शिष्टस्य प्रतिरक्षार्थं परिक्रय उदाहृतः ॥ १२६ ॥

---

(१२२) आवयोरिति । आवयोर्द्वयोः योधमुख्यैः योद्धृपुरुषप्रधानैः मदर्थः मत्कार्य्यं साध्यतां सम्पाद्यताम् एतैरेव कार्य्यं सम्पन्नं भवतु वयन्तु उदासीनास्तिष्ठामः इति एवं यस्मिन् सन्धौ पणः प्रतिज्ञा क्रियते स सन्धिः पुरुषान्तरः उच्यते इति शेषः ।

(१२३) त्वयेति । यत्र सन्धौ त्वया एकेन असौ मदीयः अर्थः प्रयोजनं सम्प्रसाध्यः सम्पादनीयः इति पणम् अङ्गीकारं कुर्य्यात् स अदृष्टपुरुषः तन्नामा सन्धिः स्मृतः कथितः ।

(१२४) यत्रेति । यत्र सन्धौ भूम्येकदेशेन राज्यैकदेशदानेन पणेन राज्यांशदानाङ्गीकारेण रिपुवर्जितः शत्रुविरहितः सन् सन्धीयते सन्धेयो भवति स सन्धिविद्भिः सन्धिकुशलैः आदिष्टः उदाहृतः कथितः ।

(१२५) स्वेति । स्वसैन्येन स्वकीयसेनया सह सन्धानम् आत्मादिष्टः तन्नामा सन्धिः उदाहृतः । प्राणरक्षार्थं जीवितरक्षार्थं सर्वदानात् सर्वस्व प्रदानात् यः क्रियते स उपग्रहः उपग्रहनामा सन्धिः ।

(१२६) कोषेति । यत्र कोषांशेन कियद्धनेन अर्द्धकोषेण कोष-

भुवां सारवतीनां तु दानादुच्छिन्न उच्यते ।
भूम्युत्थफलदानेन सर्वेण परभूषणः ॥ १२७ ॥
परिच्छिन्नं फलं यत्र प्रतिस्कन्धेन दीयते ।
स्कन्धोपनेयं तं प्राहुः सन्धिं सन्धिविचक्षणाः ॥१२८॥
परस्परोपकारस्तु मैत्री सम्बन्धकस्तथा ।
उपहारश्च विज्ञेयाश्चत्वारश्चैव सन्धयः ॥ १२९ ॥
एक एवोपहारस्तु सन्धिरेव मतो मम ।
उपहारविभिन्नास्तु सर्वे मैत्रविवर्जिताः ॥ १३० ॥

---

स्वार्द्धसंस्थकधनदानेन सर्वकोषेण वा यः सन्धिः शिष्टस्य सभ्यस्य अमात्यस्य रक्षार्थं परित्राणाय क्रियते स परिक्रयः उदाहृतः कथितः ।

(१२७) भुवामिति । सारवतीनाम् उर्वरत्वादिगुणयुक्तानां भुवां भूमीनां दानात् उच्छिन्नः उच्छिन्ननामा सन्धिः उच्यते । सर्वेण सकलेन भूम्युत्थफलदानेन भूजातशस्यादीनाम् अर्पणेन यः सन्धिः स परभूषणः उच्यते इति शेषः ।

(१२८) परिच्छिन्नमिति । यत्र सन्धौ परिच्छिन्नं क्षेत्रादानीय कृतपरिपाटीकं फलं शस्यं प्रतिस्कन्धेन स्कन्धे वाहयित्वा दीयते अर्प्यते तं सन्धिं सन्धिविचक्षणाः स्कन्धोपनेयं प्राहुः कथयन्ति ।

(१२९) परस्परेति । परस्परोपकारः मैत्री सम्बन्धकः तथा उपहारश्च इति चत्वारः सन्धयः सन्धिभेदाः विज्ञेयाः विदितव्याः ।

(१३०) एक इति । एकः उपहार एव तन्नामैव सन्धिः मम मतः अभिप्रेतः उपहारविभिन्नाः उपहारादन्ये सर्वे सर्वप्रकाराः सन्धयः कैतवविवर्जिताः मैत्रीभावशून्याः ।

अभियोक्ता बलीयस्त्वादलब्ध्वा न निवर्त्तते ।
उपहारादृते तस्मात् सन्धिरन्यो न विद्यते ॥ १३१ ॥

राजाह, "भवन्तो महापण्डिताः, तदत्रास्माकं यथा-कार्य्यमुपदिश्यताम् ।" दूरदर्शी ब्रूते, "आः ! किमुच्यते ?

आधिव्याधिपरीतापैरद्य श्वो वा विनाशिने ।
को हि नाम शरीराय धर्म्मापेतं समाचरेत् ॥ १३२ ॥
जलान्तश्चन्द्रचपलं जीवितं खलु देहिनाम् ।
तथाविधमिति ज्ञात्वा शश्वत् कल्याणमाचरेत् ॥१३३॥

---

(१३१) अभियोक्तेति । बलीयस्त्वात् बलवत्तरत्वात् अभियोक्ता आक्रमणकारी शत्रुः अलब्ध्वा किञ्चिदपि धनादिकम् अप्राप्य न निवर्त्तते न प्रतिगच्छति तस्मात् कारणात् उपहारात् ऋते उपहारं विना अन्योऽन्यविधः सन्धिः न विद्यते नास्ति ।

(१३२) आधीति । आधिः मनस्तापः व्याधिः रोगः परीतापः पुत्रादिप्रियवियोगजनितः क्लेशः तैः उपलक्षिताय अद्य अस्मिन् अहनि श्वो वा आगामिनि दिने वा विनाशिने अवश्यं ध्वंसशीलाय नश्वरायेत्यर्थः शरीराय देहाय शरीरार्थं को हि नाम जनः धर्म्मापेतं धर्म्मविगर्हितं पापमिति यावत् समाचरेत् अनुतिष्ठेत् न कोऽपीत्यर्थः ।

(१३३) जलेति । खलु यतः देहिनां शरीरिणां जीवितं जीवनं जलान्तश्चन्द्रचपलं जलमध्ये प्रतिबिम्बितचन्द्रबिम्बवत् चञ्चलं क्षणविध्वंसीति यावत् तथाविधं तादृशम् अस्थिरमित्यर्थः इति ज्ञात्वा विदित्वा शश्वत् नित्यकालं कल्याणं शुभं पुण्यमिति यावत् आचरेत् कुर्य्यात् ।

मृगतृष्णासमं वीक्ष्य संसारं क्षणभङ्गुरम् ।

सज्जनैः सङ्गतं कुर्य्यात् धर्म्माय च सुखाय च ॥१३४॥

तन्मम सम्मतेन तदेवं क्रियताम् ।

अश्वमेधसहस्रस्य सत्यस्य तुलया धृतम् ।

अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ॥ १३५ ॥

अतः (थ) सत्याभिधानदिव्यपुरःसरं द्वयोरप्येतयोर्भूपालयोः काञ्चनाभिधानसन्धिर्विधीयताम् ।" सर्वज्ञो वदति, "एवमस्तु ।" ततो (द) वस्त्रोपहारादिना स मन्त्री दूरदर्शी पूजितः प्रहृष्टमनाश्चक्रवाकं गृहीत्वा मयूरस्य राज्ञः समीपं गतः । ततः चित्रवर्णेन राज्ञा सर्वज्ञो गृध्रवचनाद्बहुमानदानपुरःसरं सम्भावितः । तथाविधं सन्धिं स्वीकृत्य राजहंससमीपं प्रस्थापितः । दूरदर्शी ब्रूते, "देव ! सिद्धं नः (ध) समीहितम् । इदानीं स्वस्थानमेव विन्ध्याचलं प्रति

---

(१३४) मृगेति । संसारं मृगतृष्णासमं मरीचिकासदृशं मायामयम् असारमित्यर्थः तथा क्षणभङ्गुरं क्षणविध्वंसिनं वीक्ष्य आलोच्य धर्माय धर्मार्थं सुखाय सेवसे च सज्जनैः साधुभिः सह सङ्गतं सन्धिं मित्रतमित्यर्थः कुर्य्यात् ।

(१३५) अश्वमेधेति । अश्वमेधानाम् अश्वमेधयागानां सहस्रं सहस्राश्वमेधयागफलं सत्यं सत्यपरायणता च तुलया मानदण्डेन धृतं तोलितम् अश्वमेधसहस्रात् सहस्राश्वमेधफलात् सत्यमेव अतिरिच्यते गुरुत्वेन अधिकं परीक्ष्यते इत्यर्थः ।

(थ) सत्याभिधानदिव्यपुरःसरं—सत्यकथनाङ्गीकारपूर्वकम् ।

(द) वस्त्रोपहारादिना—वस्त्रोपढौकनप्रदानादिना ।

(ध) समीहितम्—अभीष्टम् ।

गम्यताम्।" अथ सर्वे स्वस्थानं प्राप्य मनोवाञ्छितफलमनुभवन्ति। विष्णुशर्मणोक्तम्, "अपरं किं कथयामि, तदुच्यताम्।" राजपुत्रा ऊचुः, "आर्य्य! तव प्रसादात् (न) सकलराजव्यवहाराङ्ग ज्ञातम्। ततः सुखिनो भूता वयम्।" विष्णुशर्मोवाच, "यद्यप्येवं तथापि अपरमपीदमस्तु।

सन्धिः सर्वमहीभुजां विजयिनामस्तु प्रमोदः सदा
सन्तः सन्तु निरापदः सुकृतिनां कीर्त्तिश्चिरं वर्द्धताम्।
नीतिर्वारविलासिनीव सततं वक्षःस्थले राजतां
वक्त्रं चुम्बतु मन्त्रिणामहरहो भूयान्महानुत्सवः ॥१२६॥

इति श्रीविष्णुशर्मविरचिते हितोपदेशे सन्धिर्नाम चतुर्थः कथासङ्ग्रहः।

समाप्तश्च हितोपदेशः।

---

(न) सकलराजव्यवहाराङ्ग—सकलराजनीतिः।

(१२६) सन्धिरिति। विजयिनां जयशीलानां सर्वमहीभुजां सकलनरपतीनां सन्धिः सदा प्रमोदः प्रीतिकरः अस्तु ते अविरुद्ध सदा सन्धिमिव श्रेयसे परिगणयन्तु इत्यर्थः। सन्तः सज्जनाः निरापदः निर्विघ्नाः सन्तु तिष्ठन्तु, सुकृतिनां विदुषां कीर्त्तिः यशः चिरं नित्यं वर्द्धतां समन्तात् प्रसृतं भवतु। नीतिः नयः वारविलासिनीव वाराङ्गना इव सततं सदा मन्त्रिणां वक्षःस्थले वक्षसि राजतां शोभतां, वक्त्रं मुखं चुम्बतु च सदा हृदये मुखे च निवसतु इत्यर्थः, अहरहः प्रतिदिनं महान् अतिशयः उत्सवः आमोदः भूयात् अस्तु।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यकृता हितोपदेशव्याख्या समाप्ता।

---

५९ वृहदारण्यक सटीक सभाष्य १०
६० सुश्रुत (वैद्यक) ४
६१ शार्ङ्गधर (वैद्यक) १
६२ वेतालपञ्चविंशतिः |||
६३ पातञ्जलदर्शन(सभाष्यसटीक) ४
६४ आत्मतत्त्वविवेक(बौद्धाधिकार) २
६५ मुक्तिकोपनिषत् /
६६ उपमानचिन्तामणि |०
६७ नागानन्द नाटक १
६८ पूर्णप्रज्ञ दर्शनम् सभाष्य २
६९ चन्द्रशेखरचम्पूकाव्य १
७० सामवेदस्य मन्त्रब्राह्मणम् (भाष्यसहितम्) २
७१ सामवेदस्य आरण्यसंहिता सायणाचार्य्यकृत भाष्यसहिता १
७२ विद्धशालभञ्जिकानाटिका सटीक १
७३ कारण्डव्यूह (बौद्धशास्त्र) २
७४ कुवलयानन्द अलङ्कारसटीक ३
७५ प्रियदर्शिका नाटिका सटीक ||
७६ सारस्वत व्याकरण सटीक पूर्वार्द्धम् १|
७७ वासवदत्ता सटीक २
७८ (कालिदासकृत) पुष्पबाणविलास काव्य सटीक ||
७९ महिम्नशतकम्, पदारविन्दशतकम्, स्तुतिशतकम्, मन्दस्मितशतकम्, कटाक्षशतकम् १
८० मनुसंहिता टीका सहित ५
८१ नैषधचरितम् टीका सहित १०
८२ चन्द्रालोक प्राचीन अलङ्कार ||
८३ वीरमित्रोदय (स्मृतिशास्त्र) १०
८४ भावप्रकाश (वैद्यक) १०
८५ प्रबोधचन्द्रोदय नाटक सटीक २
८६ अनर्घराघवनाटक(मुरारिकृत) २
८७ दैवतब्राह्मण सभाष्य १
८८ षड्विंशब्राह्मणम् सभाष्य १
८९ मीमांसापरिभाषा ||०
९० अर्थसंग्रह(लौगाक्षिमीमांसा) ||०
९१ रघुवंश सटीक १||०
९२ मेघदूत सटीक |||०
९३ कथासरित्सागर (सम्पूर्ण) ३
९४ ईश्वरानुमानचिन्तामणि (गङ्गेशोपाध्यायकृत) १
९५ न्यायदर्शन सभाष्य सवृत्ति २||०
९६ सटीक वाल्मीकिरामायण बालकाण्डम् १
९७ साहित्यदर्पण टीकासहित अलङ्कारशास्त्र ४
९८ मदनपालनिघण्टुः (वैद्यक) १
९९ संस्कृतशिक्षामञ्जरीप्रथमभागः/
१०० संस्कृतशिक्षामञ्जरीद्वितीयभागः|०
१०१ साहित्यदर्पणम् (अलङ्कार) १||
१०२ श्रीहर्षचरित बाणभट्टकृत २
१०३ अमरकोष ||
१०४ वेदान्तसूत्र शङ्कराचार्य्यकृत शारीरकभाष्य तथा गोविन्दानन्दकृत टीका सहित १०
१०५ वेदान्तपरिभाषा १
१०६ वेदान्तसारसटीक १
१०७ सटीक निदान (वैद्यक) ४
१०८ कामन्दकी नीतिसार १
१०९ मल्लिकामारुतप्रकरण सटीक २

११० अत्रि, विष्णु, हारीत, याज्ञवल्क्य, उशना, अङ्गिरा, यम, आपस्तम्ब, संवर्त, कात्यायन, बृहस्पति, पराशर, व्यास, शङ्ख, लिखित, दक्ष, गौतम, शातातप, वशिष्ठ प्रणीत संहिता (धर्मशास्त्र) १५

१११ मत्स्यपुराण ६

११२ चरकसंहिता (वैद्यक) सम्पूर्ण १०

११३ रसेन्द्रचिन्तामणि तथा रसरत्नाकर (वैद्यक) ६

११४ भगवद्गीता शङ्करभाष्य आनन्दगिरिकृतटीका तथा सुबोधिनीसमेत ५

११५ शब्दशक्तिप्रकाशिका १

११६ मालतीमाधव सटीक १॥

११७ सटीक भट्टिकाव्य ४

११८ सटीक काव्यप्रकाश ४

११९ सभाष्य शाण्डिल्यसूत्र ॥/

१२० लघुकौमुदीव्याकरणम् ॥०

१२१ महानाटकम् (हनुमन्नाटकम्) १

१२२ दशरूपकम् (अलङ्कार) १॥०

१२३ भोजचम्पू (भोजदेवकृत चम्पूरामायणम्). १

१२४ पञ्चतन्त्रम् सटीक २॥

१२५ मार्कण्डेयपुराणम् ५-

१२६ गोलाध्यायः १

१२७ गणिताध्यायः १

१२८ पञ्चदशी (सटीक) २

१२९ पातञ्जलदर्शनस्य भोजवृत्तिः १

१३० शकुन्तलानाटक सटीक १

१३१ शब्दरूपादर्शः

१३२ बृहत्संहिता वा वाराही संहिता ४

१३३ तर्कामृत (जगदीशकृत)

१३४ द्वात्रिंशत्पुत्तलिका

१३५ उत्तररामचरित सटीक

१३६ शङ्करविजय

१३७ मृच्छकटिकप्रकरण सटीक

१३८ काव्यादर्शसटीक (अलङ्कार)

१३९ अष्टाङ्गहृदय संहिता (वाग्भटकृत वैद्यक)

१४० शुक्रनीति सटीक

१४१ गीतगोविन्द सटीक

१४२ अग्निपुराणम्

१४३ विष्णुपुराणम् सटीक

१४४ मीमांसादर्शन सभाष्य

१४५ अध्यात्मरामायणम् सटीक ४

१४६ महानिर्वाणतन्त्रम् सटीक ४

१४७ मीमांसादर्शनस्य अधिकरणमाला १०

१४८ श्रुतबोधः (छन्दोग्रन्थ)

१४९ बालरामायणनाटक सटीक

१५० लिङ्गपुराणम् ५

१५१ चण्डकौशिकनाटक सटीक ॥०

१५२ चैतन्यचन्द्रोदयनाटक सटीक

१५३ कलापव्याकरणम् २

१५४ कुसुमाञ्जलि सटीक ।०

१५५ संगीतपारिजात १॥०

१५६ वाक्यसार ।०

कलिकाता संस्कृतविद्यामन्दिरे बि, ए, उपाधिधारिणः-

श्रीजीवानन्दविद्यासागर-भट्टाचार्य्यस्य-सकाशात् लभ्यानि ।

